गणेशं गिरीशं विरञ्चं रमेशम् ।
शिवां भास्करं चैव ज्योतिः स्वरूपम् ॥
सदा भक्तियुक्तं जगद्रूपरूपम् ।
नमामः स्मरामो गृणीमो भजामः ॥

नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया । गृहीतशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने ॥ १ ॥ भूयो नमः सद्वृजिनच्छिदेऽसतामसंभवायाऽखिलसत्त्वमूर्तये । पुंसां पुनः पारमहंस्य आश्रये व्यवस्थितानामनुमृग्यदाशुषे ॥ २ ॥ नमो नमस्तेऽस्त्वृषभाय सात्त्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् । निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥ ३ ॥ यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् । लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥ ४ ॥ विचक्षणा यच्चरणोपसादनात्संगं व्युदस्योभयतोऽन्तरात्मनः ।

चिन्दन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः ॥ ५ ॥ तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमंगलाः । क्षेमं न विन्दन्ति विना यदर्पणं। तस्मै सुभद्रश्रवसे नमो नमः ॥६॥ किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः शकादयः । येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥ ७ ॥ स एष आत्मात्मवतामधीश्वरस्त्रयीमयो धर्ममयस्तपोमयः । गतव्यलीकैरजशंकरादिभिर्वितर्क्यलिंगो भगवान्प्रसीदताम् ॥ ८ ॥ श्रियःपतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरापतिः । पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान्सतां पतिः ॥ ९ ॥ यदंघ्र्यनुध्यानसमाधिधौतया धियाऽनुपश्यन्ति हि तत्त्वमात्मनः । वदन्ति चैतत्कवयो यथारुचं स मे मुकुन्दो भगवान्प्रसीदताम् ॥ १० ॥ प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि । स्वलक्षणा प्रादुरभूत्किलाऽऽस्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥ ११ ॥ भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः । भुङ्क्ते गुणान्षोडश षोडशात्मकः

सोऽलंकृपीष्ट भगवान्वचांसि मे ॥ १२ ॥ नमस्तस्मै भगवते वासुदेवाय वेधसे । पपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम् ॥ १३ ॥

इति श्रीभक्तिकौस्तुभे प्रथमाह्निके श्रीभगवद्वन्दना नाम प्रथमः परिच्छेदः ।

नारद उवाच ॥ भवतानुदितप्रायं यशो भगवतोऽमलम् । येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ १ ॥ यथा धर्मादयश्चार्थो मुनिवर्यानुकीर्तिताः । न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ २ ॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् । तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥ ३ ॥ तद्वाग्विसर्गो जनताऽघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ४ ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ ५ ॥ अथो महाभाग भवानमोघदृक्शुचिश्रवाः सत्यरतो धृतव्रतः । उरुक्रमस्याखिलबन्धमुक्तये समाधिनाऽनुस्मर तद्विचेष्टितम् ॥ ६ ॥

ततोऽन्यथा किंचन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः । न कुत्रचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदम् ॥ ७ ॥ जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान्व्यतिक्रमः । यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ ८ ॥ विचक्षणोऽस्यार्हति वेदितुं विभोरनन्तपारस्य निवृत्तितः सुखम् । प्रवर्तमानस्य गुणैरनात्मनस्ततो भवान्दर्शय चेष्टितं विभोः ॥ ९ ॥ त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि । यत्र क्व वा भद्रमभूदमुष्य किं को वाऽर्थ आप्तोऽभजतां स्वधर्मतः ॥१०॥ तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः । तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥ ११ ॥ न वै जनो जातु कथंचनाव्रजेन्मुकुन्दसेव्यन्यवदंग संसृतिम् । स्मरन्मुकुन्दांघ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यतः ॥ १२ ॥ इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवाः । तद्धि स्वयं वेद भवांस्तथाऽपि वै प्रादेशमात्रं भवतः प्रदर्शितम् ॥ १३ ॥

त्वमात्मनात्मानमवेह्यमोघदृक्परस्य पुंसः परमात्मनः कलाम् । अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम् ॥ १४ ॥ इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः । अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥ १५ ॥ एतत्संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम् । यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ १६ ॥ आमयो यश्च भूतानां जायते येन सुव्रत । तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ १७ ॥ एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः । त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥ १८ ॥ यदत्र क्रियते कर्म भगवत्परितोषणम् । ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ १९ ॥ कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् । गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥ २० ॥ त्वमप्यदभ्रश्रुतविश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम् आख्याहि दुःखैर्मुहुरर्दितात्मनां संक्लेशनिर्वाणमुशन्ति नान्यथा ॥२१॥

इति श्रीभक्तिकौस्तुभे प्रथमाह्निके उत्तमश्लोकगुणानुवर्णनं नाम द्वितीयः परिच्छेदः ।

यम उवाच । परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद्यत्र विश्वम् । यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकः ॥१॥ यो नामभिर्वाचि जनान्निजायां बध्नाति तन्त्यामिव दामभिर्गाः । यस्मै बलिं त इमे नामकर्मनिबन्धबद्धाश्चकिता वहन्ति ॥ २ ॥ अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः । आदित्यविश्वे वसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः ॥ ३ ॥ अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः । यस्येहितं न विदुः स्पृष्टमायाः -सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ ४ ॥ यं वै न गोभिर्मनसाऽसुभिर्वा हृदा गिरा वाऽसुभृतो विचक्षते । आत्मानमन्तर्हृदि सन्तमात्मनां चक्षुर्यथैवाकृतयस्ततः परम् ॥ ५ ॥ तस्यात्मतन्त्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः । प्रायेण दूता इह वै मनोहराश्चरन्ति तद्रूपगुणस्वभावाः ॥ ६ ॥ भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिंगानि महाद्भुतानि । रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥ ७ ॥ धर्मं तु साक्षाद्भगवत्प्रणीतं

न वै विदुर्ऋषयो नापि देवाः । न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणादयः ॥ ८ ॥ स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः । प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ ९ ॥ द्वादशैते विजानीमो धर्मं भागवतं भटाः । गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते ॥१०॥ एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ॥ भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥११॥ नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ॥ अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥ १२ ॥ एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् ॥ विक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ १३ ॥ प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययाऽलम् ॥ त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः ॥१४॥ एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम् ॥ ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पातकं तदपि हन्त्युरुगायवादः ॥ १५ ॥ ते देवसिद्धपरिगीतपवित्रगाथा

ये साधवः समदृशो भगवत्प्रपन्नाः । तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्नैषां वयं न च वयः प्रभवाम दण्डे ॥ १६ ॥ तानानयध्वमसतो विमुखान्मुकुन्दपादारविन्दमकरन्दरसादजस्रम् । निष्किञ्चनैः परमहंसकुलै रसज्ञैर्जुष्टाद् गृहे निरयवर्त्मनि बद्धतृष्णान् ॥१७॥ जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम् । कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ १८ ॥ तत्क्षम्यतां स भगवान् पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः । स्वानामहो न विदुषां रचिताञ्जलीनां क्षान्तिर्गरीयसि नमः पुरुषाय भूम्ने ॥१९॥ तस्मात्संकीर्तनं विष्णोर्जगन्मंगलमंहसाम् । महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतिम् ॥२०॥ शृण्वतां गृणतां वीर्याण्युद्दामानि हरेर्मुहुः । यथा सुजातया भक्त्या शुध्येन्नात्मा व्रतादिभिः ॥२१॥ कृष्णांघ्रिपद्ममधुलिड् न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेषु । अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव रजः पुनः स्यात् ॥२२॥

इति श्रीभक्तिकौस्तुभे प्रथमा आह्निके श्रीमद्भगवन्नाम माहात्म्यं नाम तृतीयः परिच्छेदः ॥

उद्धव उवाच। वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः। तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥ १ ॥ श्रीभगवानुवाच ॥ याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा। यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि ॥२॥ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम्। पारम्पर्येण केषांचित्पाखण्डमतयोऽपरे ॥ ३ ॥ मन्मायामोहितधियः पुरुषाः पुरुषर्षभ। श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचि ॥४॥ धर्ममेके यशश्चान्ये कामं सत्यं दमं शमम्। अन्ये वदन्ति स्वार्थं वा ऐश्वर्यं त्यागभोजनम् ॥५॥ केचिद्यज्ञं तपोदानं व्रतानि नियमान्यमान्। आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः। दुःखोदर्कास्तमोनिष्ठाः क्षुद्रानन्दाः शुचार्पिताः ॥ ६ ॥ मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः। मयात्मना सुखं यत्तत् कुतः स्याद्विषयात्मनाम् ॥ ७ ॥ अकिंचनस्य दान्तस्य शान्तस्य समचेतसः। मया संतुष्टमनसः सर्वाः सुखमयादिशः ॥ ८ ॥ न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्। न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ ९ ॥ न तथा मे प्रियतम

आत्मयोनिर्न शंकरः। न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥१०॥ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम्। अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः ॥ ११ ॥ निष्किंचना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः। कामैरनालब्धधियो जुषन्ति यत् तन्नैरपेक्ष्यं न विदुः सुखं मम ॥ १२ ॥ बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः। प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥ १३ ॥ यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात्। तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥ १४ ॥ न साधयति मां योगो न सांख्यं धर्म उद्धव। न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ १५ ॥ भक्त्याऽहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम्। भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥ १६ ॥ धर्मः सत्यदयोपेतो विद्या वा तपसान्विता। मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि ॥ १७ ॥ कथं विना रोमहर्षं द्रवता चेतसा विना। विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः ॥ १८ ॥ वाग् गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति

कचिच्च । विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥१९॥ यथाऽग्निना हेम मलं जहाति ध्मातं पुनः स्वं भजते स्वरूपम् । आत्मा च कर्मानुशयं विधूय मद्भक्तियोगेन भजत्यथो माम् ॥ २० ॥ यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः । तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥२१॥ विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते । मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ २२ ॥ तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् । हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥ २३ ॥ न रोधयति मां योगो न सांख्यं धर्म एव न । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥ २४ ॥ व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः । यथाव-रुन्धे सत्संगः सर्वसंगापहो हि माम् ॥ २५ ॥ सत्संगेन हि दैतेया यातुधाना मृगाः खगाः । गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ॥ २६ ॥ विद्या धरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मि-न्युगेऽनघ ॥ २७ ॥ बहवोमत्पदं प्रासास्त्वाष्ट्रकायाधवादयः । वृषपर्वा

वलिर्बाणो मयश्चाथ विभीषणः ॥ २८ ॥ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे ॥ २९ ॥ ते नाधीतश्रुतिगणा नोपासितमहत्तमाः । अव्रतातप्ततपसः सत्संगान्मामुपागताः ॥ ३० ॥ केवलेन हि भावेन गोप्यो गावो नगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥३१॥ यं न योगेन सांख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ३२॥ रामेण सार्द्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः । विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥३३॥ तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण। क्षणार्धवृत्ताः पुनरंग तासां हीना मया कल्पसमा बभूवुः ॥३४॥ ता नाविदन्मय्यनुषंगबद्धधियः स्वमात्मानमदस्तथेदम् । यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥३५॥ मत्कामा रमणं जारमस्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः संगाच्छतसहस्रशः ॥ ३६ ॥ तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम्। प्रवृत्तं च निवृत्तं च

श्रोतव्यं श्रुतमेव च ॥ ३७ ॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम्। याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ ३८ ॥ कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं च यत्। प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥३९॥ वनं तु सात्त्विको वासो ग्रामो राजस उच्यते। तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ ४० ॥ सात्त्विकः कारकोऽसंगी रागान्धो राजसः स्मृतः। तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥४१॥ सात्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी। तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥४२॥ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम्। राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाऽशुचि ॥ ४३ ॥ सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम्। तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ ४४ ॥ द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः। श्रद्धावस्था कृतिर्निष्ठा त्रैगुण्यः सर्व एव हि ॥ ४५ ॥ तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम्। गुणसंगं विनिर्धूय मां भजन्तु विचक्षणाः ॥ ४६ ॥ संगं न कुर्यादसतां शिश्नोदरतृपां

क्वचित्। तस्यानुगस्तमस्यन्धे पतत्यन्धानुगाऽन्धवत् ॥ ४७ ॥ ततो दुःसंग-मुत्सृज्य सत्सु सज्जेत बुद्धिमान्। सन्त एतस्य छिन्दन्ति मनोव्यासंगमुक्तिभिः ॥ ४८ ॥ सन्तोऽनपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः। निर्ममा निरहंकारा निर्द्वन्द्वा निष्परिग्रहाः ॥ ४९ ॥ तेषु नित्यं महाभाग महाभागेषु मत्कथाः। संभवन्ति हि ता नृणां जुषतां प्रपुनन्त्यघम् ॥ ५० ॥ ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः। मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥ ५१ ॥ भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते। मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥ ५२ ॥ यथोपश्रयमाणस्य भगवन्तं विभावसुम्। शीतं भयं तमोऽप्येति साधून् संसेवतस्तथा ॥ ५३ ॥ निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायनम्। सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् ॥ ५४ ॥ अन्नं हि प्राणिनां प्राण आर्तानां शरणं त्वहम्। धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग् बिभ्यतोऽरणम् ॥ ५५ ॥ सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः। देवता बान्धवाः सन्तः सन्त आत्माऽहमेव

च ॥ ५६ ॥ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ५७ ॥ नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः । उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ ५८ ॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः । यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ ५९ ॥ प्रोक्तेन भक्तियोगेन भजतो माऽऽसकृन्मुनेः । कामा हृदय्या नश्यन्ति सर्वे मयि हृदिस्थिते ॥ ६० ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चाऽस्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥ ६१ ॥ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ६२ ॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ६३ ॥ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥ ६४ ॥ न किंचित्साधवो धीरा भक्ता ह्येकान्तिनो मम । वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ६५ ॥

नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् । तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे
भवेत् ॥ ६६ ॥ न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः । साधूनां सम-
चित्तानां बुद्धेः परमुपेयुषाम् ॥ ६७ ॥ एवमेतान्मयादिष्टाननुतिष्ठन्ति मे
पथः । क्षेमं विन्दतिमत्स्थानं यद्ब्रह्म परमं विदुः ॥ ६८ ॥

इति श्रीभक्तिकौस्तुभे सत्सङ्गमाहात्म्यं नाम द्वितीयः आह्निकः ॥

एतां महामायां तरन्त्येव ये विष्णुमेव भजन्ति नान्ये तरन्ति कदा-
चन ॥ १॥ तत्तत्कर्मफलवासनाजालवासितान्तःकरणानां पुनः पुनस्तत्तत्क-
र्मफलविषयप्रवृत्तिरेव जायते । संसारनिवृत्तिमार्गप्रवृत्तिः कदापि न जाय-
ते । तस्मादनिष्टमेव इष्टमिव भाति। इष्टमेव अनिष्टमिव भाति अनादिसंसार-
विपरीतभ्रमात् ॥२॥ तस्मात् सर्वेषां जीवानामिष्टविषये बुद्धिः सुखबुद्धिर्दुःख-
बुद्धिश्च भवति । परमार्थतस्त्वबाधितब्रह्मसुखविषये प्रवृत्तिरेव न जायते ।
तत् स्वरूपज्ञानाभावात् ॥ ३ ॥ तत्किमिति न विद्यते । कथं बन्धः कथं मोक्ष
इति विचाराभावाच्च । तत्कथमिति । अज्ञानप्राबल्यात् । कस्मादज्ञानप्रा-

वत्यमिति । भक्तिज्ञानवैराग्यवासनाभावाच्च । तदभावः कथमिति । अत्यन्तान्तःकरणमलिनविशेषात् ॥ ४ ॥ अतः संसारतरणोपायः कथमिति । देशिकस्तमेव कथयति । सकलवेदशास्त्रसिद्धान्तरहस्यजन्माभ्यस्तात्यन्तोत्कृष्टसुकृतपरिपाकवशात् सद्भिः संगो जायते । तस्माद्विधिनिषेधविवेको भवति । ततः सदाचारप्रवृत्तिर्जायते । सदाचारादखिलदुरितक्षयो भवति । तस्मादन्तःकरणमतिविमलं भवति । ततः सद्गुरुकटाक्षमन्तःकरणमाकांक्षति ॥ ५ ॥ तस्मात् सद्गुरुकटाक्षलेशविशेषेण सर्वसिद्धयः सिध्यन्ति । सर्वबन्धाः प्रविनश्यन्ति । श्रेयोविघ्नाः सर्वे प्रलयं यान्ति । सर्वाणि श्रेयांसि स्वयमेवायान्ति ॥ ६ ॥ यथा जात्यन्धस्य रूपज्ञानं न विद्यते तथा गुरूपदेशेन विना कल्पकोटिभिस्तत्त्वज्ञानं न विद्यते । तस्मात् सद्गुरुकटाक्षलेशविशेषेण अचिरादेव तत्त्वज्ञानं भवति ॥ ७ ॥ यदा सद्गुरुकटाक्षो भवति तदा भगवत्कथाश्रवणध्यानादौ श्रद्धा जायते । तस्माद्धृदयस्थितानादिदुर्वासनाग्रन्थिविनाशो भवति । ततो हृदयस्थिताः कामाः सर्वे विनश्यन्ति । तस्मा-

हृदयपुण्डरीककर्णिकायां परमात्माविर्भावो भवति ॥ ८ ॥ ततो दृढतरा वैष्णवी भक्तिर्जायते । ततो वैराग्यमुदेति । वैराग्याद्बुद्धिविज्ञानाविर्भावो भवति । अभ्यासात्तज्ज्ञानं क्रमेण परिपक्वं भवति । पक्वविज्ञानाज्जीवन्मुक्तो भवति । ततः शुभाशुभकर्माणि सर्वाणि सवासनानि नश्यन्ति ॥ ९ ॥ ततो दृढतरशुद्धसात्त्विकवासनया भक्त्यतिशयो भवति । भक्त्यतिशयेन नारायणः सर्वमयः सर्वावस्थासु विभाति । सर्वाणि जगन्ति नारायणमयानि प्रविभान्ति । नारायणव्यतिरिक्तं न किंचिदस्ति ॥ १० ॥ तस्मात्सर्वेषामधिकारिणामनधिकारिणां भक्तियोग एव प्रशस्यते । भक्तियोगो निरुपद्रवः । भक्तियोगान्मुक्तिः । बुद्धिमतामनायासेन अचिरादेव तत्त्वज्ञानं भवति ॥११॥ तत्कथमिति । भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान् सर्वान् परिपालयति । सर्वाभीष्टान् प्रयच्छति । मोक्षं दापयति ॥ १२ ॥ चतुर्मुखादीनां सर्वेषामपि विना विष्णुभक्त्या कल्पकोटिभिर्मोक्षो न विद्यते ॥ १३ ॥ कारणेन विना कार्यं नोदेति । भक्त्या विना ब्रह्मज्ञानं कदापि न

जायते ॥ १४ ॥ तस्मात्त्वमपि सर्वोपायान् परित्यज्य भक्तिमाश्रय। भक्तिनिष्ठो भव। भक्तिनिष्ठो भव। भक्त्या सर्वसिद्धयः सिध्यन्ति। भक्त्याऽसाध्यं न किंचिदस्ति ॥ १५ ॥ मदुपासकः सर्वोत्कृष्टः स भवति। मदुपासनया सर्वमंगलानि भवन्ति। मदुपासनया सर्वं जयति। मदुपासकः सर्ववन्द्यो भवति। मदीयोपासकस्यासाध्यं न किंचिदस्ति ॥१६॥ सर्वे बन्धाः प्रविनश्यन्ति। सद्वृत्तमिव सर्वे देवास्तं सेवन्ते। महाश्रेयांसि च सेवन्ते। मदुपासकस्तस्मान्निरतिशयाद्वैतपरमानन्दलक्षणपरब्रह्मभवति ॥१७॥

इति श्रीभक्तिकौस्तुभे तृतीये आह्निके परममोक्षमार्गनिरूपणं नाम प्रथमः परिच्छेदः।

शुको मुक्तो वामदेवोऽपि मुक्तस्ताभ्यां विना मुक्तिभाजो न सन्ति। शुकमार्गं येऽनुसरन्ति धीराः सद्यो मुक्तास्ते भवन्तीहलोके ॥ १ ॥ वामदेवं येऽनुसरन्ति नित्यं मृत्वा जनित्वा च पुनःपुनस्तत्। ते वै लोके क्रममुक्ता भवन्ति योगैः सांख्यैः कर्मभिः सत्त्वयुक्तैः ॥ २ ॥ शुकश्च वामदेवश्च द्वे

सृती देवनिर्मिते। शुको विहंगमः प्रोक्तो वामदेवः पिपीलिका ॥ ३ ॥ अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन वा। महावाक्यविचारेण सांख्ययोगसमाधिना ॥४॥ विदित्वा स्वात्मनो रूपं संप्रज्ञातसमाधितः। शुकमार्गेण विरजाः प्रयान्ति परमं पदम् ॥ ५ ॥ यमाद्यासनजायासहठाभ्यासात्पुनःपुनः। विघ्नबाहुल्यसंजात अणिमादिवशादिह ॥ ६ ॥ अलब्ध्वापि फलं सम्यक् पुनर्भूत्वा महाकुले। पुनर्वासनयैवायं योगाभ्यासं पुनश्चरन् ॥७॥ अनेकजन्माभ्यासेन वामदेवेन वै पथा। सोऽपि मुक्तिं समाप्नोति तद्विष्णोः परमं पदम्॥ ८ ॥ द्वाविमावपिपन्थानौ ब्रह्मप्राप्तिकरौ शिवौ। सद्योमुक्तिप्रदश्चैकः क्रममुक्तिप्रदः परः। अत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ९ ॥ यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्तते। तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः ॥ १० ॥ खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः। सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ॥११॥

इति श्रीभक्तिकौस्तुभे तृतीये आह्निके मुरारेस्तृतीयः पन्था नाम द्वितीयः परिच्छेदः।

एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन्बहुधा यो विभाति। तं पीठं येऽनुभजन्ति धीरास्तेषां सिद्धिः शाश्वती नेतरेषाम् ॥१॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तं पीठगं येऽनुभजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥२॥ एतद्विष्णोः परमं पदं ये नित्योद्युक्तास्तं यजन्ति न कामात्। तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव ॥३॥ यो ब्रह्माणं विदधाति पूर्वं यो विद्यां तस्मै गोपायति स्म कृष्णः। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुः शरणं व्रजेत् ॥४॥ ॐ नमो विश्वस्वरूपाय विश्वस्थित्यन्तहेतवे। विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥५॥ नमो विज्ञानरूपाय परमानन्दरूपिणे। कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥ ६ ॥ नमः कमलनेत्राय नमः कमलमालिने। नमः कमलनाभाय कमलापतये नमः ॥ ७ ॥ बर्हापीडाभिरामाय रामायाकुण्ठमेधसे। रमामानसहंसाय गोविन्दाय नमोनमः ॥ ८ ॥ कंसवंशविनाशाय केशिचाणूरघातिने। वृषभध्वजवन्द्याय पार्थसारथये नमः ॥ ९ ॥

वेणुनादविनोदाय गोपालायाहिमर्दिने । कालिन्दीकूललोलाय लोलकुण्डलधारिणे ॥१०॥ बल्लवीवदनाम्भोजमालिने नृत्यशालिने । नमः प्रणतपालाय श्रीकृष्णाय नमो नमः ॥११॥ नमः पापप्रणाशाय गोवर्द्धनधराय च । पूतनाजीवितान्ताय तृणावर्तासुहारिणे ॥१२॥ निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे । अद्वितीयाय महते श्रीकृष्णाय नमोनमः ॥१३॥ प्रसीद परमानन्द प्रसीद परमेश्वर । आधिव्याधिभुजंगेन दष्टं मामुद्धर प्रभो ॥ १४ ॥ श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर । संसारसागरे मग्नं मामुद्धर जगद्गुरो ॥१५॥ केशव क्लेशहरण नारायण जनार्दन । गोविन्द परमानन्द मां समुद्धर माधव ॥१६॥ तस्मात्कृष्ण एव परमो देवस्तं ध्यायेत् । तं रसयेत् । तं यजेत् । तं भजेत् ॥ ॐ ॥ तत्सत् ॥ १७ ॥

इति श्रीभक्तिकौस्तुभे तृतीये आह्निके मुमुक्षोः शरणागतिर्नाम तृतीय परिच्छेदः ॥

राम केचिन्मुनिश्रेष्ठा मुक्तिरेकेति चक्षिरे । केचित्त्वन्नामभजनात्काश्यां तारोपदेशतः ॥ १ ॥ अन्येतु सांख्ययोगेन भक्तियोगेन चापरे । अन्ये वेदान्तवाक्यार्थविचारात् परमर्षयः ॥ २ ॥ सालोक्यादिविभागेन चतुर्धा मुक्तिरीरिता । सहोवाच श्रीरामः । कैवल्यमुक्तिरेकैव पारमार्थिकरूपिणी ॥ ३ ॥ दुराचाररतो वापि मन्नामभजनात् कपे । सालोक्यमुक्तिमाप्नोति न तु लोकान्तरादिकम् ॥४॥ काश्यांतु ब्रह्मनालेऽस्मिन् मृतो मत्तारमाप्नुयात् । पुनरावृत्तिरहितां मुक्तिं प्राप्नोति मानवः ॥ ५ ॥ यत्र कुत्रापि वा काश्यां मरणे स महेश्वरः । जन्तोर्दक्षिणकर्णे तु मत्तारं समुपादिशेत् ॥६॥ निर्धूताशेषपापौघो मत्सारूप्यं भजत्ययम् । सैव सालोक्यसारूप्यमुक्तिरित्यभिधीयते ॥ ७ ॥ सदाचाररतो भूत्वा द्विजो नित्यमनन्यधीः । मयि सर्वात्मके भावो मत्सामीप्यं भजत्ययम् । सैव सालोक्यसारूप्यसामीप्या मुक्तिरिष्यते ॥८॥ गुरूपदिष्टमार्गेण ध्यायन्मद्गुणमव्ययम् । मत्सायुज्यं द्विजः सम्यग्भजेद्भ्रमरकीटवत् ॥९॥ सैव सायुज्यमुक्तिः स्याद्ब्रह्मा-

नन्दकरी शिवा । चतुर्विधा तु या मुक्तिर्मदुपासनया भवेत् ॥१०॥ एवमष्टो-
त्तरशतं भावनात्रनाशनम् । ज्ञानवैराग्यदं पुंसां वासनात्रयनाशनम्॥११॥
पूर्वोत्तरेषु विहिततत्तच्छान्तिपुरःसरम् । वेदविद्याव्रतस्नातदेशिकस्य मुखात्
स्वयम् ॥ १२ ॥ गृहीत्वाष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः । प्रारब्धक्षयपर्यन्तं
जीवन्मुक्ता भवन्ति ते ॥ १३ ॥ ततः कालवशादेव प्रारब्धे तु क्षयं गते ।
वैदेहीं मामकीं मुक्तिं यान्ति नास्त्यत्र संशयः ॥ १४ ॥ सर्वोपनिषदां मध्ये
सारमष्टोत्तरं शतम् । सकृच्छ्रवणमात्रेण सर्वाघौघनिकृन्तनम् ॥१५॥ मयोप-
दिष्टं शिष्याय तुभ्यं पवननन्दन । इदं शास्त्रं मयादिष्टं गुह्यमष्टोत्तरं शतम् ।
ज्ञानतोऽज्ञानतो वापि पठतां बन्धमोचकम् ॥१६॥ राज्यं देयं धनं देयं
याचतः कामपूरणम् । इदमष्टोत्तरशतं न देयं यस्य कस्यचित् ॥१७॥ नास्ति-
काय कृतघ्नाय दुराचाररताय वै । मद्भक्तिविमुखायापि शास्त्रगर्तेषु मुह्यते ।
गुरुभक्तिविहीनाय दातव्यं न कदाचन ॥ १८ ॥ सेवापराय शिष्याय हित-
पुत्राय मारुते । मद्भक्ताय सुशीलाय कुलीनाय सुमेधसे ॥१९॥ सम्यक्

परीक्ष्य दातव्यमेवमष्टोत्तरं शतम्। यः पठेच्छृणुयाद्वापि स मामेति न संशयः ॥ २० ॥ उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं मतम्। तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥२१॥ शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित्। पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥२२॥ अशुभेषु समाविष्टं शुभेष्वेवावतारयेत्। पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥२३॥ वासनाक्षयविज्ञानमनोनाशा महामते। समकालं चिराभ्यस्ता भवन्ति फलदा मताः ॥२४॥ त्रय एवं समं यावन्नाभ्यस्ताश्च पुनः पुनः। तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः ॥२५॥ एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम्। तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकीर्तिता इव ॥ २६ ॥ त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः। निःशंकमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ २७ ॥ जन्मान्तरशताभ्यस्ता मिथ्यासंसारवासना। सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ २८ ॥ तस्मात् सौम्य प्रयत्नेन पौरुषेण विवेकिना। भोगेच्छां दूरतस्त्यक्त्वा त्रयमेव समाश्रय ॥ २९ ॥ वासनां

सम्परित्यज्य मयि चिन्मात्रविग्रहे। यस्तिष्ठति गतव्यग्रः सोऽहं सच्चित्सुखात्मकः ॥३०॥ समाधिमथ कार्याणि मा करोतु करोतु वा। हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ ३१ ॥ नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः। न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥ ३२ ॥ सन्त्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम्। वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः। प्रवर्तते बहिः स्वाऽर्थे वासनामात्रकारणम् ॥ ३३ ॥ तावन्निशीव वेताला वल्गन्ति हृदि वासनाः। एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ॥ ३४ ॥ प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः। पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥ ३५ ॥ हस्तं हस्तेन संपीड्य दन्तैर्दन्तान् विचूर्ण्य च। अंगान्यंगैः समाक्रम्य जयेदादौ स्वकं मनः ॥ ३६ ॥ उपविश्योपविश्यैकांचिन्तकेन मुहुर्मुहुः। न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम्। अंकुशेन विना मत्तो यथा दुष्टो मतंगजः ॥ ३७ ॥ अध्यात्मविद्याधिगमः साधुसंगतिरेव च। वासनासम्परित्यागः प्राणस्पन्दनिरोधनम्। एतास्ता युक्तयः

पुष्टाः सन्ति चित्तजये किल ॥ ३८ ॥ सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये । चेतसो दीपमुत्सृज्य विचिन्वन्ति तमोऽञ्जनैः ॥ ३९ ॥ विमूढाः कर्त्तु-मुद्युक्ता ये हठाच्चेतसो जयम् । ते निबध्नन्ति नागेन्द्रम् उन्मत्तं बिसतन्तुभिः ॥४०॥ दृढभावनया त्यक्तपूर्वापरविचारणम् । यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ४१ ॥ भावितं तीव्रसंवेगादात्मना यत्तदेव सः । भवत्याशु कपिश्रेष्ठ विगतेतरवासनः ॥ ४२ ॥ तादृग्रूपो हि पुरुषो वासनाविवशीकृतः । संपश्यति यदैवैतत्सद्वस्त्विति विमुह्यति ॥ ४३ ॥ वासनावेगवैचित्र्यात् स्वरूपं न जहाति तत् । भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥४४॥ वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा । मलिना जन्महेतुः स्यात् शुद्धा जन्मविनाशिनी ॥ ४५ ॥ अज्ञानसुघनाकारा घनाहंकारशालिनी । पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः । पुनर्जन्मांकुरं त्यक्त्वा स्थितिः संभृष्टबीजवत् ॥४६॥ बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् । अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरम् ॥ ४७ ॥ अधीत्य चतुरो वेदान् दर्पापहृत

चेतनः । ब्रह्मतत्वं न जानाति दर्वीपाकरसं यथा ॥ ४८ ॥ स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् । विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ४९ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ ५० ॥ बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः । वासनां संपरित्यज्य मोक्षार्थित्वमपि त्यज ॥ ५१ ॥ मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः । मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ॥ ५२ ॥ ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि । अन्तःशान्तः समस्नेहो भव चिन्मात्रवासनः ॥ ५३ ॥ तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् । शेषस्थिरसमाधानो मयि त्वं भव मारुते ॥ ५४ ॥ अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहन् । दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ॥ ५५ ॥ ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्यपूर्णमादाय पूर्णमेवावशिष्यते । ॐ शान्तिः शान्तिः शान्तिः । हरिः ॐ तत्सत् ॥ ५६ ॥

इति श्रीभक्तिकौस्तुभे मोक्षप्रकारनिर्णयो नाम चतुर्थः आह्निकः ।

कृषिस्तद्भक्तिवचनो नश्च तद्दास्यकारकः। भक्तिदास्यप्रदाता यः स कृष्णः परिकीर्तितः ॥ १ ॥ कृषिश्च परमानन्दे णश्च तद्दास्यकर्मणि। तयोर्दाता च यो देवस्तेन कृष्णः प्रकीर्तितः ॥ २ ॥ ककाराद्भीतिमापन्ना यमदूता भवन्ति हि। ऋकारात् पातकानि स्युः पलायन पराणि च ॥ ३ ॥ षकारोच्चारणात् सर्वे भूतराक्षसपन्नगाः। विद्रवन्ति भयार्त्ता वै णकाराद्रोगराशयः। अकारात् सर्वतः शान्तिरेप कल्पद्रुमः प्रभुः ॥ ४ ॥ कृष्णेति मंगलं नाम यस्यवाचि प्रवर्तते। भस्मीभवति तस्याशु महापातककोटयः ॥ ५ ॥ परिणामाशुभं कर्म भ्रांतानां मधुरान् मधु। करोति सूदनं यो हि स एव मधुसूदनः ॥ ६ ॥ मुक्तिश्च द्विविधा साध्वि श्रुत्युक्ता सर्वसम्मता। निर्वाणपददात्री च हरिभक्तिप्रदा नृणाम् ॥ ७ ॥ मुक्तिश्च सेवारहिता भक्तिः सेवाविवर्द्धिनी। हरिभक्तिस्वरूपां च मुक्तिं वाञ्छति वैष्णवाः ॥८॥ वैष्णवाश्चरणांभोजे परमानन्दसंयुताः। सारात्सारतरा भक्तिरसपीयूषपायिनः ॥ ९ ॥ पुराणेषु च वेदेषु चेतिहासेषु सर्वतः। निरूपितं सारभूतं कृष्णपा-

दांघ्रुजार्च्चनम् ॥ १० ॥ दानानां च व्रतानां च सिद्धीनां तपसां परम्। योगानां चैव वेदानां कीर्तनं सेवनं हरेः ॥ ११ ॥ मुक्तत्वममरत्वं वा सर्वसिद्धित्वमेव वा। श्रीकृष्णसेवनस्यैव कलां नार्हति षोडशीम् ॥ १२ ॥ ब्राह्मणाद्वैष्णवादन्ये सकामाः सर्वजन्मसु। न तेषां निर्मला बुद्धिर्विष्णुभक्तिविवर्जिता ॥ १३ ॥ अवैष्णवाद्‌द्विजाद्विप्र चण्डालो वैष्णवो वरः। सगणः श्वपचो मुक्तो ब्राह्मणो नरकं व्रजेत् ॥ १४ ॥ हरिभक्तिविहीनाश्च महाहंकारसंयुताः। स्वप्रशंसारता धूर्त्ताः शठा वै साधुनिन्दकाः ॥ १५ ॥ वरं हुतवहज्वालं भक्तो वाञ्छति पिञ्जरम्। वरं च कन्टके वासं वरं च विषभक्षणम् ॥ १६ ॥ हरिभक्तिविहीनानां न संगं नाशकारणम्। स्वयं नष्टो भक्तिहीनो बुद्धिभेदं करोति च ॥ १७ ॥ श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम्। वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ॥ १८ ॥ स कथं ब्राह्मणो यस्तु हरिभक्तिविवर्जितः। स कथं श्वपचो यस्तु भगवद्भक्तिमानसः ॥ १९ ॥ स्मृतः संभाषितो वापि पूजितो वा द्विजोत्तम। पुनाति

भगवद्भक्तश्चांडालोऽपि यदृच्छया ॥ २० ॥ यन्नामधेय श्रवणानुकीर्त्तनात् यत् प्रह्वणाद्यत् स्मरणादपि क्वचित् । श्वादोऽपि सद्यः सवनाय कल्पते कुतः पुनस्ते भगवन्नुदर्शनात् ॥२१ ॥ अहो बत श्वपचोऽतो गरीयान् । यज्जिह्वाऽग्रे वर्त्तते नाम तुभ्यम् । तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ते ये ॥ २२ ॥ येषां चित्ते वसेद्भक्तिः सर्वदा प्रेमरूपिणी । न ते पश्यन्ति कीनाशं स्वप्नेऽप्यमलमूर्त्तयः ॥ २३ ॥ न प्रेतो न पिशाचो वा राक्षसो वासुरोऽपि वा । भक्तियुक्तमनस्कानां स्पर्शने न प्रभुर्भवेत् ॥ २४ ॥ न तपोभिर्न वेदैश्च न ज्ञानेन न कर्मणा । हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः ॥ २५ ॥ अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः । अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा ॥ २६ ॥ नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम् । द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ २७ ॥ यथाहि पुरुषो भारं शिरसा गुरुमुद्वहन् । स्कन्धेन च समाधत्ते तथा सर्वाः प्रतिक्रियाः ॥ २८ ॥ वासुदेवे भगवति भक्तियोगः समाहितः । सध्रीचीनेन वैराग्यं ज्ञानं च जनयि-

ष्यति ॥ २६ ॥ सोऽचिरादेव राजर्षे स्यादच्युत कथाश्रयः । शृण्वतः
श्रद्दधानस्य नित्यदा स्यादधीयतः ॥ ३० ॥ यत्र भागवता राजन् साधवो
विशदाशयाः । भगवद्गुणानुकथन श्रवणव्यग्रचेतसः ॥ ३१ ॥ तस्मिन्
महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति । ता ये पिब-
न्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥ ३२ ॥
एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः । न करोति हरेर्नूनं कथामृतनिधौ
रतिम् ॥ ३३ ॥ प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः । दक्षादयः
प्रजाध्यक्षा नैष्ठिकाः सनकादयः । पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमे-
श्वरम् ॥ ३४ ॥ शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे । मन्त्रलिङ्गैर्व्यवच्छिन्नं
भजन्तो न विदुः परम् ॥ ३५ ॥ यदा यमनुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ३६ ॥ तस्मात् कर्मसु
बर्हिष्मन् अज्ञानादर्थकाशिषु । माऽर्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु
॥ ३७ ॥ आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः । फलश्रुतिं कुसुमितां न

वेदज्ञा वदन्ति हि ॥ ३८ ॥ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः । अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते । उक्थशस्त्रा ह्यसुतृपो यथा नीहारचक्षुषः ॥ ३९ ॥ तत्कर्म हरितोषं यत् सा विद्या तन्मतिर्यया । तद्वर्णं तत्कुलं श्रेष्ठं तदाश्रमं शुभं भवेत् ॥ ४० ॥ हरिर्देहभृतामात्मा स्वयं-प्रकृतिरीश्वरः । तत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥ ४१ ॥ स वै प्रियतमश्चात्मा यतो न भयमण्वपि । इति वेद स वै विद्वान् यो विद्वान् स गुरुर्हरिः ॥ ४२ ॥ नृणां जन्मसहस्रेण भक्तौ प्रीतिर्हि जायते । कलौ भक्तिः कलौ भक्तिः भक्त्या कृष्णः पुरःस्थितः ॥ ४३ ॥ ये मे भक्तजनाः पार्थ न मे भक्ताश्च ते जनाः । मद्भक्तानाञ्च ये भक्ताः ते मे भक्ततमा मताः॥४४॥ अत्युग्रो वैष्णवद्रोहो वेदादिषु सुविश्रुतः । न शक्यते वारयितुं कल्पकोटि-शतैरपि ॥ ४५ ॥ भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये । दुर्वासा दुःख-मापन्नः पुरा भक्तिविनिन्दकः ॥ ४६ ॥ यत्फलं नास्ति तपसा न योगेन समाधिना । तत् फलं लभते सम्यक्कलौ केशवकीर्तणात् ॥ ४७ ॥ सत्यादि-

त्रियुगे बोधवैराग्यौ मुक्तिसाधकौ । कलौ तु केवलं भक्तिब्रह्मसायुज्यकारिणी ॥ ४८ ॥ ऋषिभिर्बहवो लोके पंथानः प्रकटीकृताः । श्रमसाध्याश्च ते सर्वे प्रायः स्वर्गफलप्रदाः ॥ ४९ ॥ वैकुन्ठसाधकः पन्थाः स तु गोप्यो हि वर्तते । तस्योपदेष्टा पुरुषः प्रायो भाग्येन लभ्यते ॥ ५० ॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे । स्वाध्यायज्ञानयज्ञाश्च ते तु कर्मविसूचकाः । सत्कर्मसूचको नूनं ज्ञानयज्ञः स्मृतो बुधैः ॥ ५१ ॥ भाग्योदयेन बहुजन्मसमार्जितेन सत्संगमं च लभते पुरुषो यदा वै । अज्ञानहेतुकृतमोहमदान्धकारनाशं विधाय तदोदयते विवेकः ॥ ५२ ॥ भक्तेषु गोविन्दस्वरूपधर्त्री प्रेमैककर्त्री भवरोगहंत्री । सा त्वं च तिष्ठस्व सुधैर्यसंश्रया निरन्तरं वैष्णवमानसानि ॥ ५३ ॥ सकलभुवनमध्ये निर्धनास्तेऽपि धन्या निवसति हृदि येषां श्रीहरेर्भक्तिरेका । हरिरपि निजलोकं सर्वथाऽतो विहाय प्रविशति हृदि तेषां भक्तिसूत्रोपनद्धः ॥ ५४ ॥ इदं तत्त्वमिदं तत्त्वं मोहितेनैव मायया । भक्तितत्त्वं यदा प्राप्तं तदा विष्णुमयं जगत् ॥ ५५ ॥ वारि

त्यक्त्वा यथा हंसः पयः पिबति नित्यशः। एवं धर्मान् परित्यज्य विष्णु-भक्तिं समाश्रयेत् ॥ ५६ ॥ तोयं बद्ध्वा तु वस्त्रेण कृतं कार्यं कथं भवेत्। प्राप्य देहं विना भक्तिं क्रियते स वृथाश्रमः ॥ ५७ ॥ बाहुभ्यां सागरं तर्तुं यथा मूढोऽभिवाञ्छति। संसारसागरं तद्वद्विष्णुभक्तिं विना नरः ॥ ५८ ॥ योगैरष्टविधैर्विष्णुर्न प्राप्यश्चेहजन्मनि। भक्त्या वै प्राप्यते विष्णुः सर्वथा सुलभो भवेत् ॥ ५९ ॥ सन्तप्तानां मुनिश्रेष्ठ विष्णुभक्तिसुधार्णवम्। विना-न्यच्छरणं किंवा भवारण्ये भयानके ॥६०॥ दुर्लभं मानुषं जन्म सत्सङ्गस्त्वति-दुर्लभः। त्वत्कथाश्रवणं सद्भिस्तत्र चाप्यति दुर्लभम् ॥ ६१ ॥ वक्तारो बहवः सन्ति परेषां बुद्धिदा भुवि। दामोदरवशो भक्तो दुर्लभः खलु भूतले ॥ ६२ ॥

इति श्रीभक्तिकौस्तुभे भक्तमाहात्म्यं नाम पञ्चम आह्निकः।

सत्कथाश्रवणे बुद्धिर्यस्य यस्य प्रवर्तते। स स एव स्वयंविष्णुस्तस्मैतस्मै नमो नमः ॥ १ ॥ सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पिनः। सुखेन यां गतिं यांति न तां सर्वेऽपि धार्मिकाः ॥२॥ हरे राम हरे राम कृष्ण कृष्ण हरे हरे। एवं वदन्ति ये नित्यं न हि तान् बाधते कलिः ॥ ३ ॥ हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्। दिवानिशि च सन्धायां सर्वकालेषु संस्मरेत् ॥४॥ अशुचिर्वा शुचिर्वापि सर्वावस्थासु सर्वदा। अहर्निशं स्मरन्नाम कृष्णं पश्यति चक्षुषा ॥ ५ ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरं शुचिः ॥ ६ ॥ कुरुक्षेत्रं तथा काशी गया वै द्वारका तथा। सर्वं तीर्थं कृतं तेन नामोच्चारणमात्रतः ॥ ७ ॥ ये नमन्ति जगद्योनिं वासुदेवं सनातनम्। न तेभ्यो विद्यते तीर्थम् अधिकं पापनाशनम् ॥८॥ गंगागयानैमिषपुष्कराणि प्रयागकाशीकुरुजांगलानि। तिष्ठन्ति देहे कृतभक्तिपूर्वं गोविन्दभक्तिं वहतां नराणाम् ॥९॥ शुभग्रहा भूतपिशाचकाश्च ब्रह्मादयो देवगणाः प्रसन्नाः। लक्ष्मीः स्थिरा तिष्ठति मन्दिरे च

गोविन्दभक्तिं वहतां नराणाम् ॥१०॥ नाहं वसामि वैकुण्ठे योगिनां हृदये न च। मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥११॥ धन्यं गृहं गृहस्थानां यत्र गच्छन्ति साधवः। प्रसन्नास्तद्गृहं यान्ति पितरः सर्वदेवताः ॥१२॥ येषां पादोदकं तीर्थं तीर्थानामपि पावनम्। न पुनाति गृहं यत्तु श्मशानमिव तद्गृहम् ॥ १३ ॥ न विष्णुकीर्त्तनं यत्र न वै भागवता जनाः। जम्बूक सदनं तद्धि तद्गृहस्थजनि वृथा ॥१४॥ अधना अपि ते धन्याः साधवो गृहमेधिनः। यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरावराः ॥१५॥ व्यालालयद्रुमा वै ते अरिक्ताखिल सम्पदः। यद्गृहास्तीर्थपादीय पादतीर्थ विवर्जिताः ॥१६॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित्। हरेः सुदर्शनश्चक्रं शश्वद्रक्षति वैष्णवान् ॥१७॥ ध्यन्यास्ते वैष्णवाः शश्वद्गोविन्दपदपंकजम्। ध्यायंते तांश्च गोविन्दः शश्वत्तेषां च सन्निधौ ॥१८॥ शश्वद् ये नाम गायन्ति गुणं मन्त्रं जपन्ति च। कुर्वन्ति श्रवणं गाथा वदन्ति तेऽतिवैष्णवाः ॥१९॥ मद्गुणश्रवणाद् ये च पुलकांकितविग्रहाः। गद्गदाः साश्रुनेत्राश्च नरास्ते

वैष्णवोत्तमाः॥२०॥पुत्रादपि परः स्नेहो मयि येषां निरन्तरम्। गृहाद्याश्च मयि न्यस्तास्ते नरा वैष्णवोत्तमाः ॥२१॥ सतामयं सारभृतां निसर्गो यदर्थवाणी श्रुतिचेतसामपि । प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रिया विटानामिव साधुवार्ता ॥२२॥ ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः । एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥२३॥ सलोका लोकपालास्तान् वन्दन्त्यर्चन्त्युपासते । अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः ॥२४॥ यावन्न कायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम् । ज्ञानासिमच्युतबलो दधदस्तशत्रुः स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् ॥२५॥ नो चेत् प्रमत्तमसदिन्द्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति । ते दस्यवः सहयसूतममुं तमोऽन्धे संसारकूप उरुमृत्युभये क्षिपन्ति ॥२६॥ शरीरंच नवच्छिद्रं व्याधिग्रस्तं निरन्तरं । औषधं जान्हवीतोयं वैद्यो नारायणः स्वयं ॥२७॥ अश्रुत्वा भगवद्वार्त्तां योऽन्नं भुंक्ते गृहेषु हि । पीयेत च तथा पानं पापभुक् सोऽधमोमतः ॥२८॥ अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवे-

दितम् । वैष्णवाश्च न खादन्ति नैवेद्यभोजिनः सदा ॥२९॥ विष्णोः पादोदकं पुण्यं नित्यं ये भुंजते नराः । तत्पापानि पलायन्ते वैनतेयादिवोरगाः ॥३०॥ कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः । जलं भित्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ ३१ ॥ जितं तेन जितं तेन जितं तेन यमात् भयं । जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षर द्वयं ॥३२॥ यदि कृष्णपदे चिन्ता भक्तिस्तत् पादपंकजे । दुर्गमे गहने वापि का चिन्ता मरणे रणे ॥ ३३॥ रतिः कृष्णकथायां च यस्याश्रुपुलकोद्गमः । मनो निमग्नं तत्रैव स भक्तः कथितो बुधैः ॥३४॥ न च विघ्नो भवेत्तस्य परमायुर्न नश्यति न याति तत्पुरः कालो वैनतेयमिवोरगः ॥३५॥ न जहाति समीपं च क्षणं तस्य हरिः स्वयम् । उपतिष्ठंति तूर्णं तमणिमादिकसिद्धयः ॥३६॥ सुदर्शनं भ्रमत्येव तस्य पार्श्वे दिवानिशम् । कृष्णाज्ञया च रक्षार्थं को वा किं कर्त्तुमीश्वरः ॥३७॥ व्याधयो विपदः शोका विघ्नाश्च न प्रयांति तम् । न याति तत्समीपं च मृत्युर्मृत्युभयान्मुने । स च सर्वत्र निःशंकः सुखी कृष्णप्रसादतः ॥ ३८ ॥

हतो देशो हतं श्राद्धमपात्रकम् । हतमश्रोत्रिये दानमनाचारहतं कुलम्॥५७॥ विश्वासो गुरुवाक्येषु स्वस्मिन्दीनत्वभावना । मनोदोषजयश्चैव कथायां निश्चला मतिः ॥ ५८ ॥ एवमादि कृतं चेत् स्यात्तदा वै श्रवणे फलम् । पुनः श्रवांते सर्वेषां वैकुन्ठे वसतिर्ध्रुवम् ॥ ५९ ॥ नारायणो नाम नरो नराणां प्रसिद्धचौरः कथितः पृथिव्याम् । अनेकजन्मार्जितपापसञ्चयं हरत्यशेषं स्मरतां सदैव ॥ ६० ॥ ब्रह्मशेषादि सुरैर्नगम्यं ध्यानैश्च योगैः सनकादिभिश्च । वेदैः पुराणैश्च निरूपितं न भजस्व भक्त्या नवनीतचौरम् ॥६१ ॥

इति श्रीभक्तिकौस्तुभे भक्तमाहात्म्यं नाम षष्ठ आह्निकः ।

आराधितो यदि हरिस्तपसा ततः किम् । नाराधितो यदि हरिस्तपसा ततः किम् ॥ १ ॥ अन्तर्बहिर्यदि हरिस्तपसा ततः किम् । नान्तर्बहिर्यदि हरिस्तपसा ततः किम् ॥ २ ॥ नहि धर्मो नहि तपः श्रीकृष्णसेवनात्परम् । परिश्रमं च विफलं तपसा वैष्णवस्य च ॥ ३ ॥ ध्यायन्ते योगिनः सर्वे तत्तेजो भक्तिपूर्वकम् । सुपक्वभक्त्या कालेन योगी च वैष्णवो भवेत् ॥ ४ ॥

वैष्णवानां मतं शस्तं सर्वेभ्योऽपि च नारद। न वैष्णवात्परो ज्ञानी ब्रह्माण्डेषु च विद्यते ॥ ५ ॥ अन्तर्बहिः सदा हरिर्येषां चैव महात्मनाम्। स्वप्ने जागरणे शश्वत् तपस्तेषां च निष्फलम् ॥६ ॥ यश्च मूढतमो लोके यश्च भक्तिं परां गतः। तावुभौ सुखमेधेते तपः कुर्वन्ति मध्यमाः ॥ ७ ॥ श्रीहरेर्भक्तिदास्यं च सर्वमुक्तेः परं मुने। वैष्णवानामभिमतं सारात्सारं परात्परम् ॥८॥ श्रीकृष्णभक्तसंगेन भक्तिर्भवति नैष्ठिकी। अनिमित्ता च सुखदा हरिदास्यप्रदा शुभा ॥ ९ ॥ यथा वृक्षलतानां च नवीनः कोमलांकुरः। वर्धते मेघवर्षेण शुष्कः सूर्यकरेण च ॥१०॥ तथैव भक्तालापेन भक्तिवृक्षनवांकुरः। वर्धते शुष्कतां याति चाभक्तालापमात्रतः ॥ ११ ॥ तस्माद्भक्तैः सहालापं कुरुते पण्डितः सदा। यात्येवाभक्तसंसर्गाद्दुष्टात्सर्पाद् यथा नरः ॥ १२ ॥ आलापाद्गात्रसंस्पर्शात् शयनात् सहभोजनात्। संचरन्ति हि पापानि तैलविन्दुरिवाम्भसा ॥ १३ ॥ संसर्गजा गुणा दोषा भवन्त्येव हि जीविनाम् तस्मात्सतां हि संसर्गं सन्तो वाञ्छन्ति सन्ततम् ॥ १४ ॥

साधुसङ्गाद्धि विमला भक्तिर्भवति नैष्ठिकी। भक्तिरेव परो लाभस्ततो-न्यन्नास्ति किंचन ॥ १५ ॥ चञ्चलं हि मनोदुष्टं सङ्गाञ्च परिवर्त्तते। सत्-सङ्गात् साधुतामेति दुस्सङ्गाद्याति दुष्टताम् ॥ १६ ॥ दुष्टसङ्गो न कर्त्तव्य आत्मनः श्रेय इच्छता। कुसङ्गदूषिता बुद्धिर्न हि गच्छति शुद्धताम् ॥ १७ ॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न कर्हिचित्। सर्वे विधिनिषेधाः स्युरे-तस्यैव हि किंकराः ॥ १८ ॥ मूर्खो वदति विष्णाय बुधो वदति विष्णवे। नम इति द्वयोरर्थः फलं चैव समं भवेत् ॥ १९ ॥ यस्मै दत्तं च यज्ज्ञानं ज्ञानदाता हरिः स्वयम्। ज्ञानेन तेन स स्तौति भावग्राही जनार्दनः ॥२०॥ नास्ति विष्णोः परं सत्यं नास्ति विष्णोः परं पदम्। नास्ति विष्णोः परं ज्ञानं नास्ति मोक्षो ह्यवैष्णवः ॥ २१ ॥ नास्ति विष्णोः परो मन्त्रो नास्ति विष्णोः परं तपः। नास्ति विष्णोः परं ध्यानं नास्ति मन्त्रो ह्यवैष्णवः ॥२२॥ किं तस्य बहुभिर्मन्त्रैः किं जपैर्बहुविस्तरैः। वाजपेयसहस्रैः किं भक्तिर्यस्य जनार्दने ॥ २३ ॥ प्राणकान्तार पाथेयं संसाररोगभेषजम्। दुःखशोकपरि-

त्राणं हरिरित्यक्षरद्वयम् ॥ २४ ॥ स पिता ज्ञानदाता यो ज्ञानं तत् कृष्ण-भक्तिदम् । सा भक्तिः परमा शुद्धा कृष्णदास्यप्रदा च या ॥ २५ ॥ सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः । लग्नं तदेव विख्यातं यत्र संस्मर्य्यते हरिः ॥ २६ ॥ तद्दिनं सफलं धन्यं यशस्यं सर्वमंगलम् । श्रीकृष्ण-कीर्तनं यत्र तत्रैव नायुषो व्ययः ॥ २७ ॥ पंचवक्त्रेण सततं तन्नामगुण-कीर्तनम् । करोमि भार्यया सार्द्धं पुत्राभ्यां चापि नारद ॥ २८ ॥ तद्दिनं दुर्दिनं मन्ये मेघाच्छन्नं न दुर्दिनम् । यद्दिनं कृष्णसंलापकथापीयूषवर्जि-तम् ॥ २९ ॥ मन्दस्य मन्दप्रज्ञस्य मन्दायुषस्तथा वयः । ह्रियते निद्रया नक्तं दिवा च व्यर्थकर्मभिः ॥ ३० ॥ आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ । तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया ॥ ३१ ॥ तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत । न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे ॥३२॥ श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः । न यत्कर्णपथोपेतो जातु नाम गदाग्रजः ॥ ३३ ॥ बिले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्य ।

जिह्वाऽसती दार्दुरिकेव सूत न चोपगायत्युरुगायगाथाः ॥ ३४ ॥ भारः परं पट्टकिरीटजुष्टमप्युत्तमांगं न नमेन्मुकुन्दम् । शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकंकणौ वा ॥ ३५ ॥ बर्हायिते ते नयने नराणां लिंगानि विष्णोर्न निरीक्षतो ये । पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरेर्यौ ॥ ३६ ॥ जीवञ्छवो भागवतांघ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु । श्रीविष्णुपद्या मनुजस्तुलस्याः श्वसञ्छवो यस्तु न वेद गन्धम् ॥ ३७ ॥ तदश्मसारं हृदयं बतेदं यद् गृह्यमाणैर्हरिनामधेयैः । न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥ ३८ ॥ सा वाग्यया तस्य गुणान्गृणीते करौ च तत्कर्मकरौ मनश्च । स्मरेद्वसन्तं स्थिरजंगमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ ३९ ॥ शिरस्तु तस्योभयलिंगमानमेत्तदेव यत्पश्यति तद्धि चक्षुः । अंगानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥ ४० ॥ वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः । स्मृत्यां शिरस्तव निवास जगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्॥४१॥

हरिभक्तेः परा नास्ति प्राणेभ्योऽपि प्रिया मम । वैष्णवेषु च संगो मे सदा भवतु सुन्दरि ॥४२॥ मम प्राणा वैष्णवाश्च तेषां रक्षार्थमेव हि । सन्धार्यते मया शूलं नान्यत्ततोऽस्ति कारणम् ॥४३॥ लोकेस्मिन् स्वामिनः सर्वे सेवकैः परिरक्षिताः । न तथायं हरिः स्वामी पाति भृत्यान् स्वयं यतः ॥४४॥ भक्तप्राणो हि कृष्णश्च कृष्णप्राणा हि वैष्णवाः । ध्यायन्ते वैष्णवाः कृष्णं कृष्णश्च वैष्णवांस्तथा ॥४५॥ दत्वा चक्रं च रक्षार्थं न निश्चिन्तो जनार्दनः । स्वयं तन्निकटं याति तं द्रष्टुं रक्षणाय च ॥४६॥ एवंभूतो दयासिन्धुर्भक्तानुग्रहकातरः । वैष्णवाच्च प्रियो नास्ति कृष्णस्य परमात्मनः ॥४७॥ रक्षिता यस्य भगवान् कल्याणं तस्य सन्ततम् । स यस्य विघ्नकर्त्ता स्यात् को वा तं रक्षितुं क्षमः ॥४८॥ स्मृतिमात्रेण निर्विघ्ना ये हि कृष्णपरायणाः । विघ्नं कर्तुं के समर्थास्तेषां च मुनयः सुराः ॥४९॥ कोपाग्नीनां स्थलं कुत्र स्तम्भनस्य च वा कुतः । देवानां वा मुनीनां वा रक्षणेनेश्वरेच्छया ॥५०॥ घोरारण्ये सुखं शेते योहि कृष्णेण रक्षितः । निर्वन्धो हि स्थितो यस्य मरणं

तस्य मन्दिरे ॥५१॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित्। तस्य भक्तोत्तमानां च सततं स्मरणेन तु ॥ ५२ ॥ जन्ममृत्युजराव्याधि भयं नाप्युपजायते। आयुर्व्ययः कथं हि स्यात् कथं मृत्युर्भविष्यति ॥५३॥ गृहेऽरण्ये जलेचाग्नौ पर्वते रिपुसंकटे। स एव रक्षिता शश्वद्गर्भे रक्षति यो विभुः ॥५४॥ भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः। योसौ विश्वम्भरो देवः स किं भक्तानुपेक्षते ॥५५॥ येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः। मयूराश्चित्रिता येन स ते रक्षां विधास्यति ॥५६॥ य एतस्मिन् महाभागाः प्रीतिं कुर्वन्ति मानवाः। नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥५७॥ किं दुरापादनं तेषां पुंसामुद्दामचेतसाम्। यराश्रितस्तीर्थपदश्चरणो व्यसनात्ययः ॥ ५८ ॥ अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः। कुतः पुनः तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥ ५९ ॥ शारीरा मानसा दिव्या वैयासे ये च मानुषाः। भौतिकाश्च कथं क्लेशा वाधन्ते हरिसंश्रयम् ॥ ६० ॥ हरिः स्मृतिः सर्वविपद्विमोक्षणम् न

रिष्यते जातु समुद्यमः क्वचित् । यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम् ॥६१॥ न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया । विभूतिभिर्वाऽभिभवेद् देवोऽपि किमु पार्थिवः ॥ ६२॥ कः पंडितस्त्वदपरं शरणं समीयाद् भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् । सर्वान् ददाति सुहृदो भजतोऽभिकामान् आत्मानमप्युपचयापचयौ न यस्य ॥६३॥ त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति । विदन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥६४॥ तद्देवदेव भवतश्चरणारविन्द-सेवाऽनुभावमिह पश्यतु लोक एषः । ये त्वां भजन्ति न भजन्त्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरु सृञ्जयानाम् ॥६५॥

इति श्रीभक्तिकौस्तुभे भक्तरक्षा-नाम सप्तम आह्निकः ॥

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन वैष्णवो दर्शनेन च ॥१॥ भक्तस्य पादरजसा सद्यः पूता वसुन्धरा । तद्दर्शनं स्पर्शनं च वांछन्ति मुनयः सुराः ॥२॥ नहि पूतस्त्रिभुवने श्रीकृष्णसेवकात् परः । पुणाति सर्वतीर्थानि दूरतो दर्शनादपि ॥३॥ पुरुषाणां सहस्रं च पूतं तज्जन्ममात्रतः । पूजितो वैष्णवो येन विश्वं तेन सुपूजितम् ॥४॥ कन्यादानं वैष्णवाय परं निर्वाणकारणम् । परं निर्वाणवीजं च वैष्णवोच्छिष्टभोजनम् ॥५॥ श्रीकृष्णविमुखो भूत्वा विषये यस्य मानसम् । विषमत्तामृतं त्यक्ता स च मूढो नराधमः ॥६॥ चण्डालादधमः पापी श्रीकृष्णविमुखो नरः । निष्फलस्तस्य वै धर्मो नाधिकारी स कर्मणाम् ॥७॥ सुपक्का हरिभक्तिस्तु तरणी भवतारणे । गुरुरेव परं ब्रह्म कर्णधारस्वरूपकः ॥८॥ स गुरुः स पिता वन्द्यः सा माता स पतिः सुतः । यो ददाति हरौ भक्तिं कर्ममूलनिकृन्तनीम् ॥९॥ गुरुरूपी स्वयं कृष्णः शिष्याणां हितकाम्यया । गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुर्देवः परं ब्रह्म गुरुः पूज्यः परा-

स्पर: ॥१०॥ हरौ रुष्टे गुरौ तुष्टे गुरू रक्षितुमीश्वरः। हरौ तुष्टे गुरौ रुष्टे न कोऽपि रक्षितुं क्षमः ॥११॥ स गुरुः परमो वैरी यो ददाति ह्यसन्मतिम्। तं नमस्कृत्य सत्शिष्यः प्रयाति ज्ञानदं गुरुम् ॥१२॥ बोधरूपं गुरुं प्राप्य न गुर्वन्तरमादिशेत्। गुरूक्तं परुषं वाक्यमाशिषं परिचिन्तयेत् ॥१३॥ यः प्रसन्नः क्षणार्द्धेन मोक्षलक्ष्मीं प्रयच्छति। दुर्लभं तं विजानीयात् गुरुं संसार-तारकम् ॥१४॥ श्रीगुरुं परतत्त्वाख्यं भास्वन्तं चक्षुरग्रतः। भाग्यहीना न पश्यन्ति अन्धाः सूर्यमिवोदितम् ॥१५॥ नास्ति गुर्वधिकं तत्त्वं नास्ति ज्ञाना-धिकं फलं। नास्ति भक्त्यधिका पूजा नहि मोक्षाधिकं फलम् ॥१६॥ नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम्। तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि ॥१७॥ या प्रीतिर्मुग्धचित्तानां विषयेष्वनपायिनी। त्वामनुस्मरतः सा मे हृदयान् मापसर्पतु ॥१८॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव। त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देव-देव ॥१९॥ त्वमेकः किल लोकानां क्लिष्टानां क्लेशनाशनः। त्वमेकः क्लेश-

दर्शनेयामनासन्नपदां तव ॥२०॥ शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः। त एवपश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥२१॥ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान्। नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम् ॥२२॥ यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः। कृष्णोऽस्त्री गाण्डीवं चापं सुहृत्कृष्णस्ततो विपत् ॥२३॥ विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो। भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥२४॥ नमामि नारायणपादपंकजं करोमि नारायणपूजनं सदा। वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम्॥२५॥ नान्यं वदामि न शृणोमि न चिन्तयामि नान्यं स्मरामि न भजामि न चाश्रयामि। भक्त्या त्वदीयचरणाम्बुजमन्तरेण श्रीश्रीनिवास पुरुषोत्तम देहि दास्यम् ॥२६॥ तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमन्ति। सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम्॥२७॥ अहं तु नारायणदासदासदासस्य दासस्य च दासदासः। अन्यो न ईशो जगतो नराणां

तस्मादहं धन्यतरोऽस्मि लोके ॥२८॥ सर्वत्र सर्वकल्याणं स्मृते यस्मिन् प्रजायते । मंगलैकपरं नित्यं व्रजामि शरणं हरिम् ॥२९॥ ध्यायन् कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥३०॥ धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता । समस्तजगतां मूले यस्य भक्ति स्थिरा त्वयि ॥३१॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥३२॥ कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तन्तु तस्यैकं हरिसंस्मरणं परम् ॥३३॥ जन्मान्तरसहस्रेण तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥३४॥ नित्योत्सवस्तदा तेषां नित्यश्रीर्नित्यमंगलम् । येषां हृदिस्थो भगवान् मंगलायतनो हरिः ॥३५॥ गोकोटीदानं ग्रहणेषु काशी प्रयागगंगाऽयुतकल्पवासः । यज्ञायुतं मेरुसुवर्णदानं गोविन्दनाम्ना न कदापि तुल्यम् ॥३६॥ हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥३७॥ हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो

दहत्येव हि पावकः ॥३८॥ हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये। नारायणा-
ख्यपीयूषं पिव जिह्वे निरन्तरम् ॥३९॥ अच्युतानन्तगोविन्दनामोच्चारण-
भेषजात्। नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥४०॥ मनसा कर्म-
णा वाचा ये स्मरन्ति जनार्दनम्। तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं वनम् ॥४१॥
तत्रैव गंगा यमुना च वेणीगोदावरीसिन्धुसरस्वती च। सर्वाणि तीर्थानि
वसन्ति तत्र यत्राच्युतोदारकथाप्रसंगः ॥४२॥ कृष्णे रताः कृष्णमनुस्मरन्ति
रात्रौ शयानाः पुनरुत्थिता ये। ते भिन्नदेहाः प्रविशन्ति कृष्णे हविर्यथा
मन्त्रहुतं हुताशे ॥४३॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन
तुल्यः। दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥४४॥
आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु व्याघ्रादिषु वर्तमानाः। संकीर्त्य
नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥४५॥ नामसंकीर्तनं
यस्य सर्वपापप्रणाशनम्। प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥४६॥
संकीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम्। प्रविश्य चित्तं

विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवाऽतिवातः ॥४७॥ मृषागिरस्ता ह्यसती रसत्कथा न कथ्यते यद्भगवानधोक्षजः । तदेव सत्यं तदुहैव मंगलं तदेव पुण्यं भगवद्गुणोदयम् ॥४८॥ तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् । तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥४९॥ न तद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् । तद्ध्वांक्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥५०॥ स वाग्विसर्गो जनताऽघसंप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥५१॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥५२॥ यशः श्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु । अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥५३॥ अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति । सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥५४॥

इति श्रीभक्तिकौस्तुभे गुरुतत्त्वं नाम अष्टम आह्निकः ॥

कर्मणा जायते जन्तुः कर्मणैव विलीयते। सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥ १ ॥ अस्ति चेदीश्वरः कश्चित् फलरूप्यन्यकर्मणाम्। कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥२॥ किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम्। अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम् ॥ ३ ॥ स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते। स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥ ४ ॥ देहानुच्चावचाज्जन्तुः प्राप्योत्सृजति कर्मणा। शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः। तस्मात् संपूजयेत् कर्म स्वभावस्थः स्वकर्मकृत् ॥ ५ ॥ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम्। आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम् ॥ ६ ॥ अर्चतां शृण्वतां अश्वद्गदतां त्वाऽभिवन्दताम्। नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥ ७ ॥ नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप। अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ ८ ॥ न कर्मणा न तपसा न जपैर्नासनादिभिः ॥ न ज्ञानेन न चान्येन वश्योऽहं श्रद्धया विना ॥ ९ ॥ श्रद्धा मय्यस्ति चेत् पुंसां येन

केनापि हेतुना । वश्यः स्पृश्यश्च दृश्यश्च पूज्यः संभाष्य एव च ॥ १० ॥ साध्या तस्मान्मयि श्रद्धा मां वशीकर्तुमिच्छता । श्रद्धा हेतुः स्वधर्मस्य रक्षणं वर्णिनामिह ॥ ११ ॥ प्रसादाद्देवताभक्तिः प्रसादो भक्तिसम्भवः । यथेहांकुरतो बीजं बीजतो वा यथांकुरः ॥ १२ ॥ संक्षिप्य तत्र वः सारं साधनं प्रब्रवीम्यहम् । श्रोत्रेण श्रवणं तस्य वचसा कीर्तनं तथा । मनसा मननं तस्य महासाधनमुच्यते ॥ १३ ॥ सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥ पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः । हरिरित्यवशेनाह पुमान् नार्हति यातनाम् ॥ १५ ॥ मन्नामनिरता वाणी वाङ्मता खलु नेतरा । ममोपचारनिरतः कायः कायो न चेतरः ॥ १६ ॥ फलानपेक्षया येषां मनो मत्प्रेरणं भवेत् । प्रार्थयेयुः फलं पश्चात् भक्तास्तेऽपि मम प्रियाः ॥ १७ ॥ अनुकूलस्य संकल्पः प्रतिकूलस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्वे वरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥ १८ ॥ अंगी-

कृत्वात्मनिक्षेपं पंचांगानि समर्पयेत् । न ह्यस्य सदृशं किंचित् भुक्ति-
मुक्त्योस्तु साधनम् ॥ १९ ॥ महात्मनामनन्यानां मयि संन्यस्तचेतसाम् ।
अष्टधा लक्षणं प्राहुर्मम धर्माधिकारिणाम् । मद्भक्तजनवात्सल्यं पूजायां
चानुमोदनम् ॥ २० ॥ स्वयमभ्यर्च्चनं चैव मदर्थे चांगचेष्टितम् ॥ २१ ॥
मत्कथाश्रवणे भक्तिः स्वरनेत्रांगविक्रियाः ममानुस्मरणं नित्यं यश्च मामु-
पजीवति ॥ २२ ॥ एवमष्टविधं चिह्नं यस्मिन् म्लेच्छेऽपि वर्तते । स
विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पंडितः ॥ २३॥ न मे प्रियश्चतुर्वेदी
मद्भक्तः श्वपचोऽपि यः । तस्मै देयं ततो ग्राह्यं स च पूज्यो यथाह्यहम् ॥२४॥
तुलयाम लवेनापि न स्वर्गं न पुनर्भवम् । भगवत्संगिसंगस्य मर्त्यानां
किमुताशिषः ॥ २५ ॥ अथ ये मानवा लोके स्वेच्छया धृतविग्रहाः । भावा-
तिशयसम्पन्नाः पूर्वसंस्कारसंयुताः ॥ २६ ॥ विरक्ता वानुरक्ता वा स्त्र्या-
दीनां विषयेष्वपि । पापैर्न ते विलिप्यन्ते पद्मपत्रमिवाम्भसा ॥ २७ ॥ न
मय्यावेशितधियां कामः कामाय कल्पते । भर्जिताः क्वथिता धानाः प्रायो

वीजाय नेष्यते ॥ २८ ॥ नास्ति कृत्यमकृत्यं वा समाधिर्वा परायणम् । न विधिर्न निषेधश्च तेषां मम यथा तथा ॥ २९ ॥ यथेह परिपूर्णस्य साध्यं मम न विद्यते । तथैव कृतकृत्यानां तेषामपि न संशयः ॥ ३० ॥ यत् किंचित् कुरुते कर्म पुरुषः साध्वसाधु वा । सर्वं नारायणे न्यस्य कुर्वन्नपि न लिप्यते ॥ ३१ ॥ हरेः कथामृतं यत्र तत्र तीर्थादिकं वसेत् । गुणवाद रतानां हि हरिर्देहं समाश्रयेत् ॥३२॥ तस्य जिह्वा भवेत् साध्वी सत्कथामृतनिर्वृता । विषयास्वादसंक्लिष्टा केवला रसना परा ॥३३ ॥ जन्म तच्छोभनं जन्तोर्जीवितञ्च सुजीवितम् । यत्कायचित्तवाक्यैश्च सेव्यते हरिरीश्वरः ॥ ३४ ॥ सा वाणी या गुणान् ब्रूते करौ कर्मकरौ हरेः । तन्मनस्तं स्मरेन्नित्यं चक्षुस्तद्दर्शनोत्सुकम् ॥ ३५ ॥ कर्णौ तौ तत्कथासक्तौ घ्राणं निर्माल्यगन्धहृत् । देहं तत् पावितं विष्णोः पादोदकनिषेवया ॥३६ ॥ वासुदेवार्चनं हित्वा दुष्कर्माणि करोति यः । कामधेनुमतिक्रम्य अर्कक्षीरं स इच्छति ॥३७॥ संप्राप्य भारते जन्म सत्कर्मसु पराङ्मुखः । पीयूष-

कलशं हित्वा विषभाण्डं स इच्छति ॥३८॥ कृष्णानुग्रहतो लब्ध्वा मानवं जन्म भारते। न भजेत् कृष्णपादाब्जं तदत्यन्तविडम्बनम् ॥ ३९ ॥ अन्यस्थाने वृथा जन्म निष्फलं च गतागतम्। भारते च क्षणं जन्म सार्थकं शुभकर्मदम् ॥ ४० ॥ अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः। यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः॥४१॥ न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः। न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम् ॥४२॥ प्राप्ता नृजातिं त्विह ये च जन्तवो ज्ञानक्रियाद्रव्यकलापसंभृताम्। न वै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यान्ति बन्धनम् ॥४३॥ लब्ध्वा सुदुर्लभमिदं बहु सम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः। तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥४४॥ त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि। यथादेशं यथाकालं यावद्दैवोपपादितम् ॥४५॥ नाभुक्तं क्षीयते कर्म्म जन्मान्तरशतैरपि। मद्भक्त्या तद्बहु स्वल्पं विपरीतमभक्तितः ॥४६॥

त्रितापं नाशयत्येव हरिलीलामृतं वचः । संसारज्वरसन्ताप कलिव्याधि विनाशनम् ॥४७॥ यत्राहं तत्र कमला कैवल्यपदमास्थिता । तां विना क्व भवेत् प्रेम क्व दानं क्व महोत्सवः ॥४८॥ सुखस्य कारणं विष्णोर्भजनं नापरं खलु । तदेव हि परो धर्मस्तद्धै सर्वोत्तमो विधिः ॥४९॥ एकान्तभक्तिः श्रीनाथे ब्रह्मविद्या प्रकीर्त्तिता । विवेकी विचरेदेको ज्ञाता ब्रह्मशरीरधृक् ॥ ५० ॥ कोटि विप्राशनेनैव कोटि तीर्थेन किं फलम् । ब्रह्मज्ञानसमो धर्मो नान्यधर्मैः कदाचन ॥५१॥ मनो निवेश्य श्रीकृष्णे वैष्णवो भवति ध्रुवम् । भक्तानां निकटे सर्वे सन्तिष्ठन्ते महर्षयः ॥५२॥ यः कुर्य्यात् परया भक्त्या महालक्ष्म्यास्तु पूजनम् । स नरो लभते सत्यं पूजाफलमनुत्तमम् ॥५३॥ आहुः शरीरं रथमिन्द्रियाणि हयानभीषून मन इन्द्रियेशम् । वर्त्मानि मात्राधिषणां च सूतं सत्त्वं बृहद्बन्धुरमीशसृष्टम् ॥ ५४ ॥ अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् । धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥५५॥ जनस्य कृष्णाद् विमुखस्य दैवाद्-

तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः। कृतज्ञः को न सेवेत दुराराध्यमसाधुभिः ॥१॥ यस्मिन्मनो लब्धपदं यदेतत् शनैःशनैर्मुञ्चति कर्मरेणून्। सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥२॥ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात्। क उत्तमश्लोकगुणानुवादात् पुमान्विरज्येत विना पशुघ्नात् ॥३॥ ब्रह्मन् कृष्णकथाः पुण्या माध्वीर्लोकमलापहाः। को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥४॥ क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम्। अनिच्छतोऽपि यस्य श्रीः अङ्गान्न च्यवते क्वचित् ॥५॥ यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममंगलघ्नः। तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥६॥ संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य। लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःखदवार्दितस्य ॥७॥ ते वै विदन्त्यतितरन्त्यथ देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः। यद्यद्भुतक्रमपरायणशीलशिक्षाः तिर्यग्जना अपि किमु श्रुतधारणा ये ॥८॥ येषां स एव भग-

वान् दर्शयेदनन्तः सर्वात्मनाश्रितपदो यदि निर्व्यलीकम्। ते दुस्तरामति-
तरन्त्यथ देवमायां नैषां ममाहमिति धीः श्वशृगालभक्ष्ये ॥९॥ यस्य नारा-
यणो देवो भगवान् हृद्गतः सदा। धुनोति परया भक्त्या ह्यज्ञानं ध्वान्त-
मर्कवत् ॥१०॥ अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम्।
विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्त्ति सिन्धुम् ॥ ११ ॥
वासुदेवमनाराध्य को मोक्षमाप्तुमिच्छति। गर्भजन्मजरारोगदुःखसंसारबन्धनैः। न बाध्यते नरो
नित्यं वासुदेवमनुस्मरन् ॥ तदैव पुरुषो मुक्तो जन्ममृत्युजरादिभिः।
जितेन्द्रियो विशुद्धात्मा यदैव स्मरते हरिम् ॥१२॥ त्वां सेवतां सुरकृता
बह्वोऽन्तरायाः स्वौको विलङ्घ्य परमं व्रजतां पदं ते। नान्यस्य बर्हिषि
बलीन्ददतः स्वभागान् धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १३ ॥
क्षुत्तृट् त्रिकालगुणमारुत जैह्वशैश्नान् अस्मानपारजलधीनतितीर्य केचित्।
क्रोधस्य यान्ति विफलस्य वशं पदे गोः मज्जन्ति दुश्चरतपश्च वृथोत्

सृजन्ति ॥१४॥ कामं क्रोधं भयं स्नेहं ऐक्यं सौहृदमेव च । नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥१५॥ जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया । मृगतृष्णामुपधावेत् । यथाऽन्यत्रार्थदृक् स्वतः ॥१६॥ अयोग्यानांच कारुण्याद्भक्तानां परमेश्वरः । प्रसीदति न सन्देहो विगृह्य विविधान् मलान् ॥१७॥ प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः । अवस्थाभेदमुत्प्रेक्ष्य विद्वांस्तत्र न मुह्यति ॥१८॥ प्रसादपूर्विका येयं भुक्तिमुक्तिविधायिणी । नैव सा शक्यते प्राप्तुं नरैरेकेन जन्मना ॥१९॥ अनेकजन्मसिद्धानां श्रौतस्मार्त्तानुवर्तिनाम् । विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः ॥२०॥ परया च तया भक्त्या प्रसादो लभ्यते परः । प्रसादात्सर्वपाशेभ्यो मुक्तिर्मुक्तस्य निर्वृतिः ॥ २१ ॥ शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् । कालेन नातिदीर्घेण भगवान् विशते हृदि ॥ २२ ॥ हृदि यस्य महाभक्तिः प्रतिभाति महोदया । क्षणादेव हि सिद्धिः स्यात् किं जपैर्मन्त्रसाधनैः ॥ २३ ॥ अतो भक्तिं सदा

कुर्यात् सर्वथा भावसिद्धये। किं न सिध्यति भावेन भावो हि भवकारणम् ॥ २४ ॥ वासुदेवकथाप्रश्नः पुरुषांस्त्रीन् पुनाति हि। वक्तारं प्रच्छकं श्रोतॄन् तत्पादसलिलं यथा ॥ २५ ॥ तत्कथा सुमहत्पुण्यं धन्यं स्वस्त्ययनं शुभम्। यत्र यत्रोत्तमश्लोको भगवान् गीयते हरिः ॥२६॥ त्रैलोक्ये भक्तिसदृशः पन्था नास्ति सुखावहः। चतुर्युगेषु देवेशि कलौ तु सुविशेषतः ॥२७॥ कलौ तु ज्ञानवैराग्यौ वृद्धरूपौ निरुत्सवौ। ग्राहकाभावतो देवि जातौ जर्जरतामति ॥२८॥ कलौ प्रत्यक्षफलदा भक्तिः सर्वयुगेष्वपि। तत्प्रभावादहं नित्यं तद्वशो नात्र संशयः ॥२९॥ यो भक्तिमान् पुमान् लोके सदाहं तत्सहायकृत्। विघ्नकर्त्ता रिपुस्तस्य दण्ड्यो नात्र च संशयः ॥३०॥ भक्ताधीनोऽहमेवास्मि तद्वशात् सर्वकार्यकृत्। अयथोचितकर्त्ता हि प्रसिद्धो भुवनत्रये ॥३१॥ यदा यदा विपत्तिर्हि भक्तानां भवति क्वचित्। तदा तदा हराम्याशु तत्क्षणात् सर्वशः सदा ॥३२॥ किं वहूक्तेन देवेशि भक्ताधीनः सदाह्यहम्। तत् कर्त्तुः पुरुषस्यातिवशगो नात्र संशयः

॥३३॥ मतिर्मयि निवध्येयं न विपद्येत कर्हिचत्। प्रजासर्गं निरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥३४॥ त्रैलोक्ये यानि पुण्यानि धर्मकर्मफलानि च। तुल्यतां तानि नो यान्ति हरिनामानुकीर्तनैः ॥३५॥ यो भावगद्गदो भूत्वा रोदित्यच्युतसन्निधौ। तस्य कृष्णः परिक्रीतस्तस्माद् विभ्यति देवताः ॥३६॥ दानं व्रतं तपो यज्ञः श्राद्धं वा पितृतर्पनं। सकलं निष्फलं लोके हरिसंकीर्तनं विना ॥३७॥ यथोऽयोऽग्निसमावेशान्नायो भवति केवलम्। तथैव मम सान्निध्यान्न ते केवलमानुपाः ॥३८॥ अवज्ञानं कृतं तेपु नरैर्व्यामूढचेतनैः। आयुः श्रियं कुलं शीलं हित्वा निरयमावहेत् ॥३९॥ आयुः श्रियं यशो धर्मं लोकानाशिप एव च। हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥४०॥ अथ किं वहुनोक्तेन श्रेयः प्राप्त्यैकसाधनम्। मयि चित्तसमासंगो येन केनापि हेतुना ॥४१॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥४२॥ आकाशात् पतितं तोयं सागरं अभिगच्छति। सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥४३॥ प्रयुक्तः

सर्वदेवानां यो मामेव प्रपूजयेत् । तस्याहं न प्रणश्यामि स च मे न प्रण-
श्यति ॥४४॥ शृणु तत्त्वेन मे देवि मम धर्मं सनातनम् । देवा एतन्न जानन्ति
ये च योगव्रते स्थिताः ॥४५॥व्रतं धर्मं वरारोहे मंगल्यं मुखनिःसृतम् । अह-
मेको विजानामि मद्भक्ता ये जना भुवि ॥४६॥ केचित् संसारिनं प्राहुस्तम-
संसारिणं परे । स्वतन्त्रमपरे प्राहुरस्वतन्त्रं परे विदुः ॥४७॥ घोरमित्यपरे
प्राहुः सौम्यमेव परे विदुः । रागवन्तं परे प्राहुर्वीतरागं तथा परे ॥४८॥
निष्क्रियं च परे प्राहुः सक्रियं चेतरे जनाः । अरूपं केचिदाहुर्वै रूपवन्तं परे
विदुः ॥४९॥ एवं विकल्प्यमानन्तु याथात्म्यं परमेष्ठिनः । नाध्यवस्यन्ति
मुनयो नानाप्रत्ययकारणात् ॥५०॥ ये पुनः सर्वभावेन प्रपन्नाः परमेश्वरं ।
ते हि जानन्त्ययत्नेन शिवं परमकारणम् ॥५१॥ घनो यदाऽर्कप्रभवो विदी-
र्यते चक्षुःस्वरूपं रविमीक्षते तदा । यदा ह्यहंकार उपाधिरात्मनो जिज्ञासया
नश्यति तर्ह्यनुस्मरेत् ॥५२॥ देहाभिमाने गलिते विज्ञाते परमात्मनि । यत्र
यत्र मनो याति तत्र तत्र समाधयः ॥५३॥ विदिते तु परे तत्त्वे वर्णातीते

ह्यविक्रिये। किंकरत्वं च गच्छन्ति मन्त्रा मन्त्राधिपैः सह ॥५४॥ कर्मपाशनिबद्धानां नराणां दुःखभागिनाम्। नान्योपायं प्रपश्यामि वासुदेवात् परं द्विजाः ॥५५॥ नामैव तव गोविन्द कलौ त्वत्तः शताधिकम्। ददात्युच्चारणान्मुक्तिं विनाऽष्टांगयोगतः ॥ ५६ ॥ ये पूजयन्ति तं देवं शंखचक्रगदाधरम्। वाङ्मनःकर्मभिः सम्यक् ते यान्ति परमं पदम् ॥५७॥ किं तेषां जीवितेनेह पशुवच्चेष्टितेन च। येषां न प्रवणं चित्तं वासुदेवे जगन्मय ॥५८॥ किं विद्यया किं स्वगुणैश्च तेषां यज्ञैश्च दानैश्च तपोभिरुग्रैः। येषां न भक्तिर्भवतीह कृष्णे जगद्गुरौ मोक्षसुखप्रदे च ॥५९॥ लोके स धन्यः स शुचिः स विद्वान् मखैस्तपोभिः स गुणैर्वरिष्ठः। ज्ञाता स दाता स तु सत्यवक्ता यस्यास्ति भक्तिः पुरुषोत्तमाख्ये ॥६०॥ कृष्ण त्वदीयपदपंकजपंजरांते अद्यैव मे विशतु मानसराजहंसः। प्राणप्रयाणसमये कफवातपित्तैः कंठावरोधनविधौ स्मरणं कुतस्ते ॥६१॥ मधुरमधुरमेतत्मंगलं मंगलानां सकलनिगमवल्ली सत्फलं चित्स्वरूपम्। सकृदपि परिगीतं श्रद्धया

हेलया वा मुनिवर नरमात्रं तारयेत् कृष्णनाम ॥६२॥

इति श्रीभक्तिकौस्तुभे भक्तिमाहात्म्यं नाम दशम आह्निकः ।

श्रीराम उवाच ॥ शृणु वक्ष्यामि ते वत्स गुह्यात् गुह्यतरं परम् । यद्विज्ञाय नरो जह्यात्सद्यो वैकल्पिकं भ्रमम् ॥ १ ॥ आदौ मायास्वरूपं ते वक्ष्यामि तदनन्तरम् । ज्ञानस्य साधनं पश्चाज्ज्ञानं विज्ञानसंयुतम् । ज्ञेयं च परमात्मानं यज्ज्ञात्वा मुच्यते भयात् ॥ २ ॥ अनात्मनि शरीरादावात्मबुद्धिस्तु या भवेत् । सैव माया तयैवासौ संसारः परिकल्प्यते ॥ ३ ॥ रूपे द्वे निश्चिते पूर्वं मायायाः कुलनन्दन । विक्षेपावरणे तत्र प्रथमं कल्पयेज्जगत् ॥ ४ ॥ लिंगाद्यब्रह्मपर्यन्तं स्थूलसूक्ष्मविभेदतः । अपरं त्वखिलं ज्ञानरूपमावृत्य तिष्ठति ॥ ५ ॥ मायया कल्पितं विश्वं परमात्मनि केवले । रज्जौ भुजंगवद्भ्रान्त्या विचारे नास्ति किंचन ॥ ६ ॥ श्रूयते दृश्यते यद्यद् स्मर्यते वा नरैः सदा । असदेव हि तत्सर्वं यथा स्वप्नमनोरथौ ॥ ७ ॥ देह एव हि संसारवृक्षमूलं दृढं स्मृतम् । तन्मूलः पुत्र-

दारादिबन्धः किं तेऽन्यथात्मनः ॥८॥ देहस्तु स्थूलभूतानां पंचतन्मात्रपंचकम्। अहंकारश्च बुद्धिश्च इन्द्रियाणि तथा दश ॥ ९ ॥ चिदाभासो मनश्चैव मूलप्रकृतिरेव च। एतत् क्षेत्रमितिज्ञेयं देह इत्यभिधीयते ॥१०॥ एतैर्विलक्षणो जीवः परमात्मा निरामयः। तस्य जीवस्य विज्ञाने साधनान्यपि मे शृणु ॥ जीवश्च परमात्मा च पर्यायो नात्र भेदधीः ॥११॥ मानाभावस्तथा दंभहिंसादिपरिवर्जनम्। पराक्षेपादिसहनं सर्वत्रावक्रता तथा ॥१२॥ मनोवाक्कायसद्भक्त्या सद्गुरोः परिसेवनम्। वाह्याभ्यन्तरसंशुद्धिः स्थिरता सत्क्रियादिषु ॥१३॥ मनोवाक्कायदण्डश्च विषयेषु निरीहता। निरहंकारता जन्मजराद्यालोचनं तथा ॥१४॥ असक्तिः स्नेहशून्यत्वं पुत्रदारधनादिषु। इष्टानिष्टागमे नित्यं चित्तस्य समता तथा ॥१५॥ मयि सर्वात्मके रामे ह्यनन्यविषया मतिः। जनसंबाधरहितशुद्धदेशनिषेवणम् ॥१६॥ प्राकृतैर्जनसंघैश्च ह्यरतिः सर्वदा भवेत्। आत्मज्ञाने सदोद्योगो वेदान्तार्थावलोकनम्। उक्तैरेतैर्भवेज्ज्ञानं विपरीतैर्विपर्ययः ॥१७॥ बुद्धि-

प्राणमनोदेहाहंकृतिभ्यो विलक्षणः। चिदात्माहं नित्यशुद्धो बुद्ध एवेति निश्चयम् ॥१८॥ येन ज्ञानेन संवित्ते तज्ज्ञानं निश्चितं च मे। विज्ञानं च तदैवैतत्साक्षादनुभवेद्यदा ॥ १९ ॥ आत्मा सर्वत्र पूर्णः स्यात् चिदानन्दात्मकोऽव्ययः। बुद्ध्याद्युपाधिरहितः परिणामादिवर्जितः ॥२०॥ स्वप्रकाशेन देहादीन् भासयन्ननपावृतः। एक एवाद्वितीयश्च सत्यज्ञानादिलक्षणः। असंगः स्वप्रभो द्रष्टा विज्ञानेनावगम्यते ॥२१॥ आचार्यशास्त्रोपदेशादैक्यज्ञानं यदा भवेत्। आत्मनोर्जीवपरयोर्मूलाविद्या तदैव हि ॥ २२ ॥ लीयते कार्यकरणैः सहैव परमात्मनि। सावस्था मुक्तिरित्युक्ता ह्युपचारोऽयमात्मनि ॥२३॥ इदं मोक्षस्वरूपं ते कथितं रघुनन्दन। ज्ञानविज्ञानवैराग्यसहितं मे परात्मनः ॥२४॥ किंत्वेतद्दुर्लभं मन्ये मद्भक्तिविमुखात्मनाम्। चक्षुष्मतामपि यथा रात्रौ सम्यङ् न दृश्यते ॥२५॥ पदं दीपसमेतानां दृश्यते सम्यगेव हि। एवं मद्भक्तियुक्तानामात्मा सम्यक् प्रकाशते ॥२६॥ मद्भक्तेः कारणं किंचिद्वक्ष्यामि शृणु तत्त्वतः ॥२७॥ मद्-

क्तसंगो मत्सेवा मद्भक्तानां निरन्तरम्। एकादश्युपवासादि मम पर्वानुमोदनम् ॥२८॥ मत्कथाश्रवणे पाठे व्याख्याने सर्वदा रतिः। मत्पूजापरिनिष्ठा च मम नामानुकीर्तनम् ॥२६॥ एवं सततयुक्तानां भक्तिरव्यभिचारिणी। मयि संजायते नित्यं ततः किमवशिष्यते ॥३०॥ अतो मद्भक्तियुक्तस्य ज्ञानं विज्ञानमेव च। वैराग्यं च भवेच्छीघ्रं ततो मुक्तिमवाप्नुयात् ॥३१॥ कथितं सर्वमेतत्ते तव प्रश्नानुसारतः। अस्मिन्मनः समाधाय यस्तिष्ठेत् स तु मुक्तिभाक् ॥३२॥ न वक्तव्यमिदं यत्नान्मद्भक्तिविमुखाय हि। मद्भक्ताय प्रदातव्यमाहूयापि प्रयत्नतः ॥३३॥ य इदं तु पठेन्नित्यं श्रद्धाभक्तिसमन्वितः। अज्ञानपटलध्वान्तं विधूय परिमुच्यते ॥३४॥ भक्तानां मम योगिनां सुविमलस्वान्तातिशान्तात्मनां मत्सेवाभिरतात्मनां च विमलज्ञानात्मनां सर्वदा। संगं यः कुरुते सदोद्यतमतिः सत्सेवनानन्यधीर्मोक्षस्तस्य करे स्थितोऽहमनिशं दृश्यो भवे नान्यथा ॥३५॥

इति श्रीभक्तिकौस्तुभे एकादश आह्निके मोक्षसाधनं नाम प्रथमः परिच्छेदः ॥

सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ १ ॥ अहं सर्वत्र समदृक् द्वेष्यो वा प्रिय एव वा। नास्ति मे कल्पकस्येव भजतोऽनुभजाम्यहम् ॥ २ ॥ मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम्। न ज्ञानं न च मोक्षः स्यात् तेषां जन्मशतैरपि ॥ ३॥ यदा पुण्यविशेषेण लभते संगतिं सताम्। मद्भक्तानां सुशान्तानां तदा मद्विषया मतिः ॥ ४ ॥ मत्कथाश्रवणे श्रद्धा दुर्लभा जायते ततः। ततः स्वरूपविज्ञानमनायासेन जायते ॥ ५ ॥ एवं मयोदितं सम्यगालोचयति योऽनिशम्। तस्य संसारदुःखानि न स्पृशन्ति कदाचन ॥ ६ ॥ पुंस्त्वे स्त्रीत्वे विशेषो वा जातिनामाश्रमादयः। न कारणं मद्भजने भक्तिरेव हि कारणम् ॥ ७ ॥ यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः। नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः सदा। तस्माद्भामिनि संक्षेपाद्वक्ष्येऽहं भक्तिसाधनम् ॥ ८ ॥ सतां संगतिरेवात्र साधनं प्रथमं स्मृतम्। द्वितीयं मत्कथालापस्तृतीयं मद्गुणेरणम्। व्याख्यातृत्वं मद्वचसां चतुर्थं साधनं भवेत् ॥ ९ ॥ आचा-

यौंपासनं भद्रे मद्बुद्ध्याऽमायया सदा। पंचमं पुण्यशीलत्वं यमादि नियमादि च ॥ १० ॥ निष्ठा मत्पूजने नित्यं षष्ठं साधनमीरितम्। मम मन्त्रोपासकत्वं सांगं ससममुच्यते ॥ ११ ॥ मद्भक्तेष्वधिका पूजा सर्वभूतेषु मन्मतिः। बाह्यार्थेषु विरागित्वं शमादिसहितं तथा ॥ १२ ॥ अष्टमं नवमं तत्त्वविचारो मम भामिनि। एवं नवविधा भक्तिः साधनं यस्य कस्य वा ॥ १३ ॥ स्त्रियो वा पुरुषस्यापि तिर्यग्योनिगतस्य वा। भक्तिः संजायते प्रेमलक्षणा शुभलक्षणे ॥१४॥ भक्तौ संजातमात्रायां मत्तत्वानुभवस्तदा। ममानुभवसिद्धस्य मुक्तिस्तत्रैव जन्मनि। स्यात्तस्मात् कारणं भक्तिर्मोक्षस्येति सुनिश्चितम् ॥ १५ ॥ प्रथमं साधनं यस्य भवेत्तस्य क्रमेण तु। भवेत्सर्वं ततो भक्तिर्मुक्तिरेव सुनिश्चितम् ॥ १६ ॥

इति श्रीभक्तिकौस्तुभे एकादश आह्निके भक्तिसाधनं नाम द्वितीयः परिच्छेदः।

भोगा मेघवितानस्थविद्युल्लेखेव चंचलाः । आयुरप्यग्निसंतप्तलोहस्थजलबिन्दुवत् ॥ १ ॥ यथा व्यालगलस्थोऽपि भेको दंशानपेक्षते । तथा कालाहिना ग्रस्तो लोको भोगानशाश्वतान् ॥ २ ॥ करोति दुःखेन हि कर्मतन्त्रं शरीरभोगार्थमहर्निशं नरः । देहस्तु भिन्नः पुरुषात्समीक्ष्यते को वात्र भोगः पुरुषेण भुज्यते ॥ ३ ॥ पितृमातृसुतभ्रातृदारबन्ध्वादिसंगमः । प्रपायामिव जन्तूनां नद्यां काष्ठौघवच्चलः ॥ ४ ॥ छायेव लक्ष्मीश्चपला प्रतीता तारुण्यमम्बूर्मिवदध्रुवं च । स्वप्नोपमं स्त्रीसुखमायुरल्पं तथापि जन्तोरभिमान एषः ॥ ५ ॥ संसृतिः स्वप्नसदृशी सदा रोगादिसंकुला । गन्धर्वनगरप्रख्या मूढस्तामनुवर्तते ॥ ६ ॥ आयुष्यं क्षीयते यस्मादादित्यस्य गतागतैः । दृष्ट्वाऽन्येषां जरामृत्यू कथंचिन्नैव बुध्यते ॥ ७ ॥ स एव दिवसः सैव रात्रिरित्येव मूढधीः । भोगाननुपतत्येव कालवेगं न पश्यति ॥ ८ ॥ प्रतिक्षणं क्षरत्येतदायुरामघटाम्बुवत् । सपत्ना इव रोगौघाः शरीरं प्रहरन्त्यहो ॥ ९ ॥ जरा व्याघ्रीव पुरतस्तर्जयन्त्यवतिष्ठते । मृत्युः

सदैव यात्येष समयं संप्रतीक्षते ॥ १० ॥ देहेऽहंभावमापन्नो राजाऽहं लोकविश्रुतः । इत्यस्मिन्मनुते जन्तु कृमिविड्भस्मसंज्ञिते ॥ ११ ॥ देहोऽहमिति या बुद्धिरविद्या सा प्रकीर्तिता । नाहं देहश्चिदात्मेति बुद्धिर्विद्येति भण्यते ॥ १२ ॥ अविद्या संसृतेर्हेतुर्विद्या तस्या निवर्तिका । तस्माद्यत्नः सदा कार्यो विद्याभ्यासे मुमुक्षुभिः ॥ १३ ॥ क्रोध एष महान् शत्रुस्तृष्णा वैतरणी नदी । सन्तोषो नन्दनवनं शान्तिरेव हि कामधुक् ॥ १४ ॥ तस्मात्त्वं सर्वदा भिन्नमात्मानं हृदि भावय । भुंजन्प्रारब्धमखिलं सुखं च दुःखमेव वा । प्रवाहपतितः कार्यं कुर्वन्नपि न लिप्यसे ॥ १५ ॥

इति श्रीभक्तिकौस्तुभे एकादश आह्निके संसारस्यानित्यताकथनं नाम तृतीयः परिच्छेदः ।

अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः । प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पांडवः । हृषीकेशं तदा वाक्यमिदमाह महीपते ॥१॥ अर्जुन उवाच । दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् । सीदंति मम गात्राणि मुखं च परिशुष्यति ॥२॥ वेपथुश्च शरीरे मे रोमहर्षश्च जायते । गांडीवं स्रंसते हस्तात्त्व-

क्चैव परिदृश्यते ॥३॥ न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः निमित्तानि च
पश्यामि विपरीतानि केशव । न च श्रेयोऽनुपश्यामि हत्वा स्वजनमा-
हवे ॥४॥ येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च । त इमेऽवस्थिता
युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ५ ॥ अहो बत महत्पापं कर्तुं व्यव-
सिता वयम् । यद्राज्यसुखलोभेन हंतुं स्वजनमुद्यताः ॥ ६ ॥ श्रीभगवा-
नुवाच । कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् । अनार्यजुष्टमस्वर्ग्यम-
कीर्तिकरमर्जुन ॥ ७ ॥ क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं
हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ८ ॥ अर्जुन उवाच । कथं भीष्ममहं
संख्ये द्रोणं च मधुसूदन । इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ९ ॥
कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः । यच्छ्रेयः स्यान्नि-
श्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ १० ॥ श्रीभगवानु-
वाच । अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे । गतासूनगतासूंश्च
नानुशोचंति पंडिताः ॥११॥ देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।

तथा देहांतरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १२ ॥ मात्रास्पर्शास्तु कौंतेय
शीतोष्णसुखदुःखदा । आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१३॥
नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोंतस्त्वनयो-
स्तत्त्वदर्शिभिः ॥ १४ ॥ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता
वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने
शरीरे ॥ १५ ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽप-
राणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥१६॥
नैनं छिंदंति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयंत्यापो न शोष-
यति मारुतः ॥१७॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः
सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ १८ ॥ अव्यक्तादीनि भूतानि
व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥१९॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ । ततो युद्धाय युज्यस्व
नैवं पापमवाप्स्यसि ॥२०॥ नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।

स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ २१ ॥ व्यवसायात्मिका
बुद्धिरेकेह कुरुनंदन । बहुशाखा ह्यनंताश्च बुद्धयोऽव्यवसायिनाम् ॥ २२ ॥
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्य-
दस्तीति वादिनः ॥ २३ ॥ कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ २४ ॥ भोगैश्वर्यप्रसक्तानां
तयापहृतचेतसाम् । व्यवसायात्मिका बुद्धिः समाधौ नविधीयते
॥ २५ ॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन । निर्द्वंद्वो नित्य-
सत्वस्थो निर्योगक्षेम आत्मवान् ॥ २६ ॥ यावानर्थ उदपाने सर्वतः
संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ २७ ॥ कर्म-
ण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते
संगोऽस्त्वकर्मणि ॥ २८ ॥ योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ २९ ॥ दूरेण
ह्यवरं कर्म बुद्धियोगाद्धनंजय । बुद्धौ शरणमन्विच्छ कृपणाः फल-

हेतवः ॥ ३० ॥ बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते । तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ३१ ॥ यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गंतासि निर्वेदं श्रोतव्यस्य च श्रुतस्य च ॥ ३२ ॥ श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला । समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ३३ ॥ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ३४ ॥ यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् । नाभिनंदति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ३५ ॥ यदा संहरते चायं कूर्मोऽगानीव सर्वशः । इंद्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ३६ ॥ यततो ह्यपि कौंतेय पुरुषस्य विपश्चितः । इंद्रियाणि प्रमाथीनि हरंति प्रसभं मनः ॥ ३७ ॥ ध्यायतो विषयान्पुंसः संगस्तेषूपजायते । संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ३८ ॥ क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥३९॥ रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् । आत्मवश्यैर्विधेयात्मा प्रसादमधि-

न चाभा-
गच्छति ॥ ४० ॥ नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना । न चाभा-
वयतः शांतिरशांतस्य कुतः सुखम् ॥ ४१ ॥ इंद्रियाणां हि चरतां यन्म-
नोऽनुविधीयते । तदस्य हरति प्रज्ञां वायुर्नावमिवांभसि ॥ ४२ ॥ या
निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा
निशा पश्यतो मुनेः ॥ ४३॥ आपूर्यमाणम् अचलप्रतिष्ठं समुद्रमापः प्रविशंति
यद्वत् । तद्वत्कामा यं प्रविशंति सर्वे स शांतिमाप्नोति न कामकामी ॥४४॥
अर्जुनउवाच । ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन । तत्किं कर्मणि
घोरे मां नियोजयसि केशव ॥ ४५ ॥ श्रीभगवानुवाच । लोकेऽस्मिन्द्वि-
विधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगि-
नाम् ॥ ४६ ॥ न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसना-
देव सिद्धिं समधिगच्छति ॥ ४७ ॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्य-
कर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ४८ ॥ कर्मेंद्रियाणि
संयम्य य आस्ते मनसा स्मरन् । इंद्रियार्थान्विमूढात्मा मिथ्याचारः स

उच्यते ॥ ४९ ॥ नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः । शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ५० ॥ यज्ञशिष्टाशिनः संतो मुच्यंते सर्वकिल्बिषैः । भुंजते ते त्वघं पापा ये पचंत्यात्मकारणात् ॥ ५१ ॥ कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् । तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ ५२ ॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ ५३ ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ५४ ॥ सक्ताः कर्मण्यविद्वांसो यथा कुर्वंति भारत । कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ ५५ ॥ न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ ५६ ॥ प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ ५७ ॥ मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ५८ ॥ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यांति

भूतानि निग्रहः किं करिष्यति ॥ ५६ ॥ श्रेयान्स्वधर्मो विगुणः परधर्मा-त्स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ६० ॥ इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः। मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ६१ ॥ एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना । जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ६२ ॥

इति श्रीभक्तिकौस्तुभे कृष्णगीतायां कर्मयोगो नाम द्वादश आह्निकः।

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः। तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥ कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः। अकर्मणश्च बोधव्यं गहना कर्मणो गतिः ॥ २ ॥ कर्मण्यकर्म यः पश्येद-कर्मणि च कर्म यः। स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ ३ ॥ यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः। ज्ञानाग्निदग्धकर्माणं तमाहुः पंडितं बुधाः ॥४॥ ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥५॥ श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः पर-

तप । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥६॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यंन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ७ ॥ अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः । सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ८ ॥ नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विंदति । ९ ॥ श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेंद्रियः । ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति ॥१०॥ अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ११ ॥ ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १२ ॥ न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१३॥ विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ १४ ॥ स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवांतरे भ्रुवोः । प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणौ ॥ १५ ॥ यतेंद्रियमनोबुद्धिर्मुनिर्मो-

त्परायणः। विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ १६ ॥
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा मां
शांतिमृच्छति ॥ १७ । उद्धरेदात्मनात्मानं नात्मानमवसादयेत्। आत्मैव
ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥१८॥ बंधुरात्मात्मनस्तस्य येनात्मैवा-
त्मना जितः। अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ १६ ॥ जिता-
त्मनः प्रशांतस्य परमात्मा समाहितः। शीतोष्णसुखदुःखेषु तथा
मानापमानयोः ॥२०॥ ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेंद्रियः। युक्त
इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ २१ ॥ सुहृन्मित्रार्युदासीनमध्य-
स्थद्वेष्यबंधुषु। साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ २२ ॥
यदा विनियतं चित्तमात्मन्येवावतिष्ठते। निःस्पृहः सर्वकामेभ्यो
युक्त इत्युच्यते तदा ॥ २३॥ यथा दीपो निवातस्थो नेंगते सोपमा
स्मृता। योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥ २४ ॥ यो मां
पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च

मे न प्रणश्यति ॥२५॥ सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्वथा वर्तमानोपि स योगी मयि वर्तते ॥ २६ ॥ आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन। सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ २७ ॥ प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः। अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥२८॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ २९ ॥ योगिनामपि सर्वेषां मद्गतेनांतरात्मना। श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ३० ॥ मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३१ ॥ त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्। मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ ३२ ॥ दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ ३३ ॥ न मां दुष्कृतिनो मूढाः प्रपद्यंते नराधमाः। माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ ३४ ॥ चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी

च भरतर्षभ ॥ ३५ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ ३६ ॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ ३७ ॥ बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ ३८ ॥ येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् । ते द्वंद्वमोहनिर्मुक्ता भजंते मां दृढव्रताः ॥ ३९ ॥ जरामरणमोक्षाय मामाश्रित्य यतंति ये । ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ ४० ॥ अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ४१ ॥ यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरम् । तं तमेवैति कौंतेय सदा तद्भावभावितः ॥ ४२ ॥ तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च । मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ४३ ॥ अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ४४ ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।

मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥ ४५ ॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया । यस्यांतःस्थानि भूतानि येन सर्वमिदं ततम् ॥४६॥ अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप । अप्राप्य मां निवर्तन्ते मृत्यु-संसार वर्त्मनि ॥ ४७ ॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ ४८ ॥ सततं कीर्तयंतो मां यतंतश्च दृढव्रताः । नमस्यंतश्च मां भक्त्या नित्ययुक्ता उपासते ॥ ४९ ॥ पितामहस्य जगतो माता धाता पितामहः । वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥ ५० ॥ गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् । प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ ५१ ॥ अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ५२ ॥ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ५३ ॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् ॥ ५४ ॥ शुभाशुभफलैरेवं

मोक्ष्यसे कर्मबंधनैः। संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ ५५ ॥ समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ५६ ॥ अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥ ५७ ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति। कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ५८ ॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम् ॥ ५९ ॥ किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा। अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ६० ॥ मन्मना भवमद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ६१ ॥ मच्चित्ता मद्गतप्राणा बोधयंतः परस्परम्। कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥६२॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयांति ते ॥ ६३ ॥

इति श्रीभक्तिकौस्तुभे कृष्णगीतायां भक्तियोगो नाम त्रयोदश आह्निकः।

अर्जुन उवाच । मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो । योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ १॥ श्रीभगवानुवाच । न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ २ ॥ अर्जुन उवाच । पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् । ब्रह्माणमीशं कमलासनस्थम् ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥३॥ अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वमनंतरूपम् । नांतं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥ ४ ॥ अनादिमध्यांतमनंतवीर्यम् अनंतबाहुं शशिसूर्यनेत्रम् । पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपंतम् ॥ ५ ॥ द्यावापृथिव्योरिदमंतरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः । दृष्ट्वाद्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्यथितं महात्मन् ॥ ६ ॥ रूपं महत्ते बहुवक्त्रनेत्रं रौद्रं तथानेककरोरुपादम् । बहूदरं भूरिकरालदंष्ट्रं दृष्ट्वा जनाः प्रव्यथितास्तथाहम् ॥ ७ ॥ नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् । दृष्ट्वैव मे प्रव्यथितांतरात्मा धृतिं न विंदामि शमं च विष्णो ॥ ८॥

मुखानि दंष्ट्रातिभयंकराणि दृष्ट्वैव कालानलसंनिभानि। दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ ६ ॥ अमी च ये संस्थितधार्त-राष्ट्राः सर्वे सहैवावनिपालसंघैः। वक्त्राणि ते तूर्णमभिद्रवन्ति दंष्ट्रा करा-लानि भयानकानि ॥ १० ॥ श्रीभगवानुवाच। कालोऽस्मि लोकक्षय-कृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः। न त्वां भविष्यन्ति ऋते हि सर्वे येऽवस्थिताताश्चाभिमुखं हि योधाः ॥ ११ ॥ तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा रिपून् भुङ्क्ष्व समृद्धराज्यम्। मयैव एते निहता हि पूर्वम् निमित्तमात्रं भव सव्यसाचिन ॥ १२ ॥ अर्जुन उवाच। स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च। रक्षांसि भीतानि दिशो द्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥१३॥ कस्मान्नमेरन् न हि ते महात्मन् गरीयसे ब्रह्मण आदिकर्त्रे। अनंत देवेश जगन्निवास त्वमक्षरं तत्सदसत्परं यत् ॥ १४ ॥ त्वमादिदेवः पुरुषः पुराण-स्त्वमस्य विश्वस्य परं निधानम्। वेत्तासि वेद्यं च परं च धाम त्वया

ततं विश्वमनंतरूप ॥१५॥ वायुर्यमोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपितामहश्च। नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ १६ ॥ नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व। अनंतवीर्यामितविक्रमस्त्वं सर्वं समाप्नोपि ततोऽसि सर्वः ॥१७॥ सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति। अजानता ते महिमानमेव मया प्रमादात्प्रणयेन वापि ॥१८॥ यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेपु। एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥१९॥ पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्। न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥ २० ॥ तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम्। पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ २१ ॥ श्रीभगवानुवाच। नाहं वेदैर्न तापेन न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ २२॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं

च तत्त्वेन प्रवेष्टुं च परंतप ॥२३॥ मत्कर्मकृच्च मद्भक्तो मत्परः संग-
वार्जतः। निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥२४॥ मय्यावेश्य
मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा
मताः ॥ २५ ॥ ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते। ते प्राप्नुवंति
मामेव सर्वभूतहिते रताः ॥ २६ ॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेत-
साम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥२७॥ मय्येव मन आ-
धत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः
॥२८॥ श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते। ध्यानात्कर्म-
फलत्यागस्त्यागाच्छांतिरनंतरम् ॥ २९ ॥ यस्मान्नोद्विजते लोको लोकान्नोद्वि-
जते च यः। हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ ३० ॥ यो न
हृष्यति न द्वेष्टि न शोचति न कांक्षति। शुभाशुभपरित्यागी भक्ति-
मान्यः स मे प्रियः ॥३१॥ समः शत्रौ च मित्रे च तथा मानापमा-
नयोः। शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ ३२ ॥ तुल्यनिंदा-

स्तुतिर्मौनी संतुष्टो येनकेनचित्। अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ ३३ ॥ अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम्। आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ३४ ॥ इन्द्रियार्थेषु वैराग्यमनहंकार एव च। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ३५ ॥ असक्तिरनभिष्वंगः पुत्रदारगृहादिषु। नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ३६ ॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥३७॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ३८ ॥ कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ ३९ ॥ प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः। यः पश्यति तथात्मानमकर्तारं स पश्यति ॥४०॥ मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥४१॥ यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स

७

सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ ४२ ॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥४३॥ सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ४४ ॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोकान्न हंति न निबध्यते ॥ ४५ ॥ सहजं कर्म कौंतेय सदोषमपि न त्यजेत् । सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४६ ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥ ४७ ॥ सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ४८ ॥ चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः । बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ४९ ॥ मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि । अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥ ५० ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया ॥५१॥ तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां

शांतिं स्थानं प्राप्स्यसि शाश्वतम् ॥५२ ॥ इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया । विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ५३ ॥ सर्वगुह्यतमं भूयः शृणु मे परमं वचः । इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥५४॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ५५ ॥ सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ५६ ॥ इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ५७ ॥ य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ५८ ॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः । भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥५९ ॥ कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा । कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ६० ॥ अर्जुन उवाच । नष्टो मोहः स्मृतिर्लब्धा त्व प्रसादान्मयाच्युत । स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ६१ ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो

भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ६२ ॥

इति श्रीभक्तिकौस्तुभे कृष्णगीतायां शरणागति योगो नाम चतुर्दश आह्निकः ।

वसुदेव उवाच । भगवन्भवतो यात्रा स्वस्तये सर्वदेहिनाम् । कृपणानां यथा पित्रोरुत्तमश्लोकवर्त्मनाम् ॥ १ ॥ महद्विचलनं नृणां गृहिणां दीनचेतसाम् । निःश्रेयसाय भगवन् कल्पते नान्यथा क्वचित् ॥२॥ भूतानां देवचरितं दुःखाय च सुखाय च । सुखायैव हि साधूनां त्वादृशा-मच्युतात्मनाम् ॥ ३ ॥ भजन्ति ये यथा देवान्देवा अपि तथैव तान् । छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥४॥ ब्रह्मंस्तथापि पृच्छामो धर्मान्भागवतांस्तव । यान् श्रुत्वा श्रद्धया मर्त्यो मुच्यते विश्वतो भयात् ॥५॥ नारद उवाच । सम्यगेतद्व्यवसितं भवता भरतर्षभ । यत्पृच्छसे भागवतान्धर्मांस्त्वं विश्वभावनान् ॥ ६ ॥ श्रुतोऽनुपठितो ध्यात आदृतो वाऽनुमोदितः । सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हि ॥ ७ ॥ त्वया परमकल्याणः पुण्यश्रवणकीर्तनः । स्मारितो भगवानद्य देवो नारा-

यणो मम ॥ ८ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । आर्षभाणां च संवादं विदेहस्य महात्मनः ॥ ९ ॥ कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः । आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ १० ॥ त एते भगवद्रूपं विश्वं सदसदात्मकम् । आत्मनोऽव्यतिरेकेण पश्यन्तो व्यचरन्महीम् ॥ ११ ॥ विदेह उवाच । मन्ये भगवतः साक्षात्पार्षदान्वो मधुद्विषः । विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि ॥ १२ ॥ दुर्लभो मानुषो देहो देहिनां क्षणभंगुरः । तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥ १३ ॥ अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः । संसारेऽस्मिन्क्षणार्धोऽपि सत्संगः शेवधिर्नृणाम् ॥ १४ ॥ धर्मान्भागवतान् ब्रूत यदि नः श्रुतये क्षमम् । यैः प्रसन्नः प्रपन्नाय दास्यत्यात्मानमप्यजः ॥ १५ ॥ कविरुवाच । मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् । उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्र निवर्तते भीः ॥ १६ ॥ ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये । अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥ १७ ॥ याना-

२५१

स्थाय नरो राजन्न प्रमाद्येत कर्हिचित्। धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ १८ ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात्। करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥ १९ ॥ भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः। तन्माययाऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा ॥ २० ॥ अविद्यमानोऽप्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथौ यथा। तत्कर्मसंकल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥२१॥ शृण्वन्सुभद्राणि रथांगपाणेर्जन्मानि कर्माणि च यानि लोके। गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसंगः ॥ २२ ॥ एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः। हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ २३ ॥ खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन्। सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्यः ॥ २४ ॥ भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककालः। प्रपद्यमानस्य यथाऽश्नतः स्युस्तुष्टिः पुष्टिः

क्षुदपायोऽनुघासम् ॥ २५ ॥ इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः । भवन्ति वै भागवतस्य राजंस्ततः परां शान्तिमुपैति साक्षात् ॥ २६ ॥ राजोवाच । अथ भागवतं ब्रूत यद्धर्मो यादृशो नृणाम् । यथाऽऽचरति यद्ब्रूते यर्लिंगैर्भगवत्प्रियः ॥ २७ ॥ हरिरुवाच । सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ २८ ॥ ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च । प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ २९ ॥ अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ ३० ॥ गृहीत्वापीन्द्रियैरर्थान्यो न द्वेष्टि न हृष्यति । विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः ॥ ३१ ॥ देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः । संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ३२ ॥ न कामकर्मबीजानां यस्य चेतसि संभवः । वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ३३ ॥ न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः । सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥ ३४ ॥

न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा । सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ३५ ॥ त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् । न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः ॥ ३६ ॥ भगवत उरुविक्रमांघ्रिशाखानखमणिचन्द्रिकया निरस्ततापे । हृदि कथमुपसीदतां पुनः स प्रभवति चन्द्र इवोदितेऽर्कतापः ॥ ३७ ॥ विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽप्यघौघनाशः । प्रणयरशनया धृतांघ्रिपद्मः स भवति भागवतप्रधान उक्तः ॥ ३८ ॥ प्रबुद्ध उवाच । कर्माण्यारभमाणानां दुःखहत्यै सुखाय च । पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥ ३९ ॥ नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना । गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥ ४० ॥ एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् । सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥४१॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥ ४२ ॥ तत्र भागवतान् धर्मान्शिक्षेद्गुर्वात्मदैवतः । अमा-

यथाऽनुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥ ४३ ॥ सर्वतो मनसोऽसंगमादौ संगं च साधुषु । दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥ ४४ ॥ शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् । ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥ ४५ ॥ सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् । विविक्तचीरवसनं सन्तोषो येन केनचित् ॥ ४६ ॥ श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि । मनोवाक्कर्मदण्डं च सत्यं शमदमावपि ॥ ४७ ॥ श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः । जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥ ४८ ॥ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् । दारान्सुतान्गृहान्प्राणान्यत्परस्मै निवेदनम् ॥ ४९ ॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् । परिचर्यां चोभयत्र महत्सु नृषु साधुषु ॥ ५० ॥ परस्परानुकथनं पावनं भगवद्यशः । मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥ ५१ ॥ स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् । भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥ ५२ ॥ क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति

नन्दन्ति वदन्त्यलौकिकाः। गायन्ति नृत्यन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥५३॥ इति भागवतान्धर्मांञ्छिक्षन् भक्तया तदुत्थया। नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ ५४ ॥

इति श्री भक्तिकौस्तुभे भागवत धर्मनिरूपणं पूर्वार्द्धं नाम पञ्चदश आह्निकः।

अन्तरिक्ष उवाच। एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज ॥ ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये ॥१॥ एवं सृष्टानि भूतानि प्रविष्टः पञ्चधातुभिः। एकधा दशधात्मानं विभजञ्जुषते गुणान् ॥ २ ॥ गुणैर्गुणान्स भुञ्जान आत्मप्रद्योतितैः प्रभुः॥ मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥३॥ कर्माणि कर्मभिः कुर्वन्सनिमित्तानि देहभृत् ॥ तत्तत्कर्मफलं गृह्णन्भ्रमतीह सुखेतरत् ॥ ४ ॥ इत्थं कर्मगतीर्गच्छन्बह्वभद्रवहाः पुमान् ॥ आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ॥५॥ धातूपप्लव आसन्ने व्यक्तं द्रव्यगुणात्मकम् ॥ अनादिनिधनः कालो ह्यव्यक्तायापकर्षति ॥ ६ ॥ शतवर्षा ह्यनावृष्टिर्भविष्यत्युल्बणा भुवि ॥ तत्कालोपचितोष्णार्को लोकांस्त्रीन्प्रतपिष्यति ॥ ७ ॥

पातालतलमारभ्य संकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखो विष्वग्वर्धते वायुनेरितः ॥ ८ ॥ सांवर्तको मेघगणो वर्षति स्म शतं समाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयते सलिले विराट् ॥९॥ ततो विराजमुत्सृज्य वैराजः पुरुषो नृप ॥ अव्यक्तं विशते सूक्ष्मं निरिन्धन इवानलः ॥१०॥ वायुना हृतगन्धा भूः सलिलत्वाय कल्पते ॥ सलिलं तद्धृतरसं ज्योतिष्ट्वायोपकल्पते ॥११॥ हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयते ॥ हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते ॥ कालात्मना हृतगुणं नभ आत्मनि लीयते ॥१२॥ इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ प्रविशन्ति ह्यहंकारं स्वगुणैरहमात्मनि । एषा माया भगवतः सर्गस्थित्यन्तकारिणी ॥१३॥ पिप्पलायन उवाच । स्थित्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ॥ देहेन्द्रियासुहृदयानि चरन्ति येन संजीवितानि तदवेहि परं नरेन्द्र ॥१४॥ नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः ॥ शब्दोऽपि बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥१५॥ सत्त्वं रजस्तम इति

त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम् ॥ ज्ञानक्रियार्थफलरूपतयो-
रुशक्ति ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥१६॥ नात्मा जजान न
मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि ॥ सर्वत्र शश्वदन-
पाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥१७॥ अण्डेषु पेशिषु
तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति तत्र तत्र ॥ सन्ने यदिन्द्रिय-
गणेऽहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥१८॥ यर्ह्यब्जनाभ-
चरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि ॥ तस्मिन्विशुद्ध
उपलभ्यत आत्मतत्त्वं साक्षाद्यथामलदृशोः सवितृप्रकाशः ॥१९॥ आविर्होत्र
उवाच । कर्माकर्मविकर्मेति वेदवादो न लौकिकः ॥ वेदस्य चेश्वरात्मत्वा-
त्तत्र मुह्यन्ति सूरयः ॥२०॥ परोक्षवादो वेदोऽयं बालानामनुशासनम् ॥
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥२१॥ नाचरेद्यस्तु वेदोक्तं स्वयम-
ज्ञोऽजितेन्द्रियः ॥ विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥२२॥ वेदोक्तमेव
कुर्वाणो निःसंगोऽर्पितमीश्वरे ॥ नैष्कर्म्यां लभते सिद्धिं रोचनार्था फल-

श्रुतिः ॥२३॥ चमस उवाच । मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ॥ चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥२४॥ य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ॥ न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ॥ २५ ॥ दूरे हरिकथाः केचिद्दूरे चाच्युतकीर्तनाः ॥ स्त्रियः शूद्रादयश्चैव तेऽनुकम्प्या भवादृशाम् ॥२६॥ विप्रो राजन्यवैश्यौ च हरेः प्राप्ताः पदान्तिकम् ॥ श्रौतेन जन्मनाथापि मुह्यन्त्याम्नायवादिनः ॥ २७ ॥ कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः ॥ वदन्ति चाटुकान्मूढा यया माध्व्या गिरोत्सुकाः ॥२८॥ रजसा घोरसंकल्पाः कामुका अहिमन्यवः ॥ दाम्भिका मानिनः पापा विहसन्त्यच्युतप्रियान् ॥ २९ ॥ वदन्ति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यसुखेषु चाशिषः ॥ यजन्त्यसृष्टान्नविधानदक्षिणं वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ३० ॥ श्रिया विभूत्याभिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा ॥ जातस्मयेनान्धधियः सहेश्वरान्सतोऽवमन्यन्ति हरिप्रियान्खलाः ॥३१॥ सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्व-

रम् ॥ वेदोपगीतं च न शृण्वते बुधा मनोरथानां प्रवदन्ति वार्तया ॥३२॥ लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना ॥ व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥३३॥ धनं च धर्मैकफलं यतो वै ज्ञानं सविज्ञानमनुप्रशान्ति ॥ गृहेषु युञ्जन्ति कलेवरस्य मृत्युं न पश्यन्ति दुरन्तवीर्यम् ॥ ॥३४॥ यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा ॥ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मम् ॥ ३५ ॥ ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ॥ पशून्द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥ ३६ ॥ द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् ॥ मृतके सानुबन्धेऽस्मिन्बद्धस्नेहाः पतन्त्यधः ॥ ३७ ॥ ये कैवल्यमसंप्राप्ता ये चातीताश्च मूढताम् ॥ त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते ॥ ३८ ॥ एत आत्महनोऽशान्ता अज्ञाने ज्ञानमानिनः ॥ सीदन्त्यकृतकृत्या वै कालध्वस्तमनोरथाः ॥ ३९ ॥ हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ॥ तमो विशन्त्यनिच्छन्तो वासुदेव-

पराङ्मुखाः ॥ ४० ॥ कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ॥
कृष्णाजिनोपवीताक्षान्बिभ्रद्दण्डकमण्डलू ॥ ४१ ॥ त्रेतायां रक्तवर्णोऽसौ
चतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः ॥ ४२ ॥
द्वापरे भगवान् श्यामः पीतवासा निजायुधः ॥ श्रीवत्सादिभिरङ्कैश्च
लक्षणैरुपलक्षितः ॥४३॥ तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ॥ यजन्ति
वेदतन्त्राभ्यां कलावपि यथा शृणु ॥ ४४ ॥ कृष्णवर्णं त्विषाऽकृष्णं साङ्गो-
पाङ्गास्त्रपार्षदम् ॥ यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥ ४५ ॥ ध्येयं
सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ॥ भृत्या-
र्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥ ४६ ॥
त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्वन्दे महापुरुष ते चरणारविन्दम् ॥ ४७ ॥
कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ॥ यत्र संकीर्तनेनैव सर्वः
स्वार्थोऽभिलभ्यते ॥ ४८ ॥ नह्यतः परमो लाभो देहिनां भ्राम्यतामिह ॥ यतो

विन्देत परमां शान्तिं नश्यति संसृतिः ॥ ४९ ॥ कृतादिषु प्रजा राजन्कलाविच्छन्ति संभवम् ॥ कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ ५० ॥ क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ५१ ॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ॥ प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः ॥ ५२ ॥ देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन् ॥ सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ॥ ५३ ॥ स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ॥ विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः ॥ ५४ ॥

इति श्री भक्तिकौस्तुभे भागवत धर्मनिरूपणं उत्तरार्द्धं नाम षोडश आह्निकः ॥

श्रीभगवानुवाच । पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् । कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ १ ॥ तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् । आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥ २ ॥ ज्ञान-

विज्ञानसंयुक्त आत्मभूतः शरीरिणाम् । आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ ३ ॥ दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते । गुणबुद्ध्या च विहितं न करोति यथार्भकः ॥४॥ सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः । पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ॥५॥ प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः समुद्धरन्ति ह्यात्मानमात्मनैवशुभाशयात् ॥६॥आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः । यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥ ७ ॥ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् । गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ॥ ८ ॥ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा ॥ ९ ।
उद्धव उवाच । संसारकूपे पतितं विषयैर्मुषितेक्षणम् । ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः ॥ १० ॥ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाखिलात् । अप्रमत्त इदं पश्येत् ग्रस्तं कालाहिना जगत् ॥ ११ ॥ तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश । पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वा-

तपत्रादमृताभिवर्षात् ॥ १२ ॥ दष्टं जनं संपतितं विलेऽस्मिन् कालाहिना तुद्रसुखोरुतर्षम् ॥ समुद्धरैनं कृपयाऽऽपवर्ग्यैर्वचोभिरासिञ्च महानुभाव ॥ ॥ १३ ॥ श्रीभगवान् उवाच । अन्वीक्षेत विशुद्धात्मा देहिनां विषयात्मनाम् । गुणेषु तत्त्वध्यानेन सर्वारम्भ विपर्ययम् ॥ १४ ॥ निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् । जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥ १५ ॥ यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित् । मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ॥१६॥ न देहिनां सुखं किंचित् विद्यते विदुषामपि । तथा च दुःखं मूढानां वृथाहंकरणं परम् ॥१७ ॥ लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ॥ ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुषः ॥ १८ ॥ काल आत्मागमो लोकः स्वभावो धर्म एव च ॥ इति मां बहुधा प्राहुर्गुणव्यतिकरे सति॥१९॥ श्रीभगवानुवाच । बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥ गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ २० ॥ शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया । स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी

॥२१॥ विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्। मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ २२ ॥ एकस्यैव ममांशस्य जीवस्यैव महामते। बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः ॥२३॥ अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते। विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि ॥२४॥ सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे। एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥२५॥ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः। योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥२६॥ देहस्थोऽपि न देहस्थो विद्वान्स्वप्नाद्यथोत्थितः। अदेहस्थोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा ॥२७॥ इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च ॥ गृह्यमाणेष्वहंकुर्यान्न विद्वान्यस्त्वविक्रियः ॥२८॥ दैवाधीने शरीरेऽस्मिन्गुणभाव्येन कर्मणा। वर्तमानोऽबुधस्तत्र कर्तास्मीति निबध्यते ॥ २९ ॥ न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा। वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥३०॥ न कुर्यान्न

वदेत्किंचिन्न ध्यायेत्साध्वसाधु वा। आत्मारामोनया वृत्त्या विचरेज्जडव-न्मुनिः ॥ ३१ ॥ शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः ॥३२॥ गां दुग्धदोहामसतीं च भार्यां देहं परा-धीनमसत्प्रजां च। वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःख-दुःखी ॥ ३३ ॥ यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य। लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥ ३४ ॥ श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः। गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुः ॥ ३५ ॥ मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः । लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥ ३६ ॥ सत्सङ्गलब्धया भक्त्या मयि मां स उपासिता। स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥३७॥ धर्मा-न्संत्यज्य यः सर्वान्मां भजेत स सत्तमः। ज्ञात्वाज्ञात्वाथ ये वै मां यावा-न्यश्चास्मि यादृशः। भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३८ ॥ मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनम्। परिचर्या स्तुतिः प्रह्वगुणकर्मानु-

कीर्तनम् ॥३९॥ मत्कथाश्रवणे श्रद्धा मदनुध्यानमुद्धव । सर्वलाभोपहरणं दास्येनात्मनिवेदनम् ॥४०॥ मज्जन्मकर्मकथनं मम पर्वानुमोदनम्। गीत-ताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ॥४१॥ यात्रा बलिविधानं च सर्ववार्षिकपर्वसु। वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ॥४२॥ ममार्चास्थापने श्रद्धा स्वतः संहृत्य चोद्यमः। उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि ॥ ४३ ॥ संमार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः । गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ ४४ ॥ अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् । अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ॥ ४५ ॥ यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥ ४६ ॥ वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः । त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥ ४७ ॥ शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ ४८ ॥ सूर्यं चाभ्यर्हणं प्रेष्ठं सलिलेसलिलादिभिः । श्रद्धयोपाहृतं प्रेष्ठं भक्तेन

मम वार्यपि । भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ ४९ ॥ सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् । मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥५०॥ नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च । महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥५१॥ दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून्सुरान् । स्वे स्वे स्थाने त्वभिमुखान्पूजयेत्प्रोक्षणादिभिः ॥ ५२ ॥ स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि । स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥ ५३ ॥ कर्तुश्च सारथेर्हेतोरनुमोदितुरेव च । कर्मणां भागिनः प्रेत्य भूयो भूयसि तत्फलम् ॥ ५४ ॥ प्रायेण भक्तियोगेन सत्संगेन विनोद्धव । नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥५५॥ श्रीभगवानुवाच । स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ ५६ ॥ यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः । य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥५७॥ द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः । दशैक-

शाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः॥५८॥अदन्ति चैकं फलम-
स्य गृध्रा ग्रामेचरा एकमरण्यवासाः । हंसा य एकं बहुरूपमिज्यैर्मायामयं वेद
सवेद वेदम् ॥५९॥ एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः ।
विवृश्च्य जीवाशयमप्रमत्तः संपद्य चात्मानमथ त्यजास्त्रम् ॥६०॥ श्रीभग-
वानुवाच । सत्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः । सत्वेनान्यतमौ
हन्यात्सत्त्वं सत्त्वेन चैव हि ॥६१॥ सात्त्विकान्येव सेवेत पुमान्सत्त्वविवृद्धये ।
ततो धर्मस्ततो ज्ञानं यावत्स्मृतिरपोहनम् ॥६२॥ उद्धव उवाच । विदन्ति
मर्त्याः प्रायेण विषयान्पदमापदाम् । तथापि भुञ्जते कृष्ण तत्कथं श्वखरराज-
वत् ॥६३॥ श्रीभगवानुवाच । अहमित्यन्यथाबुद्धिः प्रमत्तस्य यथा हृदि ।
उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ ६४ ॥ एतावान्योग आदिष्टो
मच्छिष्यैः सनकादिभिः। सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा ॥६५॥

इति श्री भक्तिकौस्तुभे परमतत्वनिरूपणं प्रथमांशो नाम सप्तदश आह्निकः ॥

श्रीभगवानुवाच । सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः ॥ तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥ १ ॥ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ॥ प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥ २ ॥ गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति ॥ एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ ३ ॥ अनूर्मिमत्त्वं देहेऽस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवः कामरूपं परकायप्रवेशनम् ॥ ४ ॥ स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम् ॥ यथा संकल्पसंसिद्धिराज्ञाप्रतिहता गतिः ॥ ५ ॥ त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ॥ अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ॥ ६ ॥ यथा संकल्पयेद्बुद्ध्या यदा वा मत्परः पुमान् ॥ मयि सत्ये मनो युञ्जंस्तथा तत्समुपाश्नुते ॥७॥ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् ॥ कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥ ८ ॥ मद्भक्त्या शुद्धसत्त्वस्य योगिनो धारणाविदः ॥ तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ ९ ॥ मद्विभूतीरभिध्यायन् श्रीवत्सास्त्रविभूषिताः ॥ ध्वजात-

पत्रव्यजनैः स भवेदपराजितः ॥ १० ॥ सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ अहं योगस्य सांख्यस्य धर्मस्य ब्रह्मवादिनाम् ॥ ११ ॥ तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ॥ वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ॥ १२ ॥ वाचं यच्छ मनो यच्छ प्राणान्यच्छेन्द्रियाणि च ॥ आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥ १३ ॥ यो वै वाङ्मनसी सम्यगसंयच्छन्धिया यतिः ॥ तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥ १४ ॥ तस्मान्मनोवचः प्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥ १५ ॥ ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ॥ कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥ १६ ॥ समुद्धरन्ति ये विप्रं सीदन्तं मत्परायणम् । तानुद्धरिष्ये नचिरादापद्भ्यो नौरिवार्णवात् ॥ १७ ॥ सर्वाः समुद्धरेद्राजा पितेव व्यसनात्प्रजाः ॥ आत्मानमात्मना धीरो यथा गजपतिर्गजान् ॥ १८ ॥ सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् । खड्गेन वा पदाक्रान्तो न श्ववृत्त्या कथंचन ॥ १९ ॥ तपस्तीर्थं जपो दानं पवित्रा-

णीतराणि च। नालं कुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥ २० ॥
तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव । ज्ञानविज्ञानसंपन्नो भज
मां भक्तिभावतः ॥ २१ ॥ ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥ २२ ॥ कर्मणां
परिणामित्वादाविरिञ्चादमङ्गलम् । विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्ट-
वत् ॥ २३ ॥ भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ । पुनश्च कथयि-
ष्यामि मद्भक्तेः कारणं परम् ॥ २४ ॥ श्रद्धामृतकथायां मे शश्वन्मदनुकी-
र्तनम् । परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ॥ २५ ॥ आदरः परिच-
र्यायां सर्वाङ्गैरभिवन्दनम् । मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः
॥ २६ ॥ मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् । मय्यर्पणं च मनसः सर्व-
कामविवर्जनम् ॥ २७ ॥ मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च । इष्टं
दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ॥ २८ ॥ एवं धर्मैर्मनुष्याणामुद्धवात्म-
निवेदिनाम् । मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ २९ ॥

धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् । गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥ ३० ॥ अहिंसा सत्यमस्तेयमसंगो ह्रीरसंचयः । आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमा भयम् ॥ ३१ ॥ शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् । तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥३२॥ एते यमाः सनियमा उभयोर्द्वादश स्मृताः । पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥ ३३ ॥ शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः । तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः ॥ ३४ ॥ दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम् । स्वभावविजयः शौर्यं सत्यं च समदर्शनम् ॥ ३५ ॥ ऋतं च सूनृता वाणी कविभिः परिकीर्तिता । कर्मस्वसंगमः शौचं त्यागः संन्यास उच्यते ॥ ३६ ॥ धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः । दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम् ॥ ३७ ॥ भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः । विद्यात्मनि भिदा बाधो जुगुप्सा ह्रीरकर्मसु ॥ ३८ ॥ श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः । दुःखं कामसुखापेक्षा

पण्डितो बन्धमोक्षवित् ॥ ३९ ॥ मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः । उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः ॥ ४० ॥ नरकस्तम उन्नाहो बन्धुर्गुरुरहं सखे । गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते ॥ ४१ ॥ दरिद्रो यस्त्वसंतुष्टः कृपणो योऽजितेन्द्रियः । गुणेष्वसक्तधीरीशो गुणसंगो विपर्ययः ॥ ४२ ॥ एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः । किं वर्णितेन बहुना लक्षणं गुणदोषयोः । गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥ ४३ ॥ श्रीभगवानुवाच । योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥४४॥ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु । तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ॥४५॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥ ४६ ॥ छिद्यमानं यमैरेतैः कृतनीडं वनस्पतिम् । खगः स्वकेतमुत्सृज्य क्षेमं याति ह्यलम्पटः ॥ ४७ ॥ अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः । मुक्तसङ्गः परं बुद्ध्वा निरीह

उपशाम्यति ॥ ४८ ॥ एष वै परमो योगो मनसः संग्रहः स्मृतः । हृदयज्ञत्वमन्विच्छन्दम्यस्येवार्वतो मुहुः ॥ ४९ ॥ निर्विण्णस्य विरक्तस्य पुरुषस्योक्तवेदिनः । मनस्त्यजति दौरात्म्यं चिन्तितस्यानुचिन्तया ॥ ५० ॥

इति श्रीभक्तिकौस्तुभे परमतत्वनिरूपणं द्वितीयांशोनाम अष्टादश आह्निकः ।

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः । विपर्ययस्तु दोषः स्यादुभयोरेष निश्चयः ॥ १ ॥ कर्मणां जात्यशुद्धानामनेन नियमः कृतः । गुण दोषविधानेन सङ्गानां त्याजनेच्छया ॥ २ ॥ क्वचिद् गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः । गुणदोषार्थनियमस्तद्भिदामेव बाधते ॥ ३ ॥ समानकर्माचरणं पतितानां न पातकम् । औत्पत्तिको गुणः सङ्गो न शयानः पतत्यधः ॥४॥ शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम् । अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥ ५ ॥ वेदा ब्रह्मात्मविषयाः त्रिकाण्डविषया इमे । परोक्षवादा ऋषयः परोक्षं च मम प्रियम् ॥ ६ ॥ फलश्रुतिरियं नृणां न श्रेयो रोचनं परम् । श्रेयो विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥७॥ एवं

पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम् । मानिनां चातिस्तब्धानां मद्वार्ताऽपि न रोचते ॥ ८ ॥ आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदाऽर्थनिष्ठः । व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ९ ॥ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथ वा । ताडितः सन्निबद्धो वा वृत्त्या वा परिहापितः ॥ १० ॥ निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः । श्रेयस्कामः कृच्छ्रगत आत्मनात्मनमुद्धरेत् ॥११॥ उद्धव उवाच । सुदुःसहमिमं मन्ये आत्मन्यसदतिक्रमम् । विदुषामपि विश्वात्मन् प्रकृतिर्हि बलीयसी । ऋते त्वद्धर्मनिरताञ्छान्तांस्ते चरणालयान् ॥ १२ ॥ बार्हस्पत्य स वै नात्र साधुर्वै दुर्जनैरितैः । दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥ १३ ॥ न तथा तप्यते विद्धः पुमान् बाणैः सुमर्मगैः । यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ १४ ॥ परस्वभाव कर्माणि यः प्रशंसति निन्दति । स आशु भ्रश्यति स्वार्थादसत्यभिनिवेशतः ॥ १५ ॥ तैजसे निद्रयापन्नो पिण्डस्थो नष्टचेतनः । मायां प्राप्नोति मृत्युं वा तद्वन्नार्थदृक् पुमान् ॥ १६ ॥ किं

भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत्। वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ १७ ॥ छायाप्रत्याह्वयाभासाह्यसन्तोऽप्यर्थकारिणः । एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ १८ ॥ आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः। त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥१९॥ निरूपितेऽयं त्रिविधा निर्मूला भातिरात्मनि। इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ २० ॥ एतद्विद्वान्मदुदितं ज्ञानविज्ञाननैपुणम्। न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ २१ ॥ यावद्देहेन्द्रियप्राणैरात्मनः संनिकर्षणम्। संसार फलवांस्तावदपार्थोऽप्यविवेकिनः ॥ २२ ॥ यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत्। स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ २३ ॥ शोकहर्षभयक्रोधलोभमोहस्पृहादयः । अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥२४॥ देहेन्द्रियप्राणमनोभिमानो जीवोऽन्तरात्मा गुणकर्ममूर्तिः। सूत्रं महानित्युरुधेव गीतः संसार आधावति कालतन्त्रः ॥२५॥ अमूलमेतद्बहुरूपरूपितं मनोवचः प्राणशरीरकर्म। ज्ञानासिनोपासनया शितेन छित्त्वा

सीत वाङ्मनःकायवृत्तिभिः ॥४४॥ सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया । परिपश्यन्नुपरमेत्सर्वतो मुक्तसंशयः ॥४५॥ अयं हि सर्वकल्पानां सध्रीचीनो मतो मम । मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥४६॥ यो यो मयि परे धर्मः कल्प्यते निष्फलाय चेत् । तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥४७॥ एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् । यत्सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतम् ॥४८॥

इति श्रीभक्तिकौस्तुभे परमतत्त्वनिरूपणे तृतीयांशो नाम एकोनविंश आह्निकः ।

शश्वत्परार्थसर्वेहः परार्थैकान्तसंभवः । साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ १ ॥ भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः । तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥ २ ॥ विषयेष्वाविशन्योगी नानाधर्मेषु सर्वतः । गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ ३ ॥ दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग् भवेत् । एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ ४ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते । मायामात्रमिदं

राजन्नानात्वं प्रत्यगात्मनि ॥ ५ ॥ गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति । तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥ ६ ॥ नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् । कुर्वन्विन्देत संतापं कपोत इव दीनधीः ॥ ७ ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः । प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥ ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित् । शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥ ९ ॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः । मक्षिका इव संगृह्णन्सह तेन विनश्यति ॥ १० ॥ यावत् भ्रियेत जठरं तावत् सत्वं हि देहिनाम । अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥ ११ ॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्य कुशलो नरः । सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥ १२ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् । यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥ १३ ॥ सामिषं कुररं जघ्नुर्बलिनो ये निरामिषा । तदामिषं परित्यज्य स सुखं समविन्दत ॥ १४ ॥ द्वावेव चिन्तया मुक्तौ पर-

मुनिर्गां विचरत्यतृष्णः ॥२६॥ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यम-
थानुमानम् आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥२७॥
यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्चसर्वस्य हिरण्मयस्य । तदेव मध्ये व्यव-
हार्यमाणं नानापदेशैरहमस्य तद्वत् ॥२८॥ विज्ञानमेतत्त्रियवस्थमङ्ग गुणत्रयं
कारणकार्यकर्तृ । समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥२९॥
न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रम् । भूतं प्रसिद्धं च
परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥३०॥ अविद्यमानोऽप्यवभासते
यो वैकारिको राजससर्ग एषः । ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मेन्द्रियार्था-
त्मविकारचित्रम् ॥३१॥ तथापि संगः परिवर्जनीयो गुणेषु माया रचितेषु
तावत् । मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनःकषायः ॥३२॥ यथा-
ऽऽमयोऽसाधु चिकित्सितो नृणां पुनः पुनः संतुदति प्ररोहन् । एवं मनोऽपक्व
कषायकर्म कुयोगिनं विध्यति सर्वसंगम् ॥३३॥ यथा हि भानोरुदयो नृच-
क्षुषां तमो निहन्यान्न तु सद्विधत्ते एवं समीक्षा निपुणा सती मे हन्यात्त-

मित्वं पुरुषस्य बुद्धेः ॥३४॥ उद्धव उवाच। सुदुष्करामिमां मन्ये योगचर्यामनात्मनः। यथाऽञ्जसा पुमान् सिद्ध्येत्तन्मे ब्रूह्यञ्जसाऽच्युत ॥ ३५ ॥ श्रीभगवानुवाच। हन्त ते कथयिष्यामि मम धर्मान्सुमंगलान्। यान् श्रद्धया चरन्मर्त्यो मृत्युं जयति दुर्जयम् ॥ ३६ ॥ कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन्। मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः ॥३७॥ देशान्पुण्यान्संश्रयेत मद्भक्तैः साधुभिः श्रितान्। देवासुरमनुष्येषु मद्भक्ताचरितानि च ॥३८॥ पृथक् सत्रेण वा मह्यं पर्वयात्रामहोत्सवान्। कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः ॥३९॥ मामेव सर्वभूतेषु बहिरन्तरपावृतम्। ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥४०॥ इति सर्वाणि भूतानि मद्भावेन महामते। सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥४१॥ नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात्। स्पर्धासूयातिरस्काराः साहंकारा वियंति हि ॥४२॥ विसृज्य स्मयमानान्स्वान्दृशं व्रीडां च दैहिकीम्। प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥४३॥ यावत्सर्वेषु भूतेषु मद्भावो नोपजायते। तावदेवमुपा-

मानन्द आप्लुतौ। यो विमुग्धो जडो वालो यो गुणेभ्यः परं गतः ॥ १५ ॥
वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि। एक एव चरेत्तस्मात्कुमार्या इव
कङ्कणः ॥ १६ ॥ परनिन्दा न कर्त्तव्या विना विष्णुविरोधिनः। कालो नेयो
वृथा नैव विना कृष्णनिषेवया ॥ १७ ॥ निन्दां भगवतः शृण्वंस्तद्भक्तपूरुषस्य
वा। यो नापैति ततः सद्यो यात्यधः सुकृतात् च्युतः ॥१८॥ गृहारम्भोऽति-
दुःखाय विफलाश्चाध्रुवात्मनः। सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥१९॥
यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः। तया विहृत्य भूयस्तां ग्रसत्येवं
महेश्वरः ॥ २० ॥ यत्र यत्र मनो देही धारयेत्सकलं धिया। स्नेहाद्द्वेषाद्भया-
द्वापि याति तत्तत्सरूपताम् ॥ २१ ॥ कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवे-
शितः। याति तत्सात्मतां राजन्पूर्वरूपमसंत्यजन् ॥ २२ ॥ नह्येकस्माद्गुरो-
र्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम्। ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः
॥ २३ ॥ पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः। को भवानिति वः प्रश्नो
वाचारम्भो ह्यनर्थकः ॥ २४ ॥ मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः।

अहमेव न मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥ २५ ॥ गुणेष्वाविशते चेतो गणाश्चेतसि च प्रजाः । जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥ २६ ॥ यावन्नानार्थधीः पुंसो न निवर्तेत युक्तिभिः । जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥ २७ ॥ ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् । विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥ २८ ॥ सुप्तप्रबोधयोः संधावात्मनो गतिमात्मदृक् । पश्यन्बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥ २९ ॥ स्त्रीणां स्त्रीसङ्गिनां संगं त्यक्त्वा दुरत आत्मवान् ॥ क्षेमे विविक्त आसीनश्चिन्तयेन्मामतन्द्रितः ॥ ३० ॥ न तथास्य भवेत्क्लेशो बन्धश्चान्यप्रसंगतः ॥ योषित्संगाद्यथा पुंसो यथा तत्संगिसंगतः ॥ ३१ ॥ शमो दमस्तपः शौचं संतोषः क्षान्तिरार्जवम् । मद्भक्तिश्च दया सत्यं ब्रह्मप्रकृतयस्त्विमाः ॥३२॥ तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः । स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमाः ॥ ३३ ॥ आस्तिक्यं दाननिष्ठा च अदम्भो ब्रह्मसेवनम् । अतुष्टिर-

र्थोपचयैर्वैश्यप्रकृतयस्त्विमाः ॥ ३४ ॥ शुश्रूषणं द्विजगवां देवानां चाप्य-
मायया । तत्र लब्धेन संतोषः शूद्रप्रकृतयस्त्विमाः ॥ ३५ ॥ अशौचमनृतं
स्तेयं नास्तिक्यं शुष्कविग्रहः । कामः क्रोधश्च तर्षश्च स्वभावोऽन्तेवसायि-
नाम् ॥ ३६ ॥ कुटुम्बेषु न सज्जेत न प्रमाद्येत्कुटुम्ब्यपि । विपश्चिन्नश्वरं
पश्येददृष्टमपि दृष्टवत् ॥ ३७ ॥ पुत्रदाराप्तबन्धूनां संगमः पान्थसंगमः ।
अनुदेहं वियन्त्येते स्वप्नो निद्रानुगो यथा ॥ ३८ ॥ यस्त्वासक्तमतिर्गेहे
पुत्रवित्तैषणातुरः । स्त्रैणः कृपणधीर्मूढो ममाहमिति बध्यते ॥ ३९ ॥
अहो मे पितरौ वृद्धौ भार्या बालात्मजात्मजाः । अनाथा मामृते दीनाः कथं
जीवन्ति दुःखिताः ॥४०॥ एवं गृहाशयाक्षिप्तहृदयो मूढधीरयम् । अतृप्तस्तान-
नुध्यायन्मृतोऽन्धं विशते तमः ॥४१॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्ज-
लम् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ४२ ॥ मौनानीहानिलायामा
दण्डा वाग्देहचेतसाम् ॥ नह्येते यस्य संत्यङ्ग वेणुभिर्न भवेद्यतिः ॥ ४३ ॥
अन्वीक्षेतात्मनो बन्धं मोक्षं च ज्ञाननिष्ठया ॥ बन्ध इन्द्रियविक्षेपो मोक्ष एषां

च संयमः ॥ ४४ ॥ वेदवादरतो न स्यान्न पाखण्डी न हैतुकः ॥ शुष्कवाद-
विवादे न कंचित्पक्षं समाश्रयेत् ॥ ४५ ॥ नोद्विजेत जनाद्धीरो जनं चोद्वेज-
येन्न तु । अतिवादांस्तितिक्षेत नावमन्येत कंचन ॥ ४६ ॥ देहमुद्दिश्य पशुव-
द्वैरं कुर्यान्न केनचित् । एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः ।
॥४७॥ यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः । ज्ञानवैराग्यरहितस्त्रिदण्ड-
मुपजीवति ॥ ४८ ॥ सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा । अविपक्व-
कषायोऽस्मादमुष्माच्च विहीयते ॥ ४९ ॥ यतो यतो निवर्तेत विमुच्येत
ततस्ततः । एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥ ५० ॥ विषयेषु
गुणाध्यासात्पुंसः सङ्गस्ततो भवेत् । संगात्तत्र भवेत्कामः कामदेव कलिर्नृ-
णाम् ॥ ५१ ॥ कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते । तमसा ग्रस्यते पुंसश्चे-
तना व्यापिनी द्रुतम् ॥ ५२ ॥ तया विरहितः साधो जन्तुः शून्याय कल्पते ।
ततोऽस्य स्वार्थविभ्रंशो मूर्छितस्य मृतस्य च ॥ ५३ ॥ विषयाभिनिवेशेन
नात्मानं वेद नापरम् । वृक्ष जीविकया जीवन्व्यर्थं भस्त्रेव यः श्वसन् ॥५४॥

विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः । जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ५५ ॥ इन्द्रियायनसृष्ट्येदं त्रैविध्यं भाति वस्तुनि । बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥ ५६ ॥ सोऽयं दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम् । सोऽयंपुमानिति नृणां मृषा गीर्धीर्मृषायुषाम् ॥ ५७ ॥ सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः । तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥ ५८ ॥ मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् । राजसं फलसंकल्पं हिंसाप्रायादि तामसम् ॥ ५९ ॥

इति श्रीभक्तिकौस्तुभे परमतत्त्वनिरूपणं चतुर्थांशोनाम विंश आह्निकः ॥

सत्यमेव परं ब्रह्म सत्यं ज्ञानमनन्तकम् । सत्यमेव परा वेदाः ॐकारं सत्यमेव च ॥ १ ॥ सत्यं वेदेषु जागर्त्ति सत्यं च परमं पदम् । सत्यं विजयते लोकं सत्यरूपो जनार्दनः ॥ २ ॥ सत्येन लभ्यो ह्यात्मा वै सत्यं हि परमं तपः । सत्यमूलं जगत् सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥३॥ सत्येनार्कः प्रतपति सोमः सत्येन राजते । सत्येन पवनो वाति सत्येनाग्निर्विनिर्दहेत् ॥४॥ वरु-

णोधिष्ठितः सत्ये सत्येन शास्ति चान्तकः । शक्रो वर्षति सत्येन सत्येन वसुधा धृता ॥ ५ ॥ सत्यं वेदास्तथामन्त्राः सत्यं देवाः सरस्वती । सत्यमेव परो यज्ञः सत्यमेव परं व्रतम् ॥६॥ वेदा गायन्ति सत्येन मोक्षः सत्येन लभ्यते । सत्ये वसन्ति तीर्थानि सर्वं सत्येन लभ्यते ॥ ७॥ सत्येन पाल्यते धर्मो धर्मो रक्षति रक्षितः । न हि सत्यमतिक्रम्य विद्यते किंचिदुत्तमम् ॥ ८ ॥ न हि सत्यात् परोधर्मो नानृतात् पातकं परम् । न हि गंगासमं तीर्थं न देवः केशवात् परः ॥ ९ ॥ सत्यहीना वृथा पूजा सत्यहीनो वृथा जपः । सत्यहीना क्रिया मोघाः सत्यात् परतरं न हि ॥१०॥ मिथ्या चाधर्मपत्नी सा सर्वधूर्त्तैः सुपूजिता । सत्येन देवाः प्रीयन्ते पितरो मुनयस्तथा ॥११॥ यथा तिष्ठन्ति पुण्यानि सत्यमाश्रित्य पार्वति । तथाऽनृतं समाश्रित्य पातकान्यखिलान्यपि ॥१२॥ सत्यधर्मं समाश्रित्य यत् कर्म कुरुते नरः । तदेव सफलं तस्य सत्यं जानीहि सुव्रते ॥१३॥ सत्यस्य कथनात् लोके सर्वमाप्नोत्यसंशयम् । ऋषयः सिद्धगन्धर्वाः सत्यात् सिद्धिमितो गताः ॥१४॥ अश्वमेधसह-

स्त्रंच सत्यंच तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥१५॥
अगाधे विपुले शुद्धे सत्यतीर्थे शुचिह्रदे । स्नातव्यं मनसा युक्तैः स्नानं तत्
परमं स्मृतम् ॥१६॥ कृते धर्मश्चतुपादस्त्रेतायां पादहीनकः । द्विपादो द्वापरे
देवि पादमात्रं कलौयुगे ॥१७॥ कलौ तु प्रकटे देवि सर्वे धर्माः सुदुर्बलाः ।
स्थास्यति सत्यमेकं वै तस्मात् सत्यमयो भवेत् ॥ १८ ॥ यथार्थकथनं यच्च
सर्वलोकसुखप्रदम् । तत् सत्यमिति विज्ञेयं न सत्यं यद्विपर्य्ययम् ॥१९॥
सर्वमेव परं ब्रह्म नान्यदस्तीति या मतिः । तच्च सत्यं वरं प्रोक्तं वेदान्त-
ज्ञानपारगैः ॥२०॥ इच्छानुकूलं यद्वाक्यं धर्माधर्मविवर्जितम् । अनृतं तद्धि
विज्ञेयं सर्वश्रेयोविघातनम् ॥२१॥ सत्यं ब्रूयात् प्रियं ब्रूयात् मा ब्रूयात्
सत्यमप्रियम् । प्रियं च नानृतं ब्रूयात् एष धर्मः सनातनः ॥२२॥ सत्यं च
समता चैव अहिंसा च तथा दया । त्यागः क्षमा दमश्चैव ह्रीस्तितिक्षान-
सूयता । अमात्सर्यं धृतिर्ध्यानं सत्याकारास्त्रयोदश ॥२३॥ न सा सभा
यत्र न सन्ति वृद्धाः वृद्धा न ते ये न वदन्ति धर्मं । धर्मः स नो यत्र न

सत्यमस्ति सत्यं न तत् यत् छलनानुविद्धम् ॥२४॥ दया क्षमा तपः सत्यं येषां सन्ति महात्मनाम् । तेषां दर्शनमात्रेण पापं नश्यति तूलवत् ॥२५॥

इति श्रीभक्तिकौस्तुभे एकविंश आह्निके सत्यमहिमा नाम प्रथमः परिच्छेदः ॥

मोहपत्नी दया साध्वी पूजिता सा जगत्प्रिया । सर्वथा सर्वलोका वै निस्फलाः स्यु र्यया विना ॥ १ ॥ न दयासदृशो धर्मो न दयासदृशं तपः । न दयासदृशं दानं न दयासदृशः सखा ॥ २ ॥ परदुःखेन यो दुःखी सुखी परसुखेन ह । संसारे वर्त्तमानोऽपि ज्ञेयः साक्षात् हरिः स्वयम् ॥ ३ ॥ भूतानां दुःखमग्नानां दुःखोद्धर्त्ता हि यो नरः । स एव सुकृती लोके ज्ञेयो नारायणांशजः ॥ ४ ॥ एतावान् अव्ययो धर्मः पुण्यश्लोकैरुपासितः । यद् भूतशोकहर्षाभ्याम् आत्मा शोचति हृष्यति ॥ ५ ॥ पुण्यदानात् सदाप्नोति पुण्यं लक्षगुणं नरः । दयया धर्मवृद्धिः स्यात् शश्वत् शत गुणात्मिका ॥ ६॥ सन्तस्ते येऽनिशं लोके परदुःखनिसूदनाः । आर्त्तानामार्त्तिनाशार्थं प्राणा-येषां तृणोपमाः ॥ ७ ॥ कोमलं हृदयं नूनं साधूनां नवनीतवत् । परसन्ताप-

सन्तप्तं तदञ्जो द्रवति स्फुटम् ॥ ८ ॥ तैरेव धार्य्यते पृथ्वी सद्भिः परहिते
रतैः । स्वयं परसुखेनैव साधवः सुखिनः सदा ॥ ९ ॥ ऐश्वर्य्यस्याभिजातस्य
गुणानां सुकृतस्य च । फलं हि मन्यते सद्भिरार्त्तानां परिरक्षणम् ॥१०॥ वरं
निरयपातो वै वरं प्राणवियोजनम् । न पुनः सुखलेशं च विनार्त्तार्त्ति
विनाशनम् ॥११॥ न स्वर्गे नापवर्गेऽपि तत्सुखं लभते नरः । यदाप्नोति
नरो नित्यं आर्त्तानामार्त्तिनाशने । परोपकृतये ये वै पीड्यन्ते कृतिनो हि ते ।
परतापच्छिदो ये च त एव चन्दना मताः ॥१३॥ एतावान् हि प्रभोरर्थो
यद्दीनपरिपालनम् । प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः ॥१४॥
बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया । पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः
॥१५॥ तप्यन्ते लोकतापेन साधवः प्रायशो जनाः । परमाराधनं तद्धि पुरुषस्या-
खिलात्मनः ॥१६॥ न कामयेऽहं गतिमीश्वरात् पराम् अष्टर्द्धियुक्तामपुनर्भवं वा ।
आर्त्तिं प्रपद्येऽखिलदेहभाजाम् अन्तःस्थितो येन भवन्त्यदुःखाः ॥१७॥ क्षुत्तृट्श्र-
मो गात्रपरिश्रमश्च दैन्यं क्लमः शोकविषादमोहाः । सर्वे निवृत्ताः कृपणस्य
जन्तोर्जिजीविषोर्जीवजलार्पणान्मे ॥ १८ ॥ कः क्षेमो निजपरयोः कियानर्थः

स्वपरद्रुहा धर्मेण । स्वद्रोहात्तव कोपः परसंपीडया च तथाऽधर्मः ॥ १९ ॥ सर्वे वेदास्तथा यज्ञाः तपोदानानि चानघ । जीवाभयप्रदानस्य न कुर्वीरन् कलामपि ॥ २० ॥ न तत् क्रतुसहस्रेण नोपवासैश्च नित्यशः । अभयस्य प्रदानेन यत्फलं प्राप्नुयात् नरः ॥ २१ ॥ देवानां स्यादयं धर्मो भक्तस्य परिपालनम् । त्वया साधुकृतं कर्म यद्भक्तो रक्षितोऽधुना ॥ २२ ॥ यो जहाति भयेनैव जनं च शरणागतम् । तं प्रयाति परित्यज्य धर्मः शप्त्वा सुदारुणम् ॥ २३ ॥ नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् । न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य वै ॥ २४ ॥ क्षमया रोचते लक्ष्मी-र्ब्राह्मी-सौरी तथा प्रभो । क्षमिनामाशु भगवांस्तुष्यते हरिरीश्वरः ॥२५॥ क्षमावशं जगत्सर्वं क्षमया किं न साध्यते । क्षमागुणोद्यशक्तानां शक्तानां भूषणं क्षमा ॥ २६ ॥ आयुः पुत्रांस्तथा दारान् यशः सम्पद एव च । प्राणि-हिंसाप्रवृत्तानां विधीरुष्टो हरेत् स्वयम् ॥ २७ ॥ किं जपैः किं तपोभिर्वा किं दानैर्वा किमध्वरैः । अन्तरे अङ्कितं यस्य हिंसावर्णद्वयं मुदा ॥ २८ ॥ पुमान

योषिद्गुत क्लीव आत्मसंभावनोऽधमः । भूतेषु निरनुक्रोशो नृपाणां तद्वधो ऽवधः ॥ २९ ॥ परोपतापिनो ये वै चोत्पथे तूपसर्पिणः । ते हन्तव्या नृपैः सर्वे सर्वलोकहितैषणात् ॥ ३० ॥ स्वप्राणान् यः परप्राणैः प्रपुष्णात्यघृणः खलः । तद्वधस्तस्य हि श्रेयो यद्दोषाद् यात्यधः पुमान् ॥ ३१ ॥ पुण्योपदेशी सदयः यः कैतवविवर्जितः । पापायनविरोधी च चत्वारः केशवोपमाः ॥ ३२ ॥ रागाद्यपेतं हृदयं वागदुष्टानृतादिना । हिंसादिरहितं कर्म यत्तदीश्वरपूजनम् ॥ ३३ ॥ यः प्राणिहिंसको मर्त्यः स एव हरिहिंसकः । सर्वप्राणिशरीरस्थो भगवान् जगदीश्वरः ॥ ३४ ॥ शरीरिणः शरीरं हि निलयः परमात्मनः । सर्वभूतनिगूढस्य अतो हिंसा विवर्जयेत् ॥ ३५ ॥ न वै ह्यात्मपरज्ञानं कदाचित् कुरुते सुधीः । अहं विष्णुरयं विष्णुः सर्वं विष्णुमयं जगत् ॥ ३६ ॥ सर्वभूतशरीरस्थं यो मां जानाति मानवः । दयावान् सर्वभूतेषु स मे तोषकरो महान् ॥ ३७ ॥ अहिंसा परमो धर्मः अहिंसा परमं श्रुतम् । अहिंसा परमं सत्यं अहिंसा च परं सुखम् ॥ ३८ ॥ अहिंसा परमं ज्ञानं

अहिंसा च परं तपः ॥ ३९ ॥
अहिंसा च परं बलम् । अहिंसा परमं तीर्थम् अहिंसा परमं दानं अहिंसा
अहिंसा परमो यज्ञः अहिंसा परमोदमः । अहिंसा
च परं सुहृत् ॥ ४० ॥

इति श्रीभक्तिकौस्तुभे एकविंश आह्निके दयामहिमा नाम द्वितीयः परिच्छेदः ॥

नारायणः परो देवः सर्वरूपो जनार्दनः । सृष्ट्यर्थं स त्रिधात्मानं चकार परमेश्वरः ॥ १ ॥ यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मासौ महेश्वरः । वेदत्रये पुराणेषु पंडितेषु सुनिश्चयः ॥ २ ॥ ब्रह्माविष्णुमहेशानां मध्ये ये भेदकारिणः । वेदनिन्दाकरा ये च तेषां रोषोऽनिशं मम ॥ ३ ॥ हरिशंकरयोर्मध्ये शंकरब्रह्मणोस्तथा । भेदकृत् नरकं भुंक्ते यावच्चन्द्रदिवाकरौ ॥४॥ हरिरूपधरं लिंगं लिंगरूपधरो हरिः । मनागप्यन्तरं नास्ति भेदकृत् पापमश्नुते ॥५॥ ममास्ति हृदये शर्वो भवतो हृदये त्वहम् । आवयोरन्तरं नास्ति भेदं पश्यन्ति दुर्धियः ॥ ६ ॥ ये भेदं कुर्वते मोहात् आवयोः शिवरामयोः । कुम्भीपाकेषु पच्यन्ते ते हि कल्पसहस्रकम् ॥ ७ ॥ अहं वै सर्वभूतानि भूतात्मा

भूतभावनः । शब्दब्रह्म परंब्रह्म ममोभे शाश्वती तनू ॥ ८ ॥ एको विष्णु स्त्रिधा भूत्वा सृजत्यवति हन्ति च । तस्माद्भेदो न कर्त्तव्यः तेषां मध्ये कदाचन ॥ ९ ॥ आद्याप्रकृतिरेवास्य महाविष्णोः परात्मनः । निदानभूता विश्वस्य विद्याऽविद्येति गीयते ॥ १० ॥ भावाभावस्वरूपा सा जगद्धेतुः सनातनी । ब्राह्मी लक्ष्मीस्तथा दुर्गा त्रिमूर्त्तिस्तु तदाभवत् ॥ ११ ॥ श्रीरेव गिरिजा प्रोक्ता हरिरेव त्रिलोचनः । सर्वशास्त्रपुराणेषु एष एव सुनिश्चयः ॥ १२ ॥ यतश्चाविरासीत् जगत् सर्वमेतत् तथाब्जासनो विश्वगो विश्वगोप्ता । परब्रह्मरूपं चिदानन्दभूतं सदा तं गणेशं नमामो भजामः ॥ १३ ॥ आदित्यं च शिवं विद्यात् शिवं आदित्यरूपिणम् । उभयोरन्तरं नास्ति आदित्यस्य शिवस्य च ॥ १४ ॥ उदये सृष्टिकर्त्तासौ मध्याह्ने तु महेश्वरः । अस्तमाने स्वयं विष्णुर्ब्रह्मरूपो दिवाकरः ॥ १५ ॥ त्वं ब्रह्मा त्वं हरिर्देवः त्वं शिवस्त्वं दिवस्पतिः । त्वमोंकारः वषट्कारः स्वधा स्वाहा त्वमेव च ॥ १६ ॥ यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः । एको नानेयते तद्व-

द्भगवान् शास्त्रवर्त्मभिः ॥ १७ ॥ यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु । एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ १८ ॥ त्वमक्षरं ब्रह्म परं पवित्रम् प्रजापतिर्भगवानेकरूपो । नारायणस्त्वं जगतामनादिः सदा शिवस्त्वं परमेश्वरोऽसि ॥ १९ ॥ नमो विज्ञानवीर्य्याय माययेदमुपेयुषे । गृहीत गुणभेदाय नमस्तेऽव्यक्तयोनये ॥ २० ॥ न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्यः । वयं व्रतैर्यच्चरणापविद्धामाशास्महेऽजां बत भुक्तभोगाम् ॥ २१ ॥ यस्याऽनवद्याचरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः । निरस्तसाम्यातिशयोऽपि यत् स्वयं पिशाचचर्य्यामचरद् गतिः सताम् ॥ २२ ॥ हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन् रतस्याऽविदुषः समीहितम् । यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितम् ॥ २३ ॥ ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च माया । आज्ञाकरी तस्य पिशाचचर्य्या अहो विभूम्नश्चरितं विडंबनम् ॥ २४ ॥ त्वमेकः सर्व-

जगत ईश्वरो बन्धमोक्षयोः। तं त्वामर्चन्ति कुशलाः प्रपन्नार्त्तिहरं गुरुम्
॥ २५ ॥ न ते गिरित्राखिललोकपाल विरिंचवैकुंठसुरेन्द्रगम्यम्। ज्योतिः
परं यत्र रजस्तमश्च सत्त्वं न यद् ब्रह्म निरस्तभेदम् ॥ २६ ॥ ये त्वा-
त्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रि-द्वन्द्वं चरन्तमुमया तपसाभितप्तम्।
कत्थन्त उग्रपुरुषं निरतं श्मशाने ते नूनमूतिमविदंस्तव हातलज्जाः
॥ २७ ॥ नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम्। पुंसामपूर्ण-
कामानां कामपूरामराङ्घ्रिपम् ॥ २८ ॥ त्रिमूर्त्तयेऽनन्त परात्ममूर्त्तये
जगन्निवासाय जगन्मयाय। नमो ललाटार्पितलोचनाय फणीन्द्रहाराय
नमोस्तु तुभ्यम् ॥ २९ ॥ यो ब्रह्मरूपी जगतां विधाता तदेव पाता हरिरूप-
धृग् यः। कल्पान्तरुद्राख्यतनुश्च शेते संगृह्य विश्वं तमजं भजामि ॥ ३० ॥
तमयं मन्यते लोको ह्यसङ्गमपि सङ्गिनम्। आत्मौपम्येन मनुजं व्यापृण्वानं
यतोऽबुधः ॥ ३१ ॥ एवं योगेश्वरः कृष्णो भगवान् जगदीश्वरः। ईयते
पशुदृष्टीनां निर्जितो जयतीति सः ॥ ३२ ॥ ईश्वराणां वचः सत्यं तथैवा-

चरितं क्वचित् । तेषां यत् स्ववचो युक्तं बुद्धिमांस्तत् समाचरेत् ॥ ३३ ॥ निजनामगुणानाञ्च श्रवणेनातिसम्भ्रमात् । भक्तसङ्गे भ्रमत्येव छायेव सततं हरिः ॥ ३४ ॥ यस्य भक्तिर्हरौ वत्स अचला सर्वमङ्गला । पुनाति लीलया चासौ आब्रह्मसकलं जगत् ॥३५॥ हरिर्बलं हि भक्तानां भक्तश्चैव बलं हरेः । सतां सत्यं बलं नित्यं असतां चानृतं बलम् ॥ ३६ ॥ गृहस्थानां बलं धर्मो ह्यशक्तानां हरिर्बलम् । भिक्षुकाणां बलं भिक्षा बालानां रोदनं बलम् ॥ ३७ ॥ बलं पुण्यवताम् पुण्यम् पतिसेवा सतीबलम् । पण्डितानां बलं विद्या प्रजानां नृपतिर्बलम् ॥ ३८ ॥ सर्वदेवमयो विष्णुः स्मरतामार्त्ति-नाशनः । तुष्यति ह्येकया भक्त्या नान्यथा भक्तवत्सलः ॥३९॥ हरिभक्ति-परो यत्र तत्र ब्रह्मा हरिः शिवः । देवा लक्ष्मीश्च सिद्धाश्च तत्र विघ्नो न बाधते ॥ ४०॥ वैष्णवानां शरीरेषु सततं निवसाम्यहं । नापदश्चाभिपद्यन्ते कदाचित् वैष्णवाञ्जनान् ॥४१॥ लभन्ते वैष्णवाः कामान् सर्वानपि सुदुर्ल-भान् । कल्पवृक्षं समासाद्य फलानि च यदृच्छया ॥ ४२ ॥ येऽर्चयन्ति सदा

भक्त्या वासुदेवं जगद्गुरुम् । न तेषां दुर्लभं किञ्चित् विद्यते भुवनत्रये॥४३॥
हरिपूजापरो भूत्वा यश्च पापरतः सदा । तमेव विष्णुद्वेष्टारं प्राहुस्तत्त्वार्थको-
विदाः ॥४४ ॥ महापातकयुक्तो यो ह्यनुतापं करोति च । ईप्सितो हरिभक्तेन
लभते परमं पदम् ॥४५ ॥ हरिभक्तिपरा ये वा हरिनामपरायणाः दुर्वृत्ता वा
सुवृत्ता वा तेषां नित्यं नमो नमः ॥ ४६ ॥ न्यूनातिरिक्तता सिद्धा कलौ
वेदोक्तकर्मणाम् । हरिस्मरणमेवात्र सम्पूर्णफलदायकम् ॥ ४७ ॥ नारायण-
कथा यत्र वर्त्तते प्रतिवासरम् । तत्र सर्वाणि तीर्थानि गंगादीनि द्विजोत्तम ।
देवा देवर्षयस्तत्र मुनयश्च तपोधनाः ॥ ४८ ॥ रुद्रब्रह्मादयो देवा मानवाश्चा-
सुराश्च ये । ते सर्वे कर्मबद्धाश्च विचरन्ति महीतले ॥ ४९ ॥ कर्माधीनं
जगत्सर्वं विष्णुना निर्मितं पुरा । तत्कर्म केशवाधीनं रामनाम्ना विन-
श्यति ॥ ५० ॥ आब्रह्मसकलं विश्वं वासुदेवश्च शंकरः । सृज्यते चैव
कालेन कालेन ग्रस्यते पुनः ॥ ५१ ॥ कालो भूत्वा महादेवः केवलो निष्कलः
शिवः । सृजतीशो जगत् कृत्स्नं पात्येव हरते तथा ॥ ५२ ॥ शिवस्वरूपी

शिवभाविताना हरिस्वरूपी हरिभाविताना। संकल्पपूर्वात्मकमूर्त्तिहेतुं वरं वरेण्यं शरणं प्रपद्ये ॥ ५३ ॥

इति श्रीभक्तिकौस्तुभे भगवत्स्वरूपनिर्णयो नाम द्वाविंश आह्निकः।

देहो देवालयः प्रोक्तः स जीवः केवलः शिवः। त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥ १ ॥ अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः। स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ॥ २ ॥ अहंममेति विण्मूत्रलेपगन्धादिमोचनम्। शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम् ॥ ३ ॥ चित्तशुद्धिकरं शौचं वासनात्रयनाशनम्। ज्ञानवैराग्यमृत्तोयैः क्षालनाच्छौचमुच्यते ॥ ४ ॥ अद्वैतभावनाभैक्षमभक्ष्यं द्वैतभावनम्। गुरुशास्त्रोक्तभावेन भिक्षोर्भैक्षं विधीयते ॥ ५ ॥ अहंकारसुतं वित्तभ्रातरं मोहमन्दिरम्। आशापत्नीं त्यजेद् यावत् तावन्मुक्तो न संशयः ॥ ६ ॥ मृता मोहमयी माता जातो बोधमयः सुतः। सूतकद्वयसंप्राप्तौ कथं सन्ध्यामुपास्महे ॥ ७ ॥ हृदाकाशे चिदादित्यः सदा भासति भासति। नास्तमेति न चोदेति कथं

सन्ध्योमुपास्महे ॥ ८ ॥ एकमेवाद्वितीयं यद्गुरोर्वाक्येन निश्चितम् । एतदे-
कान्तमित्युक्तं न मठो न वनान्तरम् ॥ ९ ॥ असंशयवतां मुक्तिः संशया-
विष्टचेतसाम् । न मुक्तिर्जन्मजन्मान्ते तस्माद्विश्वासमाप्नुयात् ॥१०॥
कर्मत्यागान्न संन्यासो न प्रेषोच्चारणेन तु । सन्धौ जीवात्मनोरैक्यं संन्यासः
परिकीर्तितः ॥११॥ यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु । तदैव संन्यसेद्
विद्वानन्यथा पतितो भवेत् ॥१२॥ विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे
वसेत् । सरागो नरकं याति प्रव्रजन् हि द्विजाधमः ॥१३॥ परमात्मनि यो
रक्तो विरक्तोऽपरमात्मनि । सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति
॥१४॥ पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत् । तथा चेत्ताड्यमानस्तु
तदा भवति भैक्ष्यभुक् ॥१५॥ संमानात् ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकङ्क्षेदवमानस्य सर्वदा ॥ १६ ॥ प्रतिष्ठा सूकरीविष्ठासमा
गीता महर्षिभिः । तस्मादेनां परित्यज्य कीटवत् पर्यटेत् यतिः ॥१७॥ अभयं
सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः । न तस्य सर्वभूतेभ्यो भयमुत्पद्यते

क्वचित् ॥१८॥ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् । अतिवादांस्त्यजेत्तर्कान् पक्षं कञ्चन नाश्रयेत् ॥१९॥ न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेत् बहून् । न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित् ॥२०॥ न कुर्यान्नवदेत् किञ्चिन्न ध्यायेत् साध्वसाधु वा । आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥२१॥ बुधो बालकवत् क्रीडेत् कुशलो जडवच्चरेत् । वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ॥२२॥ नापृष्टः कस्यचिद् ब्रुयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥२३॥ ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते । काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः । स याति नरकान् घोरान् महारौरवसंज्ञितान् ॥२४॥ वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः । यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः ॥२५॥ यः शरीरेन्द्रियादिभ्यो विहीनं सर्वसाक्षिणम् । पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम् । परतत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ॥२६॥ वर्णाश्रमादयो देहे मायया परिकल्पिताः । नात्मनो बोध-

रूपस्य मम ते सन्ति सर्वदा । इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥२७॥ अजिह्वः षण्डकः पंगुरन्धो बधिर एव च । मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥२८॥ इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जति । हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥२९॥ अद्यजातां यथा नारीं तथा षोडशवार्षिकीम् । शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः ॥३०॥ भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च । योजनान्न परं याति सर्वथा पंगुरेव सः ॥३१॥ तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् । चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्ध उच्यते ॥३२॥ हिताहितं मनोरामं वचः शोकावहं तु यत् । श्रुत्वापि न शृणोतीव बधिरः स प्रकीर्तितः ॥३३॥ सान्निध्ये विषयाणां यः समर्थो विकलेन्द्रियः । सुप्तवत् वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥३४॥ विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम । विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥३५॥ द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च । जीवन्मुक्तौ सरूपः स्यादरूपो देहमुक्तिगः ॥३६॥ वास-

नानुदयो भोग्ये वैराग्यस्य परावधिः। अहंभावोदयाभावो बोधस्य परमावधिः ॥३७॥ अद्वितीयब्रह्मतत्त्वं न जानन्ति यथा तथा। भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥३८॥ अध्यात्मशास्त्रमन्त्रेण तृष्णाविषविषूचिका। क्षीयते भावितेनान्तः शरदा मिहिका यथा ॥ ३९ ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्त्वतः। पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥४०॥ शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः। परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥४१॥ विज्ञेयोऽक्षरतन्मात्रो जीवितं वापि चञ्चलम्। विहाय शास्त्रजालानि यत्सत्यं तदुपास्यताम् ॥४२॥ गवामनेकवर्णानां क्षीरस्याप्येकवर्णता। क्षीरवत् पश्यति ज्ञानी लिंगिनस्तु गवां यथा ॥४३॥ आत्मवत् सर्वभूतानि परद्रव्याणि लोष्ट्रवत्। स्वभावात्तु न वै भीतेर्यः पश्यति स पश्यति ॥४४॥ दग्धस्य दहनं नास्ति पक्वस्य पचनं यथा। ज्ञानाग्निदग्धदेहस्य न च श्राद्धं न च क्रिया ॥ ४५ ॥ उत्पन्ने तत्त्वविज्ञाने प्रारब्धं नैव मुंचति। तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ॥४६॥ ज्ञानोदयात् पुरारब्धं

कर्म ज्ञानान्न नश्यति । अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥४७॥ व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ । न तिष्ठति भिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥४८॥ सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः । यद् अक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत् ॥ ४९ ॥ सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम् । तत् सूत्रं विदितं येन स विप्रो वेदपारगः ॥५०॥ अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा । स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥५१॥ शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् । ब्राह्मण्यं सफलं तस्य इति ब्रह्मविदो विदुः ॥ ५२ ॥

इति श्रीभक्तिकौस्तुभे तत्त्वरहस्यं नाम त्रयविंश आह्निकः ।

चैतन्यं विना किंचिन्नास्तीति साक्षात्कारानुभवो ज्ञानम् । सर्वकर्मनिराकरणमावाहनम् । निश्चयज्ञानमासनम् । उन्मनीभावः पाद्यम् । सदाऽमनस्कमर्घ्यमसदादीप्तिरपारामृतवृत्तिः स्नानम् ॥१॥ सर्वत्र भावना गन्धः । दृक् स्वरूपावस्थानमक्षताः । चिदाप्तिः पुष्पम् । चिदग्निस्वरूपं धूपः । चिदादित्यस्वरूपं

दीपः ॥ २ ॥ परिपूर्णचन्द्रामृतरसस्यैकीकरणं नैवेद्यम् । निश्चलत्वं प्रदक्षिणम् । सोऽहंभावो नमस्कारः । मौनं स्तुतिः । सर्वसन्तोषो विसर्जनमिति ॥ ३ ॥ क्रियमाणेन्द्रियैः कर्माण्यहं करोमीत्यध्यात्मनिष्ठतया कृतं कर्मैव कर्म ॥ ४ ॥ कर्तृत्वभोक्तृत्वाद्यहंकारतया बन्धरूपं जन्मादिकारणं नित्यनैमित्तिकयागव्रततपोदानादिषु फलाभिसन्धानं यत्तदकर्म ॥ ५ ॥ विद्या दिवा प्रकाशत्वादविद्या रात्रिरुच्यते । विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते ॥ ६ ॥ आध्यात्मिकीं कथां मुक्त्वा भिक्षावार्तां विना तथा । अनुग्रहं परिप्रश्नं वृथाजल्पोऽन्य उच्यते ॥ ७ ॥ शुश्रूषालाभपूजार्थं यशोर्थं वा परिग्रहः । शिष्याणां नतु कारुण्याच्छिष्यसंग्रह ईरितः ॥ ८ ॥ उप समीपे यो वासो जीवात्मपरमात्मनोः उपवासः स विज्ञेयो न तु कायस्य शोषणम् ॥ ९ ॥ कायशोषणमात्रेण का तत्र ह्यविवेकिनाम् । वल्मीकताडनादेव मृतः किं नु महोरगः ॥ १० ॥ आत्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ११ ॥ इन्द्रियाणि हयानाहुर्विष-

गांस्तेषु गोचरान्। जंगमानि विमानानि हृदयानि मनीषिणः ॥ १२ ॥
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्महर्षयः। ततो नारायणः साक्षाद्धृदये
सुप्रतिष्ठितः ॥ १३ ॥ धनुस्तारं शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्र-
मत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥ १४ ॥ प्रवृत्तिर्द्विविधा प्रोक्ता मार्जारी
चैव वानरी। ज्ञानाभ्यासवतामोतुर्वानरीभाक्त्वमेव च ॥ १५ ॥ विषं विष-
यवैषम्यं न विषं विषमुच्यते। जन्मान्तरघ्ना विषया एकजन्महरं
विषम् ॥ १६ ॥ संसाररात्रिदुःस्वप्ने शून्ये देहमये भ्रमे। सर्वमेवापवित्रं
तद्दृष्टं संसृतिविभ्रमम् ॥ १७ ॥ संसार एव दुःखानां सीमान्त इति कथ्यते।
तन्मध्ये पतिते देहे सुखमासाद्यते कथम् ॥ १८ ॥ नास्ति देहसमः शोच्यो
नीचो गुणविवर्जितः। कलेवरमहंकारगृहस्थस्य महागृहम् ॥ १९ ॥ देहोऽ-
हमिति संकल्पो महापापमिति स्फुटम्। देहोऽहमिति या बुद्धिस्तृष्णा दोषा-
मयः किल ॥ २० ॥ न चर्मणो न रक्तस्य न मांसस्य न चास्थिनः। न जाति-
रात्मनो जातिर्व्यवहारप्रकल्पिता ॥ २१॥ देहदेहिविभागोऽयम् अविवेककृतः

पुरा। जातिव्यक्तिविभागोऽस्ति यथा वस्तुनि कल्पितः॥ २२ ॥ न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न च। कारणानि द्विजत्वस्य वृत्तमेव हि कारणम् ॥ २३ ॥ किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः। कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु॥ २४॥ वृत्तं यत्नेन संरक्षेत् वित्तमेति च याति च। अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतोहतः॥ २५ ॥ शूद्रे चैतत् भवेल्लक्ष्म द्विजे तपो न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ २६ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः। तथा विप्रोऽनधीयानः त्रयस्ते नाम बिभ्रति ॥ २७ ॥ हरिणीगर्भसंभूतो ऋष्यशृङ्गो महामुनिः। शुकीगर्भसमुद्भूतः शुको वै ब्रह्मवित्तमः॥ २८ ॥ श्वपाकीगर्भसंभूतो पिता व्यासश्च सत्तमः। गणिकागर्भसंभूतो वशिष्ठश्च महामुनिः॥ २९ ॥ क्षत्रियागर्भसंभूतो विश्वामित्रो महाऋषिः। तपसा ब्राह्मणो जातः संस्कारो नैव कारणम् ॥ ३० ॥ वासुदेवार्चनं हित्वा दुष्कर्माणि करोति यः। कामधेनुमतिक्रम्य अर्कक्षीरं स इच्छति ॥ ३१ ॥ शक्तिद्वयं हि मायाया विक्षेपा-

वृतिरूपकम् । विक्षेपशक्तिलिंगादि ब्रह्माण्डान्तं जगत्सृजेत् ॥ ३२ ॥. अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः । आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥ ३३ ॥ अभक्तस्य निवृत्त्या तु विशुद्धं हृदयं भवेत् । आहारशुद्धौ चित्तस्य विशुद्धिर्भवति स्वतः । चित्तशुद्धौ क्रमाज्ज्ञानं त्रुट्यन्ति ग्रन्थयः स्फुटम् ॥ ३४ ॥ आचारः परमो धर्म आचारः परमं तपः । आचारः परमं ज्ञानं आचारात् किं न साध्यते ॥३५॥ सर्वागमानामाचारः प्रथमं परिकल्पते । आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ ३६ ॥ आचाराद्विच्युतो विप्रो न वेदफलमश्नुते । आचारेण समायुक्तः संपूर्णफलभाग् भवेत् ॥३७॥ आचाराल्लभते ह्यायुः आचारादीप्सिताः प्रजाः । आचाराद्धनमक्षय्यम् आचारो हन्त्यलक्षणम् ॥ ३८ ॥ पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स धार्मिकः ॥ ३९ ॥ यः स्वाचारपरिभ्रष्टः साङ्गवेदान्तगोऽपि चेत् । स एव पतितो ज्ञेयो सर्वकर्मबहिष्कृतः ॥ ४०॥ हरिभक्तिपरो चापि हरिध्यानरतोऽपि वा । भ्रष्टो यः स्वाश्रमाचारात् पतितः

सोऽभिधीयते ॥४१॥ भक्तेत्वा हरिभक्तिर्वा भक्तभक्तिरथापि वा। आचारात् पतितं मूढं न पुनाति कथञ्चन ॥४२॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥४३॥ धनवृद्धा वयोवृद्धा विद्यावृद्धास्तथैव च। ते सर्वे ज्ञानवृद्धस्य किंकराः शिष्यकिंकराः॥४४॥ तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः। स जीवति मनो यस्य मननेनोपजीवति ॥ ४५ ॥ जातास्त एव जगति जन्तवः साधुजीविताः। ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः ॥ ४६॥ इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः। धराविवरमग्नानां कीटानां समतां गताः ॥४७॥ अज्ञानोपहतो बाल्ये यौवने वनिताहृतः। शेषे कलत्रचिन्तार्तः किं करोति नराधमः ॥ ४८ ॥ अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत्। भवत्यखिलजन्तूनां यदन्तस्तद्बहिः स्थितम् ॥ ४९ ॥ भारो विवेकिनः शास्त्रं भारो ज्ञानं च रागिणः। अशान्तस्य मनो भारो भारोऽनात्मविदो वपुः ॥५०॥ अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते। प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत्।

॥५१॥ नाहं मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥५२॥ यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ५३ ॥ अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत् । अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते ॥ ५४ ॥ संत्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये । ते रत्नमभिवाञ्छन्ति त्यक्तहस्तस्थकौस्तुभाः ॥ ५५ ॥

इति श्रीभक्तिकौस्तुभे तत्त्वरहस्यं नाम चतुर्विंश आह्निकः ।

मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ १ ॥ मन एव जगत्सर्वं मन एव महारिपुः । मन एव हि संसारो मन एव जगत्त्रयम् ॥ २ ॥ मन एव महद्दुःखं मन एव जरादिकम् । मन एव हि कालश्च मन एव मलं तथा ॥ ३ ॥ मन एव हि संकल्पो मन एव हि जीवकः । मन एव हि चित्तं च मनोऽहंकार एव च ॥ ४ ॥ मन एव महद्बन्धं मनोऽन्तःकरणं च तत् । स्पर्शं रूपं रसं गन्धं कोशाः

पञ्च मनोभवाः ॥ ५ ॥ दिक्पाला वसवो रुद्रा आदित्याश्च मनोमयाः । दृश्यं जडं द्वन्द्वजातमज्ञानं मानसं स्मृतम् ॥ ६ ॥ मनः सृजति कर्माणि मनो लिप्यति पातकैः । मनश्चेदुन्मनीभूयान्न पुण्यं न च पातकम् ॥ ७ ॥ मनसा भाव्यमानो हि देहतां याति देहकः । देहवासनया मुक्तो देहधर्मैर्न लिप्यते ॥ ८ । मनसा मन आलोक्य वृत्तिशून्यं यदा भवेत् । ततः परं परब्रह्म दृश्यते च सुदुर्लभम् ॥ ९ ॥ यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ १० ॥ तपसा प्राप्यते सत्त्वं सत्त्वात् संप्राप्यते मनः । मनसा प्राप्यते त्वात्मा ह्यात्माप्त्या निवर्तते ॥ ११ ॥ मन एव समर्थं हि मनसो दृढनिग्रहे । अराजकः समर्थः स्याद्राज्ञो निग्रहकर्मणि ॥ १२ ॥ मनसैव मनश्छित्त्वा पाशं परमबन्धनम् । भवादुत्तारयात्मानं नासावन्येन तार्यते ॥ १३ ॥ मनसैव मनश्छित्त्वा कुठारेणेव पादपम् । पदं पावनमासाद्य सद्य एव स्थिरो भव ॥ १४ ॥ चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् । यच्चित्तस्तन्मयो

भावः गुह्यमेतत् सनातनम् ॥ १५ ॥ चित्तमूलं हि संसारस्तत्प्रयत्नेन शोधयेत् । हन्त चित्तमहत्तायां कैया विश्वासता तव ॥ १६ ॥ चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् । तस्मिन् क्षीणे जगत् क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ १७ ॥ चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् । प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुते ॥ १८ ॥ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च । अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ १९ ॥ मनागपि विचारेण चेतसः स्वस्य निग्रहः । पुरुषेण कृतो येन तेनाप्तं जन्मनः फलम् ॥ २० ॥ ज्ञानयोगः कर्मयोग इति योगो द्विधा मतः । कर्म कर्तव्यमित्येव विहितेष्वेव कर्मसु । बन्धनं मनसो नित्यं कर्मयोगः स उच्यते ॥ २१ ॥ यत्तु चित्तस्य सततमर्थे श्रेयसि बन्धनम् । ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शिवः ॥ २२ ॥ योगात् संजायते ज्ञानं ज्ञानाद्योगः प्रवर्तते । योगज्ञाने न विद्येते तस्य भावो न सिद्ध्यति ॥ २३ ॥ योगहीनं कथं ज्ञानं मोक्षदं भवति ध्रु वम् । योगो हि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ।

तस्माज्ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ॥ २४ ॥ ज्ञानेनैव विना योगो न सिध्यति कदाचन । ज्ञानं तु जन्मनैकेन योगादेव प्रजायते ॥ २५ ॥ नानाविधैर्विचारैस्तु न बाध्यं जायते मनः । तस्मात्तस्य जयोपायः प्राण एव हि नान्यथा ॥ २६ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् । क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ॥ २७ ॥ तपः सन्तोषमास्तिक्यं दानमीश्वरपूजनम् । सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् । एते हि नियमाः प्रोक्ता दशधैव महामते ॥ २८ ॥ देहेन्द्रियेषु वैराग्यं यम इत्युच्यते बुधैः । अनुरक्तिः परे तत्त्वे सततं नियमः स्मृतः ॥ २९ ॥ सर्ववस्तुन्युदासीनभावमासनमुत्तमम् । जगत् सर्वमिदं मिथ्याप्रतीतिः प्राणसंयमः ॥३०॥ चित्तस्यान्तर्मुखीभावः प्रत्याहारस्तु सत्तम । चित्तस्य निश्चलीभावो धारणा धारणं विदुः ॥३१॥ सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते । ध्यानस्य विस्मृतिः सम्यक् समाधिरभिधीयते ॥ ३२ ॥ तत्त्वावबोध एवासौ वासनातृणपावकः । प्रोक्तः समाधिशब्देन नतु तूष्णीमवस्थितिः ॥३३॥ समाहिता

नित्यतृप्ता यथाभूतार्थदर्शिनी । ब्रह्मन्समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ३४ ॥ यावद्विलीनं न मनो न तावद्वासनाक्षयः । न क्षीणा वासना यावच्चित्तं तावन्न शाम्यति ॥ ३५ ॥ यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः । यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम् ॥ ३६ ॥ यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः । यावन्न तत्त्वसंप्राप्तिर्न तावद्वासनाक्षयः ॥ ३७ ॥ तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च । मिथः कारणतां गत्वा दुःसाध्यानि स्थितान्यतः ॥ ३८ ॥ भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् । भावाभावौ ततस्त्यक्त्वा निर्विकल्पः सुखी भव ॥ ३९ ॥ एष एव मनोनाशस्त्वविद्यानाश एव च । यत्तत् संवेद्यते किञ्चित्तत्रास्थापरिवर्जनम् ॥ ४० ॥ भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते । मनसोऽभ्युदयो नाशो मनोनाशो महोदयः । ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृंखला ॥ ४१ ॥ मनागपि मनोव्योम्नि वासनारजनीक्षये । कालिका तनुतामेति चिदादित्यप्रकाशनात् ॥ ४२ ॥ उत्तमा तत्त्वचिन्तैव मध्यमं शास्त्रचिन्तनम् । अधमा

मन्त्रचिन्ता च तीर्थभ्रान्त्यधमाधमा ॥ ४३ ॥ वाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तिका । सर्वचिन्तां समुत्सृज्य स्वस्थो भव सदा शुभो ॥४४॥ निरस्तविषयासंगं संनिरुद्धं मनो हृदि । यदा यात्युन्मनीभावं तदा तत् परमं पदम् ॥४५॥ तावदेव-निरोद्धव्यं यावद् हृदि गतं क्षयम् । एतज्ज्ञानञ्च मोक्षञ्च अतोऽन्यो ग्रन्थविस्तरः ॥ ४६ ॥ नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च । पक्षपातविनिर्मुक्तं ब्रह्म सम्पद्यते तदा ॥ ४७ ॥ न निरोधो न चोत्पत्तिर्न वन्धो न च शासनम् । न मुमुक्षा न मुक्तिश्च इत्येषा परमार्थता ॥ ४८ ॥ कृपणं तु मनो ब्रह्मन्गोष्पदेऽपि निमज्जति । कार्ये गोष्पदतोयेऽपि विशीर्णो मशको यथा ॥ ४९ ॥ यावद्यावन्मुनिश्रेष्ठ स्वयं सन्त्यज्यतेऽखिलम् । तावत्तावत् परालोकः परमात्मैव शिष्यते ॥ ५० ॥ यावत् सर्वं न सन्त्यक्तं तावदात्मा न लभ्यते । सर्ववस्तुपरित्यागे शेष आत्मेति कथ्यते ॥ ५१ ॥ आत्मावलोकनार्थं तु तस्मात्सर्वं परित्यजेत् । सर्वं सन्त्यज्य दूरेण यच्छिष्टं तन्मयो भवेत् ॥ ५२ ॥ द्विविधोऽयमसंसर्गः सामान्यः श्रेष्ठ एव

च। नाहं कर्ता न भोक्ता च न बाध्यो न च बाधकः। इत्यसंजनमर्थेषु सामा-
न्यासंगनामकम् ॥ ५३ ॥ प्राक्कर्मनिर्मितं सर्वमीश्वराधीनमेव वा। सुखं वा
यदि वा दुःखं कैवात्र तव कर्तृता ॥५४॥ नाहं कर्तेश्वरः कर्ता कर्म वा प्राक्तनं
मम। कृत्वा दूरतरे नूनमिति शब्दार्थभावनम्। यन्मौनमासनं शान्तं तत्
श्रेष्ठासंग उच्यते ॥ ५५ ॥ समासक्तं यथा चित्तं जन्तोर्विषयगोचरे।
यद्येवं ब्रह्मणि स्यात्तत् को न मुच्येत् बन्धनात् ॥ ५६ ॥ भक्तिगत्यं परं
तत्त्वमन्तर्लीनेन चेतसा। भावनामात्रमेवात्र कारणं पद्मसम्भव ॥ ५७ ॥
यथा देहान्तरप्राप्तेः कारणं भावना नृणाम्। विषयं ध्यायतः पुंसो विषये
रमते मनः। मामनुस्मरतश्चित्तं मय्येवात्र विलीयते ॥५८॥ कर्तृत्वाद्यहंका-
रसंकल्पो बन्धः। अनिमाद्यष्टैश्वर्याशासिद्धसंकल्पो बन्धः। यमाद्यष्टां-
गयोगसंकल्पो बन्धः। वर्णाश्रमधर्मकर्मसंकल्पो बन्धः। आज्ञाभयसंश-
यात्मगुणसंकल्पो बन्धः। यागव्रततपोदानविधिविधानज्ञानसम्भवो बन्धः।
केवलमोक्षापेक्षासंकल्पो बन्धः। संकल्पमात्रसम्भवो बन्धः ॥ ५९ ॥ मोक्ष

इति च नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममतावन्धत्तयो मोक्षः ॥६०॥ संकल्पमात्रकलनेन जगत् समग्रं संकल्पमात्रकलने हि जगद्विलासः। संकल्पमात्रमिदमुत्सृज निर्विकल्पमाश्रित्य मामकपदं हृदि भावयस्व ॥६१॥ प्रवुद्धोऽस्मि प्रवुद्धोऽस्मि दुष्टश्चोरोऽयमात्मनः। मनो नाम निहन्म्येनं मनसास्मि चिरं हृतः ॥६२॥ अनात्मदृष्टेरविवेकनिद्रामहं मम स्वप्नगतिं गतोऽहम्। स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रवुद्धः ॥६३॥ नित्यानन्दं परमसुखदं केवलं ज्ञानमूर्तिम्। विश्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्। एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतम्। भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥६४॥ योगैश्वर्यं च कैवल्यं जायते यत्प्रसादतः। तद्वैष्णवं योगतत्त्वं रामचन्द्रपदं भजे ॥६५॥ शंखचक्रगदापाणे द्वारकानिलयाच्युत। गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥६६॥

इति श्रीभक्तिकौस्तुभे संसारबीजनिरूपणं नाम पंचविंश आह्निकः।

जीवः शिवः शिवो जीवः स जीवः केवलः शिवः। तुषेण बद्धो व्रीहिः स्यात्तुषाभावेन तण्डुलः ॥ १ ॥ पाशबद्धस्तथा जीवः पाशमुक्तः सदाशिवः। ममत्वेन भवेज्जीवो निर्ममत्वेन केवलः ॥ २ ॥ वायुः प्राणस्तथाकाशस्त्रिविधो जीवसंज्ञकः। स जीवः प्राण इत्युक्तो वालाग्रशतकल्पितः ॥ ३ ॥ अहमेव महानात्मा ह्यहमेव परात्परः। अहमन्यवदाभामि ह्यहमेव शरीरवत् ॥ ४ ॥ अहं शिष्यवदाभामि ह्यहं लोकत्रयाश्रयः। अहं कालत्रयातीत अहं वेदैरुपासितः ॥ ५ ॥ अहं शास्त्रेण निर्णीत अहं चित्ते व्यवस्थितः। मत्त्यक्तं नास्ति किञ्चिद्वा मत्त्यक्तं पृथिवी च वा। मयातिरिक्तं यद्यद्वा तत्तन्नास्तीति निश्चिनु ॥ ६ ॥ स्वयमेव स्वयं भामि स्वयमेव सदात्मकः। स्वयमेवात्मनि स्वस्थः स्वयमेव परा गतिः ॥ ७ ॥ स्वयमेव स्वयं भुञ्जे स्वयमेव स्वयं रमे। स्वस्यात्मनि स्वयं रंस्ये स्वात्मन्येव विलोकये ॥ ८ ॥ एकं ब्रह्म द्वयं ब्रह्म मोहो ब्रह्म शमादिकम्। दोषो ब्रह्म गुणो ब्रह्म दमः शान्तं विभुः प्रभुः ॥९॥ लोको ब्रह्म गुरुर्ब्रह्म शिष्यो ब्रह्म सदाशिवः। पूर्वं ब्रह्म परं ब्रह्म शुद्धं ब्रह्म

शुभाशुभम् ॥१०॥ अहं ब्रह्मास्मिमन्त्रोऽयं दृश्यपापं विनाशयेत् । अहं ब्रह्मास्मि मन्त्रोऽयमन्यमन्त्रां विनाशयेत् ॥११॥ अहं ब्रह्मास्मि मन्त्रोऽयं मृत्युपाशं विनाशयेत् । अहं ब्रह्मास्मि मन्त्रोऽयं द्वैतदुःखं विनाशयेत् ॥१२॥ सर्वमन्त्रान् समुत्सृज्य एतं मन्त्रं समभ्यसेत् । सद्यो मोक्षमवाप्नोति नात्र सन्देहमण्वपि ॥१३॥ नाहं ब्रह्मेति जानाति तस्य मुक्तिर्न जायते । सर्वं ब्रह्मेति यस्यान्तर्भावना सा हि मुक्तिदा । भेददृष्टिरविद्येयं सर्वथा तां विसर्जयेत् ॥१४॥ न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः । मायामात्रविकासत्वान्मायातीतोऽहमद्वयः ॥१५॥ उलूकस्य यथा भानुरन्धकारः प्रतीयते । स्वप्रकाशे परानन्दे तमो मूढस्य जायते ॥१६॥ चक्षुर्दृष्टिनिरोधेऽभ्रैः सूर्यो नास्तीति मन्यते । तथाज्ञानावृतो देही ब्रह्म नास्तीति मन्यते ॥१७॥ यथामृतं विषाद्भिन्नं विषदोषैर्न लिप्यते । न स्पृशामि जडाद्भिन्नो जडदोषाप्रकाशतः ॥१८॥ स्वल्पापि दीपकणिका बहुलं नाशयेत्तमः । स्वल्पोऽपि बोधो निबिडं बहुलं नाशयेत्तमः ॥१९॥ ब्रह्मादिस्तम्बपर्यन्तं मृषामात्रा उपाधयः ।

अध्यस्तस्य कुतो जन्म जन्माभावे कुतःस्थितिः। उपादानं प्रपञ्चस्य मृद्भा- ण्डस्येव पश्यति ॥२०॥ यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात्। तद्वत्सत्यमविज्ञाय जगत् पश्यति मूढधीः ॥२१॥ रज्जुखण्डे परिज्ञाते सर्प- रूपं न तिष्ठति। सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम् ॥२२॥ शशशृंगेण नागेन्द्रो मृतश्चेज्जगदस्ति तत्। मृगतृष्णाजलं पीत्वा तृप्तश्चेदस्त्विदं जगत् ॥२३॥ गन्धर्वनगरे सत्ये जगद्भवति सर्वदा। गगने नीलिमासत्ये जगत् सत्यं भविष्यति ॥२४। शुक्तिकारजतं सत्यं भूषणं चेज्जगद्भवेत्। रज्जुसर्पेण दष्टश्चेन्नरो भवतु संसृतिः ॥२५॥ चित्रस्थदीपैस्तमसो नाशश्चे- दस्त्विदं जगत्। नपुंसककुमारस्य स्त्रीसुखं चेद्भवेज्जगत् ॥२६॥ अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्नहि। सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ॥२७॥ व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात्। इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥२८॥ सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्व- तम्। ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥२९॥ स्वप्ने जागरितं

नास्ति जागरे स्वप्नता नहि। द्वयमेव लये नास्ति लयोऽपि ह्यनयोर्न च ॥३०॥ त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्मितम्। अस्य द्रष्टा गुणातीतो नित्यो ह्येष चिदात्मकः ॥३१॥ यथा मृदि घटो नाम कनके कुण्डलाभिधा। शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥३२॥ यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले। पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥३३॥ यथा तरंगकल्लोलैर्जलमेव स्फुरत्यलम्। घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः। जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥३४॥ यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम्। वीक्ष्यमाणे प्रपञ्चे तु ब्रह्मैवाभाति भासुरम् ॥३५॥ शांकरीयं महाशास्त्रं न देयं यस्य कस्यचित्। नास्तिकाय कृतघ्नाय दुर्वृत्ताय दुरात्मने ॥३६॥ गुरुभक्तिविशुद्धान्तःकरणाय महात्मने। सम्यक् परीक्ष्य दातव्यं मासं षाण्मासवत्सरम् ॥३७॥ चित्तं प्रपञ्चमित्याहुर्नास्ति नास्त्येव सर्वदा। न प्रपञ्चं न चित्तादि नाहंकारो न जीवकः ॥३८॥ मायाकार्यादिकं नास्ति माया नास्ति भयं नहि। कर्ता नास्ति क्रिया नास्ति

श्रवणं मननं नहि ॥३९॥ समाधिद्वितयं नास्ति मातृमानादि नास्ति हि ।
अज्ञानं चापि नास्त्येव ह्यविवेकं कदाचन ॥४०॥ न गंगा न गया सेतुर्न भूतं
नान्यदस्तिहि । न भूमिर्न जलं नाग्निर्न वायुर्न च खं क्वचित् ॥४१॥ न देवा
न च दिक्पाला न वेदा न गुरुः क्वचित् । न दूरं नान्तिकं नालं न मध्यं न
क्वचित्स्थितम् ॥ ४२ ॥ नाद्वैतं द्वैतसत्यं वा ह्यसत्यं वा इदं न च । बन्ध-
मोक्षादिकं नास्ति सद्वाऽसद्वा सुखादि वा ॥४३॥ जातिर्नास्ति गतिर्नास्ति
वर्णो नास्ति न लौकिकम् । सर्वं ब्रह्मेति नास्त्येव ब्रह्मइत्यपि नास्ति हि॥४४॥
चिदित्येवेति नास्त्येव चिदहं भाषणं नहि । अहं ब्रह्मास्मि नास्त्येव नित्यशु-
द्धोऽस्मि न क्वचित् ॥४५॥ वाचा यदुच्यते किञ्चिन्मनसा मनुते क्वचित् ।
बुद्ध्या निश्चिनुते नास्ति चित्तेन ज्ञायते नहि । योगी योगादिकं नास्ति
सदा सर्वं सदा न च ॥४६॥ वेदशास्त्रं पुराणं च कार्यं कारणमीश्वरः। लोको
भूतं जनस्त्वैक्यं सर्वं मिथ्या न संशयः ॥४७॥ वाचा वदति यत्किञ्चित्
संकल्पैः कल्प्यते च यत् । मनसा चिन्त्यते यद्यत् सर्वं मिथ्या न संशयः

॥४८॥ रक्षको विष्णुरित्यादि ब्रह्मा सृष्टेस्तु कारणम् । संहारे रुद्र इत्येवं सर्वं मिथ्येति निश्चिनु ॥४९॥ स्नानं जपस्तपो होमः स्वाध्यायोदेवपूजनम् । मन्त्रं तन्त्रं च सत्संगो गुणदोषविजृम्भणम् ॥५०॥ दृश्यते जगति यद्यद् यद्यज्जगति वीक्ष्यते । वर्तते जगति यद्यद् सर्वं मिथ्येति निश्चिनु ॥ ५१ ॥ यद्यदस्ति पुराणेषु यद्यद्वेदेषु निर्णयम् । सर्वोपनिषदां भावं सर्वं शशविषाणवत् । नास्ति नास्ति जगत् सर्वं गुरुशिष्यादिकं नहि ॥५२॥ किञ्चिच्चेद्रोचते तुभ्यं तद् बद्धोऽसि भवस्थितौ । न किञ्चिद्रोचते चेत्ते तन्मुक्तोऽसि भवस्थितौ ॥५३॥ सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि । नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥ ५४ ॥ पाषाणलोहमणिमृण्मयविग्रहेषु पूजा पुनर्जननभोगकरी मुमुक्षोः । तस्माद्यतिः स्वहृदयार्चनमेव कुर्यात् बाह्यार्चनं परिहरेदपुनर्भवाय ॥ ५५ ॥ अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे । अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ॥ ५६ ॥ तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसन्धानेन भ्रमरकीटन्यायवत् । स्वरूपानुसन्धा-

न्व्यतिरिक्तान्यशास्त्राभ्यास उष्ट्रकुंकुमभारवद्व्यर्थः ॥ ५७ ॥ न योगशास्त्रप्रवृत्तिः । न सांख्यशास्त्राभ्यासः । न मन्त्रतन्त्रव्यापारः । नेतरशास्त्रप्रवृत्तिर्यतेरस्ति । न देवताप्रसादग्रहणम् । न बाह्यदेवाभ्यर्चनं कुर्यात् ॥५८॥ दूरयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः । सदोपनिषदं विद्यामभ्यसेन् मुक्तिहैतुकीम् ॥ ५९ ॥ न तीर्थसेवी नित्यं स्यान्नोपवासपरो यतिः । न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत् ॥ ६० ॥ लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम् । शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ॥ ६१ ॥ कर्तृत्वमद्य मे नष्टं कर्तव्यं वापि न क्वचित् । ब्राह्मण्यं कुलगोत्रे च नामसौन्दर्यजातयः ॥ ६२ ॥

इति श्रीभक्तिकौस्तुभे श्रुतिविरोधे अधिकारभेददर्शनं नाम षड्विंश आह्निकः ।

हरे राम हरे राम राम राम हरे हरे । हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥ १ ॥ इति षोडशकं नाम्नां कलिकल्मषनाशनम् । नातः परतरोपायः सर्ववेदेषु दृश्यते ॥ २ ॥ ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा

हुतम् । अत्रैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ ३ ॥ वराहरूपिणं मां ये भजन्ति मयि भक्तितः । विमुक्ताज्ञानतत्कार्या जीवन्मुक्ता भवन्ति ते ॥ ४ ॥ मच्चिन्तनं मत्कथनमन्योन्यं मत्प्रभाषणम् । मदेकपरमो भूत्वा कालं नय महामते ॥ ५ ॥ दिनकरकिरणैर्हि शार्वरं तमो निबिडतरं झटिति प्रणाशमेति । घनतरभवकारणं तमो यद्धरिदिनकृत्प्रभया न चान्तरेण ॥ ६॥ मम चरणस्मरणेन पूजया च स्वकृतमसः परिमुच्यते हि जन्तुः । न हि मरणप्रभवप्रणाशहेतुर्मम चरणस्मरणादृतेऽस्ति किञ्चित् ॥ ७ ॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ ८ ॥ यथा सुनिपुणः सम्यक् परदोषेक्षणे रतः । तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥ ९ ॥ द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च । ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ॥ १० ॥ द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः । परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ॥ ११ ॥ वैराग्यतैलसम्पूर्णे भक्तिवर्तिसमन्विते । प्रबोधपूर्णपात्रे तु

ज्ञसिदीपं विलोकयेत् ॥ १२ ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥ १३ ॥ अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ १४ ॥ निदाघ तव नास्त्यन्यज्ज्ञेयं ज्ञानवतां वर। प्रज्ञया त्वं विजानासि ईश्वरानुगृहीतया ॥ १५ ॥ यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ १६ ॥ प्रजहाति यदा कामान्सर्वांश्चित्तगतान्मुने। मयि सर्वात्मके तुष्टः स जीवन्मुक्त उच्यते ॥ १७ ॥ देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके। यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ॥ १८ ॥ अविशेषेण सर्वं तु यः पश्यति चिदन्वयम्। स एव साक्षाद्विज्ञानी स शिवः स हरिर्विधिः ॥ १९ ॥ सर्वज्ञत्वं परेशत्वं सर्वसंपूर्णशक्तिता। अनन्तशक्तिमत्त्वं च मदनुस्मरणाद्भवेत् ॥ २० ॥ यस्यास्त्यद्वैतमात्मज्ञानं तदेव यज्ञोपवीतम्। तस्य ध्याननिष्ठैव शिखा। तत्कर्म स

पवित्रम् । स सर्वकर्मकृत् । स ब्राह्मणः । स ब्रह्मनिष्ठापरः । स देवः । स ऋषिः । स तपस्वी । स श्रेष्ठः । स एव सर्वज्येष्ठः । स एव जगद्गुरुः । स एवाहं विद्धि । स एव नित्यपूतः स एव वेदपुरुषो महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते ॥ २१ ॥ तद्दर्शनेन सकलं जगत् पवित्रं भवति । तत् सेवापरोऽज्ञोऽपि मुक्तो भवति ॥ २२ ॥ यथाक्षणं यथाशास्त्रं यथादेशं यथासुखम् । यथासम्भवसत्संगमिमं मोक्षपथक्रमम् ॥ २३ ॥ मनसा कर्मणा वाचा सज्जनानुपसेवते । यतःकुतश्चिदानीय नित्यं शास्त्राण्यवेक्षते ॥ २४ ॥ इत्थंभूतमतिः शास्त्रगुरुसज्जनसेवया । सरहस्यमशेषेण यथावदधिगच्छति ॥ २५ ॥ अभ्यासात्साधुशास्त्राणां करणात्पुण्यकर्मणाम् । जन्तोर्यथावदेवेयं वस्तुदृष्टिः प्रसीदति ॥ २६ ॥ मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः । शमो विचारः सन्तोषश्चतुर्थः साधुसंगमः ॥ २७ ॥ एकं वा सर्वयत्नेन सर्वमुत्सृज्य संश्रयेत् । एकस्मिन्वशगे यान्ति चत्वारोऽपि वशं गताः ॥ २८ ॥ दुर्लभो विषयत्यागो दुर्लभं तत्त्वदर्शनम् । दुर्लभा सहजावस्था सद्गुरोः

करुणां विना। सकृज्ज्ञानेन मुक्तिः स्यात् सम्यग्ज्ञानेस्वयं गुरुः ॥ २६ ॥
सर्वगं सच्चिदानन्दं ज्ञानचक्षुर्निरीक्षते। अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानु-
मन्धवत् ॥ ३० ॥ प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम्। एवं ब्रह्मपरि-
ज्ञानादेव मर्त्योऽमृतो भवेत् ॥ ३१ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व-
संशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ३२ ॥ नैषा तर्केण
मतिरापनेया। प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ॥ ३३ ॥ तद्विज्ञानार्थं स गुरु-
मेवाभिगच्छेत्। समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ ३४ ॥ उत्तिष्ठत जाग्रत
प्राप्य वरान्निबोधत। क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो
वदन्ति ॥ ३५ ॥ न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः।
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ३६ ॥ आचार्यो
वेदसम्पन्नो विष्णुभक्तो विमत्सरः। योगज्ञो योगनिष्ठश्च सदा योगात्मकः
शुचिः ॥ ३७ ॥ गुरुभक्तिसमायुक्तः पुरुषज्ञो विशेषतः। एवंलक्षणसम्पन्नो
गुरुरित्यभिधीयते ॥ ३८ ॥ गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः।

अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ ३९ ॥ गुरुरेव परं ब्रह्म गुरुरेव परा गतिः । गुरुरेव परा विद्या गुरुरेव परायणम् । गुरुरेव परा काष्ठा गुरुरेव परं धनम् ॥ ४० ॥ चोदको बोधकश्चैव मोक्षदश्च परः स्मृतः । इत्येषां त्रिविधो ज्ञेय आचार्यस्तु महीतले ॥ ४१ ॥ चोदको दर्शयेन्मार्गं बोधकः स्थानमाचरेत् । मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वा परमश्नुते ॥ ४२ ॥ शुभं वाऽशुभमन्यद्वा यदुक्तं गुरुणा भुवि । तत्कुर्यादविचारेण शिष्यः सन्तोषसंयुतः ॥ ४३ ॥ वेदशास्त्राणि चान्यानि पदपांसुमिव त्यजेत् । गुरुभक्तिं सदा कुर्याच्छ्रेयसे भूयसे नरः । गुरुरेव हरिः साक्षान्नान्य इत्यब्रवीच्छ्रुतिः ॥ ४४ ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवः सदाच्युतः । न गुरोरधिकः कश्चित्त्रिषु लोकेषु विद्यते ॥ ४५ ॥ दिव्यज्ञानोपदेष्टारं देशिकं परमेश्वरम् । पूजयेत् परया भक्त्या तस्य ज्ञानफलं भवेत् ॥ ४६ ॥ यथा गुरुस्तथैवेशो यथैवेशस्तथा गुरुः । पूजनीयो महाभक्त्या न भेदो विद्यतेऽनयोः ॥ ४७ ॥ नाद्वैतवादं कुर्वीत गुरुणा सह कुत्रचित् । अद्वैतं भावयेद्भक्त्या गुरोर्देवस्य

चात्मनः ॥ ४८ ॥ सत्कर्मपरिपाकतो बहूनां जन्मनामन्ते नृणां मोक्षेच्छा जायते । तदा सद्गुरुमाश्रित्य चिरकालसेवया बन्धं मोक्षं कश्चित्प्रयाति ॥ ४९ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ५० ॥ यथाग्निर्दारुमध्यस्थो नोत्तिष्ठेन्मथनं विना । विना चाभ्यासयोगेन ज्ञानदीपस्तथा नहि ॥५१॥ घटमध्ये यथा दीपो बाह्ये नैव प्रकाशते । भिन्ने तस्मिन् घटे चैव दीपज्वाला च भासते ॥ ५२ ॥ स्वकायं घटमित्युक्तं यथा जीवो हि तत्पदम् । गुरुवाक्यसमाभिन्ने ब्रह्मज्ञानं प्रकाशते ॥५३॥ कर्णधारं गुरुं प्राप्य तद्वाक्यं प्लववद्दृढम् । अभ्यासवासना शक्त्या तरन्ति भवसागरम् ॥ ५४ ॥ हृत्पुण्डरीकमध्ये तु भावयेत् परमेश्वरम् । साक्षिणं बुद्धिवृत्तस्य परमप्रेमगोचरम् ॥ ५५ ॥ अगोचरं मनोवाचामवधूतादिसंप्लवम् । सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् ॥ ५६ ॥ नारायणे मनो युञ्जन्नारायणमयो भवेत् । वासुदेवे मनो युञ्जन् सर्वसिद्धिमवाप्नुयात् ॥ ५७ ॥ दिवा न पूजयेद्विष्णुं रात्रौ नैव प्रपूजयेत् । सततं

पूजयेद्विष्णुं दिवारात्रं न पूजयेत् ॥ ५८ ॥ एकाग्रमनसा यो मां ध्यायते हरिमव्ययम् । हृत्पंकजे च स्वात्मानं स मुक्तो नात्र संशयः ॥ ५९ ॥ मद्रूपमद्वयं ब्रह्म आदिमध्यान्तवर्जितम् । स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम् ॥ ६० ॥ इत्येतन्निश्चितं ज्ञानं मद्भक्त्या सिध्यति स्वयम् । नित्यमेकाग्रभक्तिः स्याद्गोपीचन्दनधारणात् ॥ ६१ ॥

इति श्रीभक्तिकौस्तुभे कलिकल्मषनाशनं नाम सप्तविंश आह्निकः ।

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ १ ॥ न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ २ ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ३ ॥ नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान् । तं पीठगं येऽनुभजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ ४ ॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥५॥ यच्च किञ्चित् जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ ६ ॥ अहेयमनुपादेयमनाधेयमनाश्रयम् । अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम् । एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन ॥ ७ ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ ८ ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥ ९ ॥ समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ १० ॥ चैतन्यमात्रमोङ्कारं ब्रह्मैव सकलं जगत् । अहमेव जगत् सर्वमहमेव परं पदं ॥ ११ ॥ समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् । अहमन्य इदं चान्यदिति भ्रान्तिं त्यजानघ ॥ १२ ॥ यो घोरं वेषमास्थाय शरभाख्यं महेश्वरः । नृसिंहं लोकहन्तारं संजघान महाबलः ॥ १३ ॥ कृपया भगवान्

विष्णुं विददार नखैः खरैः । चर्मास्वरो महावीरो वीरभद्रो बभूव ह ।
स एको रुद्रोध्येयः सर्वेषां सर्वसिद्धये ॥ १४ ॥ यो ब्रह्मणः पञ्चवक्त्रहन्ता
तस्मै रुद्राय नमोऽस्तु ॥ १५ ॥ यो वामपादार्चित विष्णुनेत्रः तस्मै ददौ
चक्रमतीव हृष्टः तस्मै रुद्राय नमोऽस्तु ॥ १६ ॥ यो दक्षयज्ञे सुरसंघान्
विजित्य विष्णुं बबन्धोरगपाशेन वीरः तस्मै रुद्राय नमोऽस्तु ॥ १७ ॥ यत्
पादाम्भोरुहद्वन्द्वं मृग्यते विष्णुना सह । यतो वाचो निवर्त्तन्ते अप्राप्य
मनसा सह ॥ १८ ॥ एक एव शिवोनित्यस्ततोऽन्यत् सकलं मृषा । शिव
एव सदा ध्येयः सर्वसंसारमोचकः । तस्मै महाग्रासाय महेश्वराय नमः ।
ॐभद्रं कर्णेभिरिति शान्तिः॥१९॥ शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥२०॥ ये नमस्यन्ति गोविन्दं ते
नमस्यन्ति शंकरम् । येऽर्चयन्ति हरिं भक्त्या तेऽर्चयन्ति वृषध्वजम् ॥२१॥ ये
द्विषन्ति विरूपाक्षं ते द्विषन्ति जनार्दनम् । ये रुद्रं नाभिजानन्ति ते न जान-
न्ति केशवम्॥२२॥ व्यक्तं सर्वम् उमारूपम् अव्यक्तं तु महेश्वरम् । उमाशंकर-

योगो यः स योगो विष्णुरुच्यते ॥ २३ ॥ अन्तरात्माभवेद्ब्रह्मा परमात्मा महेश्वरः। सर्वेषामेव भूतानां विष्णुरात्मा सनातनः ॥२४॥ सर्वदुष्टप्रशमनं सर्वैश्वर्य्यफलप्रदम्। वामदेवं महाबोधदायकं पावकात्मकम् ॥ २५ ॥ सर्वसौभाग्यदं नृणां सर्वकर्मफलप्रदम्। अवस्थात्रितयातीतं तुरीयं ब्रह्मसंज्ञितम् ॥ २६ ॥ ब्रह्मविष्ण्वादिभिः सेव्यं सर्वेषां जनकं परम्। ईशानं परमं विद्यात् प्रेरकं बुद्धिसाक्षिणम् ॥२७॥ मायया मोहिताः शम्भोः न जानन्ति सुराः किल। जगद्गुरुम् महादेवं सर्व कारण कारणम् ॥२८॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥२९॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥३०॥ एको रुद्रो न द्वितीयाय तस्मै य इमांल्लोकानीशत ईशनीभिः। यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्न परं किंचनास्ति। व्यापको हि भगवान् रुद्रः ॥ ३१ ॥ मामेव विदित्वा संसृतिपाशात् प्रमुच्यते। तस्मादहं पशुपाश-

विमोचकः। मामेवं विदित्वा सांसृतिकीं रुजं द्रावयति। तस्मादहं रुद्रो यः सर्वेषां परमागतिः॥ ३२॥ काश्यां अव्ययं अनाद्यनन्तं वेदवेदान्तवेद्यं अद्वैतं ज्योतिःस्वरूपं विश्वेश्वराभिधं लिंगं मामेवोपासितव्यम्। भस्मदिग्धांगो रुद्राक्षभूषणो मामेव सर्वभावेन प्रपन्नः प्रयतैरेवाहमन्वहं पूज्यः॥३३॥ ब्रह्मा कृतांजलिः पूर्वस्यां दिशि विष्णुः मूर्धांजलिं कृत्वा दक्षिणस्यां दिशि अहर्निशं मामुपास्ते। अहं च तारकं शैवं मनुमुपदिशामि॥३४॥तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम्। येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम्॥३५॥ ये भस्मधारणं त्यक्त्वा कर्म कुर्वन्ति मानवाः। तेषां नास्ति विनिर्मोक्षः संसारात् जन्मकोटिभिः॥३६॥ येषां कोपो भवेत् ब्रह्मन् ललाटे भस्मदर्शनात्। तेषां उत्पत्तिसांकर्य्यं अनुमेयं विपश्चिता॥३७॥ येषां नास्ति मुने श्रद्धा श्रौते भस्मनि सर्वदा। गर्भाधानादिसंस्कारः तेषां नास्तीति निश्चयः॥३८॥ येषां क्रोधो भवेत् भस्मधारणे तत्प्रमाणके। ते महापातकैर्युक्ता इति शास्त्रस्य निश्चयः

॥३९॥ धिग् भस्मरहितं भालं धिग् ग्राममशिवालयं। धिगनीशार्चनं जन्म धिग् विद्यामशिवाश्रयाम् ॥४०॥ नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥४१॥ हृत्पुण्डरीकमध्यस्थां प्रातः सूर्यसमप्रभाम्। पाशांकुशधरां सौम्यां वरदाभयहस्तकाम्। त्रिनेत्रांरक्तवसनां भक्तकामदुघां भजे ॥ ४२ ॥ नमामि त्वां महादेवीं महाभयविनाशिनीम्। महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ॥४३ ॥ तापापहारिणीम् देवीं भुक्तिमुक्तिप्रदायिणीम्। अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ॥ ४४ ॥ अज्ञेया स्यादनन्तैऽका नैकाऽलक्ष्या अजा च या। यस्याः परतरं नास्ति सैषादुर्गा प्रकीर्त्तिता ॥४५॥ तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम्। नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥४६॥ दुर्गात् सन्त्रायते यस्मात् सा दुर्गा हीति कथ्यते। प्रपद्ये शरणं देवीं दुं दुं दुरितं हर ॥ ४७॥ महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि। तन्नो देवी प्रचोदयात् ॥४८॥ अहं रुद्रेभिर्वसुभिश्च-

राम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणावुभौ बिभर्मि अहमिन्द्राग्नी अहमश्विनावुभौ । अहं सोमं त्वष्टारं पूषणं भगं दधामि । अहं विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ॥ ४९ ॥ अहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगच्छून्यं चाशून्यं च । अहमानन्दानानन्दा विज्ञानाविज्ञाने अहम् । वेदोऽहमवेदोऽहम् । विद्याहमविद्याहम् । अजाहमनजाहम् ॥५०॥ या सांगोपांगवेदेषु चतुर्ष्वेकैव गीयते । अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ ५१ ॥ या वर्णपदवाक्यार्थस्वरूपेणैव वर्त्तते । अनादिनिधनानन्ता सा मां पातु सरस्वती ॥५२॥ अन्तर्यामितया विश्वं त्रैलोक्यं या नियच्छति । ईश्वरी सर्वरूपैका सा मां पातु सरस्वती ॥ ५३ ॥ व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम् । सर्वे कामदुघा धेनुः सा मां पातु सरस्वती ॥ ५४ ॥ नमस्ते शारदे देवि काश्मीरपुरवासिनी । त्वामहं प्रार्थये नित्यं विद्यादानविधायिनीम् ॥५५॥ भक्त जिह्वाग्रसदना पाशपुस्तकधारिणी । अक्षसूत्रांकुशधरा

वाचि तिष्ठतु मे सदा ॥ ५६ ॥ भवानीं धारणां मेधां वाग्देवीं विधिवल्लभाम् । नमामि भवसन्तापनिर्वापणसुधानदीम् ॥५७॥

इति श्रीभक्तिकौस्तुभे ब्रह्मस्वरूपं पूर्वार्द्धं नाम अष्टाविंशतितम आन्हिकः ।

सच्चिदानन्दरूपाय सर्वधीवृत्तिसाक्षिणे । नमो वेदान्तवेद्याय ब्रह्मणेऽनन्तरूपिणे ॥ १ ॥ ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्त्तासि । त्वमेव केवलं धर्त्तासि । त्वमेव केवलं हर्त्तासि । त्वमेव खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यं ॥ २ ॥ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। सर्वस्य कामाय सर्वं प्रियं भवति। आत्मनस्तु कामाय सर्वं प्रियं भवति॥३॥ अव त्वं माम् । अव पश्चात्तात् । अव पुरस्तात्। अव चोत्तरात्तात् । अव दक्षिणात्तात्। अव चोर्ध्वात्तात् । अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात् ॥४॥ त्वं वाङ्मयः त्वं चिन्मयः। त्वमानन्दमयः त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं गुणत्रयातीतः । त्वं कालत्रयातीतः । त्वं देहत्रयातीतः ॥५॥

त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः स्वरोम् । एकदन्ताय विद्महे वक्रतुंडाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥६॥ भक्तानुकम्पितं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात् परम् । एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ७ ॥ नमो व्रातपतये । नमो गणपतये । नमः प्रमथपतये । नमस्तेऽस्तु लम्बोदरायैकदन्ताय । विघ्नविनाशिने शिवसुताय श्रीवरदमूर्त्तये नमोनमः ॥ ८ ॥ एतदथर्वशिरो योऽधीते स ब्रह्मभूयाय कल्पते । स सर्व-विघ्नैर्न बाध्यते । स सर्वतः सुखमेधते । न बिभेति कदाचन ॥ ९ ॥ सूर्य-ग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वासिद्धमंत्रो भवति । महाविघ्नात् प्रमुच्यते । महापापात् प्रमुच्यते । महादोषात् प्रमुच्यते । स सर्वविद्भ-वति । ॐभद्रंकर्णेभिरिति शान्तिः । हरिः ॐ तत्सत् ॥ १० ॥ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । सूर्य आत्मा जगतस्तस्थुषश्च । सूर्याद्वै खल्विमानि भूतानि जायन्ते । नमस्त

आदित्य ॥ ११ ॥ त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं विष्णुरसि। त्वमेव प्रत्यक्षं रुद्रोऽसि। त्वमेव सर्वं छन्दोऽसि। आदित्याद्वेदा जायन्ते। आनन्दमयो ज्ञानमयो विज्ञानमय आदित्यः ॥ १२ ॥ सूर्य्याद्भवन्ति भूतानि सूर्य्येन पालितानि तु। सूर्य्ये लयं प्राप्नुवन्ति यः सूर्य्यः सोऽहमेव च ॥१३॥ रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि। इति रामपदेनासौ परं ब्रह्माभिधीयते। राममंत्रार्थविज्ञानी जीवन्मुक्तो न संशयः ॥ १४ ॥ अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः। उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः ॥ १५ ॥ प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः। अर्द्धमात्रात्मको रामो ब्रह्मानन्दैक विग्रहः ॥ १६ ॥ वायुपुत्रं विघ्नेशं वाणीं दुर्गां सूर्य्यचन्द्रमित्यादीनि रामांगानि-विना रामो विघ्नकरो भवति ॥ १७ ॥ नमो वेदादिरूपाय ॐकाराय नमोनमः। रमाधराय रामाय श्रीरामायात्ममूर्त्तये ॥ १८ ॥ ऐहिकेषु च कार्य्येषु महापत्सु कदाचन। नैव योज्यो राममंत्रः केवलं मोक्षसाधकः ॥ १९ ॥ ऐहिके समनुप्राप्ते मां स्मरेद्राम सेवकम्। सर्वथाहं

प्रदास्यामि रामभक्तस्य ईप्सितम् ॥ २० ॥ राम एव परं ब्रह्म राम एव परं तपः। राम एव परं तत्वं श्रीरामो ब्रह्मतारकम् ॥ २१ ॥ गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः। वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिकः ॥२२॥ ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च। स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ॥ २३ ॥ कोटिकोटिसहस्राणि उपपातकजान्यपि। सर्वाण्यपि प्रणश्यन्ति राममन्त्रानुकीर्तनात् ॥२४॥ भूतप्रेतपिशाचाद्याः कूश्माण्डब्रह्मराक्षसाः। दूरादेव प्रधावन्ति राममन्त्रप्रभावतः ॥ २५ ॥ ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम्। कैवल्यं भगवत्त्वं च मन्त्रोयं साधयिष्यति ॥२६॥ गत्वापि मातरं मोहादगम्याश्चैव योषितः। उपास्यानेन मन्त्रेण रामस्तदपि नाशयेत् ॥ २७ ॥ महापातकपापिष्ठसंगत्या सञ्चितं च यत्। नाशयेत्तत्कथालापशयनासनभोजनैः ॥ २८ ॥ पितृमातृवधोत्पन्नं बुद्धिपूर्वमघं च यत्। तदनुष्ठानमात्रेण सर्वमेतद्विलीयते ॥ २९ ॥ अवस्थात्रितयेष्वेव बुद्धिपूर्वमघं च यत्।

तन्मन्त्रस्मरणेनैव निःशेषं प्रविलीयते ॥३०॥ येषुयेष्वपि देशेषु रामभद्र
उपास्यते । दुर्भिक्षादिभयं तेषु न भवेत्तु कदाचन ॥ ३१ ॥ शान्तः
प्रसन्नवदनो ह्यक्रोधो भक्तवत्सलः । अनेन सदृशो मन्त्रो जगत्स्वपि
न विद्यते ॥ ३२ ॥ सम्यगाराधितो रामः प्रसीदत्येव सत्वरम् । ददा-
त्यायुष्यमैश्वर्यमन्ते विष्णुपदं च यत् ॥ ३३ ॥ प्रतियोगिविनिर्मुक्त-
ब्रह्मविद्यैकगोचरम् । अखण्डनिर्विकल्पं तत् रामचन्द्रपदं भजे ॥ ३४ ॥
यो रामः कृष्णतामेत्य सार्वात्म्यं प्राप्य लीलया । अतोषयत् देवमौनि-
पटलं तं नतोस्म्यहम् ॥ ३५ ॥ सच्चिदानन्द रूपाय कृष्णायाक्लिष्ट
कर्मणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ ३६ ॥ ब्रह्मण्यो
देवकीपुत्रो ब्रह्मण्यो मधुसूदनः । ब्रह्मण्यः पुंडरीकाक्षो ब्रह्मण्यो विष्णु-
रच्युतः ॥ ३७ ॥ सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं ज्ञान-
मुद्राढ्यं वनमालायुतं हरिम् ॥३८ ॥ गोपगोपीगवावीतं सुरद्रुमलताश्रितम् ।
दिव्यालंकरणोपेतं रत्नपंकजमध्यगम् ॥ ३९ ॥ कालिन्दीजलकल्लोलसंगि-

मारुतसेवितम् । चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः ॥ ४० ॥ एक मेवाद्वयं ब्रह्म मायया च चतुष्टयम् । रोहिणीतनयोविश्व अकाराक्षरसम्भवः ॥ ४१ ॥ उकाराक्षर सम्भूतः प्रद्युम्नस्तैजसात्मकः । प्राज्ञात्मकोऽनिरुद्धोऽसौ मकाराक्षरसम्भवः ॥ ४२ ॥ अर्द्धमात्रात्मकः कृष्णो यस्मिन् विश्वं प्रतिष्ठितम् । कृष्णात्मिका जगत् कर्त्री प्रकृतिश्चैव रुक्मिणी ॥ ४३ ॥ व्रजस्त्रीजनसंभूतः श्रुतिभ्यो ज्ञानसंगतः । प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः । तस्मादोंकारसम्भूतो गोपालो विश्वसंस्थितः ॥ ४४ ॥ सत्त्वरजस्तमश्चैव अहंकारश्चतुर्भुजः । पंचभूतात्मकं शङ्खं करे रजसि संस्थितम् । बालस्वरूपमित्यन्तं मनश्चक्रं निगद्यते ॥४५॥ आद्यामाया भवेच्छार्ङ्गं पद्मं विश्वं करे स्थितम् । आद्याविद्या गदा वेद्या सर्वदा मे करे स्थिता ॥४६ ॥ एको विष्णुरनेकेषु जंगमस्थावरेषु च । काष्ठे वह्निस्तिले तैलं घृतं क्षीरे यथा भवेत् ॥ ४७ ॥ सर्वभूतस्थमेकं वै नारायणं कारणपुरूपं अकारणं परं ब्रह्मोम् । नारायणाय विद्महे । वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ ४८ ॥

नारायणपरो ज्योतिः आत्मा नारायणः परः। नारायणः परं ब्रह्म तत्त्वं नारायणः परः। नारायण परो ध्याता ध्यानं नारायणः परः ॥ ४९ ॥ यत् सर्वहृदयागारं यत्र सर्वं प्रतिष्ठितम्। वस्तुतो यन्निराधारं वासुदेवपदं भजे ॥ ५० ॥

इति श्रीभक्तिकौस्तुभे ब्रह्मस्वरूपं उत्तरार्द्धं नाम एकोनत्रिंशत् आह्निकः।

नायं जनो मे सुखदुःखहेतुर्न देवताऽऽत्मा ग्रहकर्मकालाः। मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद्यत् ॥ १ ॥ मनो गुणान्वै सृजते बलीयस्ततश्च कर्माणि विलक्षणानि। शुक्लानि कृष्णान्यथ लोहितानि तेभ्यः सवर्णाः सृतयो भवन्ति ॥ २ ॥ अनीह आत्मा मनसा समीहता हिरण्मयो मत्सख उद्विचष्टे। मनः स्वलिंगं परिगृह्य कामान् जुषन्निबद्धो गुणसंगतोऽसौ ॥ ३ ॥ दानं स्वधर्मो नियमो यमश्च श्रुतानि कर्माणि च सद्व्रतानि। सर्वे मनोनिग्रहलक्षणान्ताः परो हि योगो मनसः समाधिः ॥ ४ ॥ समाहितं यस्य मनः प्रशान्तं दानादिभिः किं वद तस्य कृत्यम्। असंयतं

यस्य मनो विनश्यद्दानादिभिश्चेदपरं किमेभिः ॥ ५ ॥ मनोवशेऽन्ये ह्यभवन् स्म देवा मनश्च नान्यस्य वशं समेति । भीष्मो हि देवः सहसः सहीयान् युञ्ज्याद्वशे तं स हि देवदेवः ॥ ६ ॥ तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदं तन्न विजित्य केचित् । कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्राण्युदासीनरिपून् विमूढाः ॥ ७ ॥ देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः । एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ॥ ८ ॥ जनस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत् । जिह्वां क्वचित् संदशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥ ९ ॥ दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत् । यदंगमंगेन निहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥ १० ॥ आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः । न ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात् क्रुध्येत कस्मान्न सुखं न दुःखम् ॥ ११ ॥ ग्रहा निमित्तं सुखदुःखयोश्चेत्किमात्मनोऽजस्य जनस्य ते वै । ग्रहैर्ग्रहस्यैव वदन्ति पीडां क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ १२ ॥ कर्म-

ऽस्तु हेतुः सुखदुःखयोर्वै किमात्मनस्तद्धि जडाजडत्वे । देहस्त्वचित् पुरुषो-
ऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्म मूलम् ॥ १३ ॥ कालस्तु हेतुः सुख-
दुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोऽसौ । नाग्नेर्हि तापो न हिमस्य
तत्स्यात् क्रुद्ध्येत कस्मै न परस्य द्वन्द्वम् ॥ १४ ॥ न केनचित्क्वापि कथं-
चनास्य द्वन्द्वोपरागः परतः परस्य । यथाऽहमः संसृतिरूपिणः स्यादेवं प्रबुद्धो
न बिभेति भूतैः ॥ १५ ॥ एतां समास्थाय परात्मनिष्ठामध्यासितां पूर्वतमै-
र्महर्षिभिः । अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दांघ्रिनिषेवयैव ॥१६॥
कुतोऽशिवं त्वच्चरणांबुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् । पिबन्ति
ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदं ॥ १७ ॥ विमोहितोऽयं जन
ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् । सुखाय दुःखप्रभवेषु सज्जते
गृहेषु योषित् पुरुषश्च वञ्चितः ॥ १८ ॥ लब्ध्वा जनो दुर्लभमत्र मानुषं
कथञ्चिदव्यंगमयत्नतोऽनघ । पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे
पतितो यथा पशुः ॥ १९ ॥ ममैष कालोऽजित निष्फलो गतो राज्य

श्रियोन्नद्धमदस्य भूपतेः। मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥ २० ॥ कलेवरेऽस्मिन् घटकुड्यसन्निभे निरूढमानो नरदेव इत्यहम्। वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वागणयन् सुदुर्मदः ॥२१॥ प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम्। त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ २२ ॥ पुरा रथैर्हेमपरिष्कृतैश्चरन्मतंगजैर्वा नरदेवसंज्ञितः। स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥ २३ ॥ निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः। गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥ २४ ॥ करोति कर्माणि तपःसु निष्ठितो निवृत्तभोगस्तदपेक्षया ददत्। पुनश्च भूयेयमहम् स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥ २५ ॥ भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः। सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥ २६ ॥ मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया। यः प्रार्थ्यते

साधुभिरेकचर्यया वनं विविक्तद्भिरखण्डभूमिपैः ॥ २७ ॥ न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वरं विभो । आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥ २८ ॥ तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः । निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥ २९ ॥ चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोऽलब्धशान्तिः कथञ्चित् । शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि माऽऽपन्नमीश ॥ ३० ॥ श्रीभगवानुवाच । सार्वभौम महाराज मतिस्ते विमलोर्जिता । वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥ ३१ ॥ प्रलोभितो वरैर्यत्त्वमप्रमादाय विद्धि तत् । न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥ ३२ ॥ युञ्जानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन्दृश्यते पुनरुत्थितम् ॥ ३३ ॥ विचरस्व महीं कामं मय्यावेशितमानसः । अस्त्वेवं नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी ॥ ३४ ॥ क्षात्रधर्मे स्थितो जन्तून्न्यवधीर्मृगयादिभिः ।

समाहितस्तत्तपसा जह्यथं मदुपाश्रितः ॥ ३५ ॥ जन्मन्यनन्तरे राजन्सर्वभूतसुहृत्तमः । भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् ॥ ३६ ॥

इति श्रीभक्तिकौस्तुभे त्रिंशत्तमे आह्निके प्रबुद्धगीतं नाम प्रथमः परिच्छेदः ।

अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा नृप । पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥१॥ तेपिरे तप एवोग्रं पित्रादेशेन यन्त्रिताः । प्रजाविवृद्धये यत्तान्देवर्षिस्तान्ददर्श ह ॥ २ ॥ उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः । अदृष्ट्वान्तं भुवो यूयं बालिशा बत पालकाः ॥ ३ ॥ तथैकपुरुषं राष्ट्रं बिलं चादृष्टनिर्गमम् । बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥ ४ ॥ नदीमुभयतो वाहां पञ्चपञ्चाद्भुतं गृहम् । क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयंभ्रमिम् ॥ ५ ॥ कथं स्वपितुरादेशमविद्वांसो विपश्चितः । अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ॥ ६ ॥ श्रीशुक उवाच । तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया । वाचःकूटं तु देवर्षेः स्वयं विममृशुर्धिया ॥ ७ ॥ भूः क्षेत्रं जीवसंज्ञं यदनादि निजबन्धनम् । अदृष्ट्वा

तस्य निर्वाणं किमसत्कर्मभिर्भवेत् ॥ ८ ॥ एक एवेश्वरस्तुर्यो भगवान्स्वाश्रयः परः । तमदृष्ट्वाऽभवं पुंसः किमसत्कर्मभिर्भवेत् ॥ ९ ॥ पुमान्नैवैति यद्गत्वा बिलस्वर्गं गतो यथा । प्रत्यग्धामाऽविद इह किमसत्कर्मभिर्भवेत् ॥ १० ॥ नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता । तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ ११ ॥ तत्संगभ्रंशितैश्वर्यं संसरन्तं कुभार्यवत् । तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १२ ॥ सृष्ट्यप्ययकरीं मायां वेलाकूलान्तवेगिताम् । मत्तस्य तामविज्ञाय किमसत्कर्मभिर्भवेत् ॥ १३ ॥ पञ्चविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणम् । अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥ ऐश्वरं शास्त्रमुत्सृज्य बन्धमोक्षानुदर्शनम् । विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १५ ॥ कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत् ॥ स्वतन्त्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १६ ॥ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् । कथं तदनुरूपाय गुणविश्रम्भ्युपक्रमेत् ॥ १७ ॥

इति श्रीभक्तिकौस्तुभे त्रिंशत्तमे आह्निके नारदकूटं नाम द्वितीयः परिच्छेदः ।

कृते प्रवर्त्तते धर्मश्चतुष्पात्तज्जनैर्धृतः । तपः सत्यदयादानेष्वर्धं ह्रसति द्वापरे ॥ १ ॥ कलौ तु धर्महेतूनां तुर्यांशोऽधर्म हेतुभिः । एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २ ॥ प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च । तदा कृतयुगं विद्यात् ज्ञाने तपसि यद्रुचिः ॥३॥ यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम् । तदात्रेता रजोवृत्तिः इति जानीहि बुद्धिमन् ॥४॥ यदा लोभस्त्वसन्तोषो मानो दम्भोऽथमत्सरः । कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ ५ ॥ यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम् । शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥ ६ ॥ सत्यं नास्ति दया दानं तपः शौचं न विद्यते । सत्यं निराश्रयं नित्यं दया च विधवा मता ॥ ७॥ नाथहीनः सदा धर्मः शान्तिः पतिसुतैर्विना । स्थानभ्रष्टः कलौ न्यायः सारल्यं मृत्युनिश्चितम् ॥ ८ ॥ वित्तमेव कलौ नृणां जन्माचारगुणोदयः । धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ ९ ॥ सत्यत्त्वे धार्ष्ट्यमेवैव साधुत्वे दम्भ एव च । विप्रत्वे सूत्रमेव स्यात् पाण्डित्ये चापलं वचः ॥१०॥

शालग्रामो मानपिण्डः सर्वे नास्तिकवृत्तयः । शिवपूजां परित्यज्य मानवाना-
मुपासनम् ॥११॥ जना अधासुरायन्ते शाठ्यदुष्कर्मकारिणः । इह सन्तो विपी-
दन्ति प्रहृष्यन्ति ह्यसाधवः ॥१२॥ कुकर्मणि समासक्ता अधर्मनिरताः कलौ ।
वरं विप्रेभ्यश्चण्डाला येषु धर्मो भवेत् क्वचित् ॥१३॥ देवाः स्वर्गात् प्रजायन्ते
प्रवृत्ते तु कृतेयुगे। जायते नरकात् पापी युगे अन्त्ये समागते॥१४॥ दुष्टाः सत्य-
युगे ये च ते भवन्ति कलाविह । कलौ ये साधवः केचित् सम्भवन्ति युगा-
न्तरे ॥ १५ ॥ पूर्वं ये राक्षसा जाताः ते कलौ ब्राह्मणाः स्मृताः । असत्यवा-
दिनः सर्वं दाम्भिका जनवञ्चकाः । पाखण्डनिरताः प्रायो वेदनिन्दाकरा-
स्तथा ॥ १६ ॥ वसुन्धरा पापपूर्णा चेष्टा सिद्धिकरी गता । विद्या चार्थकरी
जाता ज्ञानं दूरतरं गतम् ॥ १७ ॥ सरस्वती नाकगता पौरुषं प्रलयं गतम् ।
पाण्डित्यमानिनोमूढास्तथा धार्म्मिकमानिनः ॥ १८ ॥ बालका वृद्धसदृशा
युवका गुरुनिन्दकाः । पुस्तकस्था भवेद्विद्या पुत्राश्च गुरुतर्जकाः ॥ १९ ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः । धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्त-

मासनम् ॥ २० ॥ तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपाः । पाखण्डनिरताः सन्तो विरक्ताः सपरिग्रहाः ॥ २१ ॥ अव्रता वटवोऽशौचा वेदाः पाखण्डदूषिताः । आश्रमा यवनैः रुद्धास्तीर्थानि सरितस्तथा । न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियोनरः ॥ २२ ॥ रत्नबुद्ध्या भस्मराशिं कुरुते सञ्चयं जनः । अमृतं च परित्यज्य विषं नित्यं निषेवते ॥ २३ ॥ सर्वे क्षुद्रदृशा मर्त्याः क्षुद्रभाग्या महाशनाः । दुर्भगा भूरितपाश्च निर्दयाः शुष्कवैरिणः ॥ २४ ॥ हीनाः पिशाचसन्दर्शाः किराटाः कूटकारिणः । मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ २५ ॥ नित्यमुद्विग्नमनसो दुर्भिक्षकरपीडिताः । अनावृष्टिभयार्त्ता वै राजन्यैर्दस्युधर्मभिः ॥ २६ ॥ राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः । दस्यूत्कृष्टा जनपदाः भिक्षवश्च कुटुम्बिनः ॥ २७ ॥ अट्टशूला जनपदाः शिवशूला द्विजातयः । कामिन्यः केशशूलिन्यो मानवाः पशुभिः समाः ॥ २८ ॥ कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः । ह्रस्वकाया महाहारा-

पूजितश्चाहृतोऽपि वा। नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४७ ॥ यथा हेम्निस्थितो वह्निर्दुर्वर्णं हन्ति धातुजम्। एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४८ ॥ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः। नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४९ ॥ नानुद्वेष्टि कलिं सम्राट् सारंग इव सारभुक्। कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥ ५० ॥ कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः। कीर्त्तनादेव कृष्णस्य मुक्तसंगः परं व्रजेत् ॥ ५१ ॥ कृते यद्ध्यायते विष्णुं त्रेतायां यजतो मखैः। द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥ ५२ ॥

इति श्रीभक्तिकौस्तुभे कलिस्वरूपनिर्णयोनामैकत्रिंश आन्हिकः।

वसन्ति प्राणिनो ये च कर्मबन्धनिबन्धनाः। सर्वे तेऽपि वशं यान्ति यमस्य भगवन् किल ॥ १ ॥ आयुषोऽन्ते तथा यान्ति यातनास्तत्प्रचोदिताः। यातनाभ्यः परिभ्रष्टा देवाद्यास्वथयोनिषु। जन्तवः परि-

वर्त्तन्ते शास्त्राणामेष निर्णयः ॥ २ ॥ येन यावान् यथा धर्मोऽधर्मोवेह समीहितः । स एव तत्फलं भुंक्ते तथा तावदमुत्र वै ॥ ३ ॥ सर्वे कर्मानुरोधेन दण्डमर्हन्ति कारिणः । सम्भवन्ति हि भद्राणि विपरीतानि चानघाः ॥ ४ ॥ नरकस्थोऽपि देहं वै न पुमांस्त्यक्तुमिच्छति । नारक्यां निर्वृतौ सत्यां देवमायाविमोहिताः ॥ ५ ॥ गृहेषु कूटधर्मेषु दुःखतन्त्रेष्वतन्द्रितः । कुर्वन् दुःखप्रतीकारं सुखवन्मन्यते गृही ॥ ६ ॥ एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा । नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥ ७ ॥ आस्तेऽप्यजातनिर्वेदो म्रियमाणः स्वयं भृतैः । जरयोपात्तवैरूप्यो मरणाभिमुखो गृहे ॥ ८ ॥ अवमत्या ह्युपन्यस्तं आहरन् गृहपालवत् । आमयाव्यप्रदीप्ताग्निः अल्पाहारोऽल्पचेष्टितः ॥ ९ ॥ वायुनोत्क्रमतोत्तारः कफसंरुद्धनाडिकः । कासश्वासकृतायासः कण्ठे घुरघुरायते ॥ १० ॥ शयानः परिशोचद्भिः परिवीतः स्वबन्धुभिः । वाच्यमानोऽपि न ब्रूते कालपाशवशं गतः ॥ ११ ॥ एवं कुटुम्ब-

भूर्यपत्या गतह्रियः । शश्वत् कटुकभाषिण्यश्चौर्यस्भायोक साहसाः ॥ २९ ॥ पितृभ्रातृसुहृज्ज्ञातीन् हित्वा सौरतसौहृदाः । श्यालिकाश्यालसंवादा दीनाः स्त्रैणाः कलौ जनाः ॥ ३० ॥ तरुणीप्रभुता गेहे श्यालको बुद्धिदायकः । उदरम्भरयो जीवा दम्पतीनां च कल्कनम् ॥ ३१ ॥ उपदेशे स्त्रियः शक्ताः श्यालका गुरुरूपिणः । स्त्रीबान्धवा गृहे देवाः स्त्रीणां क्रीडामृगा जनाः ॥ ३२ ॥ दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके । स्वीकार एव चोद्वाहे स्त्रियश्च कलहप्रियाः ॥ ३३ ॥ दूरे वार्य्ययनं तीर्थं यशोर्थं धर्मसेवनम् । कुटुम्बभरणे दाक्ष्यं धनलिप्सा पदे पदे ॥ ३४ ॥ कलौ काकिनिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः । त्यक्ष्यन्ति च प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥ ३५ ॥ न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि । पुत्रान् सर्वार्थकुशलान् क्षुद्राः शिश्नोदरम्भराः ॥ ३६ ॥ त्रिंशद्विंशतिवर्षाणि परमायुः कलौयुगे ॥ ३७ ॥ कुकर्माचरणात् सारः सर्वतो निर्गतोऽधुना । पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा ॥ ३८ ॥ विप्रैर्भागवती

वार्त्ता गेहे गेहे जने जने । कारिता कणलोभेन कथासारस्ततो गतः ॥३९॥ अत्युग्रभूरिकर्माणो नास्तिका रौरवा जनाः । तेऽपि तिष्ठन्ति तीर्थेषु तीर्थसारस्ततोगतः ॥ ४० ॥ कामक्रोधमहालोभतृष्णाव्याकुलचेतसः । तपसि तेऽपि तिष्ठन्ति तपःसारस्ततो गतः ॥ ४१ ॥ मनोऽजयात्तथा लोभात् दम्भात् पाखण्डसंश्रयात् । शास्त्राभ्यासपरित्यागात् ध्यान-योगफलं गतम् ॥ ४२ ॥ पंडितास्तु कलत्रेण रमन्ते महिषा इव । पुत्र-स्योत्पादने दक्षा अदक्षा मुक्तिसाधने । न हि वैष्णवता कुत्र सम्प्रदाय पुरःसरा ॥ ४३ ॥ कलौ न राजन् जगतां परं गुरुं त्रैलोक्यनाथानतपाद-पंकजम् । प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥ ४४ ॥ यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान् । विमुक्तकर्मार्गल उत्तमां गतिम् प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४५ ॥ पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसंभवान् । सर्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥ ४६ ॥ श्रुतः संकीर्त्तितो ध्यातः

भरणे व्यापृतात्माऽजितेन्द्रियः। म्रियते रुदतां स्वानाम् सुदारुण रुजा-
स्तधीः ॥१२॥ यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ। दृष्ट्वा सुभीतभीतो-
ऽसौ शकृन्मूत्रं विमुञ्चति ॥ १३ ॥ यातनादेह आवृत्य पाशैर्बद्ध्वा गले
बलात्। नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥ १४ ॥ तयोर्नि-
र्भिन्नहृदयस्तर्जनैर्जात वेपथुः। पथिश्वभिर्भक्ष्यमाण आर्तोऽघं स्वमनु-
स्मरन् ॥ १५ ॥ क्षुत्तृट्परीतोऽर्कदवानलानिलैः सन्तप्यमानः पथितप्त-
वालुके। कृच्छ्रेण पृष्ठे कशया च ताडितः चलत्यशक्तोऽपि निराश्र-
मोदके ॥ १६ ॥ योजनानां सहस्राणि नवतिं नव चाध्वनः। त्रिभिर्मुहू-
र्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः ॥ १७ ॥ आदीपनं स्वगात्राणां वेष्टयि-
त्वोल्मुकादिभिः। आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपि वा ॥ १८ ॥ जीव-
तश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने। सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम्
॥१९॥ कृन्तनं चावयवशो गजादिभ्यो भिदापनम्। पातनं गिरिशृङ्गेभ्यो
रोधनं चाम्बुगर्तयोः ॥२०॥ यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः।

भुंक्ते नरो वा नारी वा मिथः संगेन निर्मिता:॥२१॥ स्वपुरुषमभिवीक्ष्य पाश-हस्तं वदति यमः किल तस्य कर्णमूले। परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणामवैष्णवानाम् ॥ २२ ॥ कमलनयन वासुदेव विष्णो धरणिधराच्युत शंखचक्रपाणे। भवशरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥ २३ ॥ नरके पच्यमानस्तु यमेन परिभाषितः। किन्त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥ २४ ॥ नारायणेति शब्दोऽस्ति वाक् चापि वशवर्त्तिनी। तथापि नरके मूढाः पतन्तीति किमद्भुतम् ॥ २५ ॥ पत्रेषु पुष्पेषु फलेषु तोयेष्वकष्टलभ्येषु सदैव सत्सु। भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै कथं न क्रियते प्रयत्नः ॥ २६ ॥ न चेदिहैवापचितिं यथांहसः कृतस्य कुर्यान्मन उक्तिपाणिभिः। ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्तिता मे भवतस्तिग्मयातनाः ॥ २७ ॥ तस्मात्पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद्यतात्मना। दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित् ॥ २८ ॥ दृष्टश्रुताभ्यां यत्पापं जानन्नप्यात्मनोऽहितम्।

करोति भूयो विवशः प्रायश्चित्तमथो कथम् ॥ २९ ॥ क्वचिन्निवर्तते भद्रात्क्वचिच्चरति तत् पुनः । प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवत् ॥३०॥ कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते । अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम् ॥ ३१ ॥ नाऽश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि । एवं नियमकृद्राजन् शनैः क्षेमाय कल्पते ॥ ३२ ॥ तपसा ब्रह्मचर्येण शमेन च दमेन च । त्यागेन सत्यशौचाभ्यां यमेन नियमेन च ॥ ३३ ॥ देहवाग्बुद्धिजं धीराः धर्मज्ञाः श्रद्धयान्विताः । क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः ॥ ३४ ॥ केचित् केवलया भक्त्या वासुदेवपरायणाः । अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥ ३५ ॥ न तथा ह्यघवान् राजन्पूयेत तपआदिभिः । यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ ३६ ॥ सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः । सुशीलाः साधवो यत्र नारायणपरायणाः ॥ ३७ ॥ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् । न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः ॥ ३८ ॥ सकृन्मनः कृष्णपदारविन्दयोर्निवे-

शितं तद्गुणरागि यैरिह । न ते यमं पाशभृतश्च तद्भटान्स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः ॥ ३९ ॥ नैकान्तिकं तद्धि कृतेऽपि निष्कृतं मनः पुनर्धावति चेदसत्पथे । तत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः ॥ ४० ॥ स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे । अहैतुक्यप्रतिहता ययाऽऽत्मा संप्रसीदति ॥ ४१ ॥ वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ ४२ ॥ धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥४३॥ धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते । नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ४४ ॥ कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता । जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥ ४५ ॥ वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ४६ ॥ तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया । पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥ ४७ ॥ अतः पुम्भिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः । स्वनुष्ठि-

तस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥ ४८ ॥ तस्मादेकेन मनसा भगवान्सात्वतां पतिः । श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ ४९ ॥ यदनुध्यासिना युक्ताः कर्मग्रन्थिनिबन्धनम् । छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥ ५० ॥ शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः । स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ ५१ ॥ शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्त्तनः । हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ ५२ ॥ नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया । भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ ५३ ॥ तदा रजस्तमोभावाः कामलोभादयश्च ये । चेत एतैरनाविद्धं स्थितं सत्वे प्रसीदति ॥ ५४ ॥ एवं प्रसन्नमनसो भगवद्भक्तियोगतः । भगवत्तत्त्वविज्ञानं मुक्तसंगस्य जायते ॥ ५५ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥ ५६ ॥ नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात् । न यत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥५७॥

वासुदेवपरा वेदा वासुदेवपरा मखाः । वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ ५८ ॥ वासुदेवपरं ज्ञानं वासुदेवपरं तपः । वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ ५९ ॥ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः । भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषाम् ॥ ६० ॥

इति श्रीभक्तिकौस्तुभे निरयनिवारणं नाम द्वात्रिंश आह्निकः ।

देहोऽयं मानुषोऽनित्यः पुरुषस्याखिलार्थदः । तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ १ ॥ नेह यत्कर्मधर्माय न विरागाय कल्पते । न तीर्थपादसेवायै जीवन्नपि मृतो हि सः ॥ २ ॥ योऽध्रुवेणात्मना नित्यं न धर्मं न यशः पुमान् । ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ३ ॥ योऽनित्येन शरीरेण सतां गेयं यशोध्रुवम् । नाऽचिनोति स्वयं कल्पः स वाच्यः शोच्य एव च ॥ ४ ॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ ५ ॥ वेदप्रणिहितो धर्मो

ह्यधर्मस्तद्विपर्ययः। वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम ॥ ६ ॥ विधर्मः परधर्मश्च आभास उपमा छलः। अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥ ७ ॥ धर्मबाधो विधर्मः स्यात् परधर्मोऽन्यचोदितः। उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ॥ ८ ॥ धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु। प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ ९ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति। गुणधर्मविहीनो यो निष्फलं तस्य जीवनम् ॥ १० ॥ आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पशुभिर्नराणाम्। धर्मोहि तेषामधिको विशेषः धर्मेण हीनाः पशुभिः समानाः ॥११॥ एकः प्रसूयते जन्तुरेक एव प्रलीयते। एको नु भुङ्क्ते सुकृतम् एक एव च दुष्कृतम् ॥ १२ ॥ यत् प्रातः संस्कृतं चान्नं सायं तच्च विनश्यति। तदीयरससंपुष्टे काये का नाम नित्यता ॥ १३ ॥ अस्थिस्तम्भं स्नायुबद्धं मांसशोणितलेपितं। चर्मावनद्धं दुर्गन्धं पात्रं मूत्रपुरीषयोः ॥ १४ ॥ जराशोकविपाकार्त्तं रोगमन्दिरमातुरम्। दुष्पूरं दुर्धरं दुष्टं सदोषं क्षणभंगुरम्

॥ १५ ॥ कृमि विड् भस्मसंज्ञान्तं शरीरमिति वर्णितम् । अस्थिरेण स्थिरं कर्म कुतो न साधयेत् सदा ॥ १६ ॥ कायं मलीमसः कायो दौर्गन्ध्याद्या-त्मकोऽशुचिः । क गुणाः सौमनस्याद्या ह्यध्यासोऽविद्यया कृतः ॥ १७ ॥ ननु स्वार्थपरो लोको न वेद परसंकटम् । यदि वेद न याचेत नेति नाह यदीश्वरः ॥ १८ ॥ जिजीविषूणां जीवानां आत्मा प्रेष्ठ इहेप्सितः । क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥ १९ ॥ सर्वेषामपि भूतानां नूनं स्वात्मैव वल्लभः । तस्यैव वल्लभत्वेन पुत्रवित्तादयः प्रियाः ॥ २० ॥ यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् । तत् पश्चान् ममतालम्बिसुतवित्त-गृहादयः ॥ २१ ॥ देहोऽपि ममताभाक्चेत् तर्हासौ नात्मवत् प्रियः । जीर्यत्यपि यतो देहे जीविताशा बलीयसी ॥ २२ ॥ पुष्णाति यानधर्मेण स्वबुद्ध्या च अपण्डितः हि्यवन्ति तेऽकृतार्थं तम् प्राणारायः सुतादयः ॥ २३ ॥ न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः । मित्राणि रिपवश्चैव निश्चीयन्ते सदार्थतः ॥ २४ ॥ कारणात् प्रियतामेति द्वेष्यो भवति कार-

णात् । अर्थार्थी जीवलोकोऽयं न कश्चित् कस्यचिद्रिपुः ॥ २५ ॥ मानुषा मनुजव्याघ्र साभिलाषाः सुतान् प्रति । लोभात् प्रत्युपकाराय नन्वेतान् किं न पश्यसि ॥ २६ ॥ वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः । निर्द्रव्यं पुरुषं त्यजन्ति वनिता भ्रष्टं नृपं मन्त्रिणः । पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः सर्वः कार्य्यवशात् सदाभिरमते कस्यापि को वल्लभः ॥ २७ ॥ यथा धानासु वै धाना भवन्ति न भवन्ति च । एवं भूतेषु भूतानि चोदितानीश मायया ॥ २८ ॥ भूतैर्भूतानि भूतेशः सृजत्यवति हन्त्यजः । आत्मसृष्टैरस्वतन्त्रैः अनपेक्षोऽपि बालवत् ॥ २९ ॥ देहेन देहिनो राजन् देहाद्देहोऽभिजायते । बीजादेव यथाबीजं देह्यर्थ इव शाश्वतः ॥ ३० ॥ देहज्ञोऽजितषड्वर्गो नेच्छन् कर्माणि कार्य्यते । कोशकार इवात्मानं कर्मणाऽऽच्छाद्य मुह्यति ॥ ३१ ॥ न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्य्यते ह्यवशः कर्म गुणैः स्वाभाविकैर्बलात् ॥ ३२ ॥ लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत । यथायोनि यथाबीजं स्व-

भावेन वलीयसा ॥ ३३ ॥ स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ।
शिशून् वन्धुभिरुत्सृष्टान् अकल्पैः पोपरक्षये ॥ ३४ ॥ सर्वार्थसम्भवो देहो
जनितः पोषितो यतः । न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ३५ ॥
यस्तयोरात्मजः कल्प आत्मना च धनेन च । वृत्तिं न दद्यात् तं प्रेत्य स्वमांसं
खादयन्ति हि ॥ ३६ ॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ।
गुरुं विप्रं प्रपन्नं च कल्पोऽविभ्रत् श्वसन् मृतः ॥ ३७ ॥ कोऽनुलोके
मनुष्येन्द्र पितुरात्मकृतः पुमान् । प्रतिकर्त्तुं क्षमो यस्य प्रसादाद्विन्दते परम्
॥ ३८ ॥ उत्तमश्चिन्तितं कुर्य्यात् प्रोक्तकारी तु मध्यमः । अधमोऽश्रद्धयोऽधमः
कुर्यात् अकर्त्तोच्चरितं पितुः ॥ ३९ ॥ आचार्य्यो ब्रह्मणो मूर्त्तिः पिता
मूर्त्तिः प्रजापतेः । भ्राता मरुत्पतेर्मूर्त्तिर्माता साक्षात् क्षितेस्तनुः ॥ ४० ॥
दयाया भगिनी मूर्त्तिर्धर्मस्य चातिथिः स्वयम् । अग्नेरभ्यागतो मूर्त्तिः सर्व-
भूतानि चात्मनः ॥ ४१ ॥ पुत्रेण जयते लोकानिति सत्यवती श्रुतिः ।
ब्रह्मदण्डहतः पापो वेनो यत् अतरत्तमः ॥ ४२ ॥ एकेनापि सुवृक्षेण पुष्पि-

तेन सुगन्धिना । वास्यते तद् वनं सर्वं सुपुत्रेण कुलं तथा ॥ ४३ ॥ पतिरेव गतिः स्त्रीणां पतिः प्राणाश्च सम्पदः । धर्मार्थकाममोक्षाणां हेतुः सेतुर्भवार्णवे ॥ ४४ ॥ पतिरेव हि नारीणां दैवतं परमं महत् । प्रकामं भर्त्तरि प्रीते कः कामो नु दुरागमः ॥ ४५ ॥ पतिर्नारायणः स्त्रीणां पतिधर्मः सनातनः । सर्वं कर्म वृथा तासां स्वामिनां विमुखाश्च याः ॥ ४६ ॥ पतिमेव सदा ध्यायेत् पतिविष्णोस्तु पूजनं कार्य्यं पतिबुद्ध्या न चान्यथा । पति रूपधरो हरिः ॥ ४७ । स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनम् । स एक एवेतरथा मिथो भयं नैवात्मलाभादधिमन्यते परम् ॥ ४८ ॥

इति श्रीभक्तिकौस्तुभे देहत्तत्त्वं नाम त्रयस्त्रिंश आह्निकः ।

इन्द्रियाणि वशीकृत्य गृहे चैव वसेन्नरः । तर्हि तद्धि कुरुक्षेत्रं नैमिषं पुष्करं तथा ॥ १ ॥ यथा नदीनदाः सर्वे सागरे यांति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यांति संस्थितिम् ॥ २ ॥ स्वकर्मधर्मा-

जितजीवितानां शास्त्रेषु दारेषु सदा रतानाम्। जितेन्द्रियाणामतिथि-प्रियाणां गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ ३ ॥ यः षट्सपत्नान् विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम्। अत्येति दुर्गाश्रित ऊर्जितारीन् क्षीणेषु कामं विचरेद् विपश्चित् ॥ ४ ॥ भयं प्रमत्तस्य वनेष्वपि स्याद् यतः स आस्ते सहषट्सपत्नः। जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किं नु करोत्यवद्यम् ॥ ५ ॥ वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः। आसक्तचित्तस्य वनं निरोधनम् निवृत्तरागस्य गृहं तपोवनम् ॥ ६ ॥ सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान्। व्यसनार्णवमत्येति जलयानैर्यथार्णवम् ॥ ७ ॥ गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि। तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता ॥ ८ ॥ आश्रमापसदा ह्येते तथाश्रमविडम्बकाः। देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ९ ॥ यः प्रव्रज्य गृहादेव त्रिवर्गावपनात् पुरः। पुनः सेवेत तान् भिक्षुः स वै वान्ताश्यपत्रपः ॥ १० ॥ भावद्वैतं क्रियाद्वैतं द्रव्याद्वैतं

यथात्मनः। वर्त्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥ ११ ॥ कार्य्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत् । अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥ १२ ॥ यद् ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम् । मनोवाक्तनुभिश्चैव क्रियाद्वैतं तदुच्यते ॥ १३ ॥ आत्मजायासुतादीनाम् तथान्येषां च देहिनाम् । यत् स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ १४ ॥ मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः । आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत् ॥ १५ ॥ एक वृक्षे यथा रात्रौ नानापक्षिसमागमः । प्रातर्दशदिशो यान्ति का तत्र परिवेदना ॥ १६ ॥ वायुर्यथा घनानीकं तृणं तूलं रजांसि च । संयोज्याक्षिप्यते भूयस्तथा भूतानि भूतकृत् ॥ १७ ॥ आपदर्थे धनं रक्षेत् दारान् रक्षेत् धनैरपि । आत्मानं सततं रक्षेत् दारैरपि धनैरपि ॥१८॥ मनोवाक्कायशुद्धानां सदा तीर्थं पदे पदे । अशुद्धचित्तवृत्तीनां गङ्गापि कीकटाधिका ॥ १९ ॥ जलं पिबन्ति गाङ्गं ये त्रिकालं स्नान्ति तत्र च । एकोऽपि न विशुद्धात्मा मनःशुद्धिं विना क्वचित् ॥ २० ॥ तीर्थेष्वाचरितं

पापमानन्त्याय प्रकल्पते। भावदुष्टो जनस्तीर्थे कोटिस्नातो न शुध्यति ॥ २१ ॥ या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते। तां दुःखनिवहां तृष्णां शर्मकामो द्रुतं त्यजेत् ॥ २२ ॥ मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्। बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २३ ॥ उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीर्यतामियात्। न कल्पते पुनः सूत्यै उप्तं बीजं च नश्यति ॥ २४ ॥ एवं कामाशयं चित्तं कामानामतिसेवया। विरज्येत यथा राजन्नाग्निवत् कामबिन्दुभिः ॥ २५ ॥ न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ २६ ॥ असंकल्पाज्जयेत् कामं क्रोधं कामविवर्जनात्। अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥ २७ ॥ आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया। योगान्तरायान् मौनेन हिंसां कायाद्यनीहया ॥ २८ ॥ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च। एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ॥ २९ ॥ यस्य साक्षाद् भगवति ज्ञानदीपप्रदे गुरौ। मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जर-

शौचवत् ॥ ३० ॥ सुखानुध्याननिरता जीवा मायाविमोहिताः । यथार्थं सुखहेतुं तं न ध्यायन्ति हृदीश्वरम् ॥ ३१ ॥ हिताहितं न जानन्ति नैहिकं पारलौकिकम् । तृष्णानीहारनष्टाज्ञा न जानन्ति वयोगतम् ॥ ३२ ॥ यः कुर्यात् परया भक्त्या महालक्ष्म्यास्तु पूजनम् । स नरो लभते सत्यं पूजाफलमनुत्तमम् ॥ ३३ ॥ मनो निवेश्य श्रीकृष्णे वैष्णवो भवति ध्रुवम् । भक्तिमेव सदा कुर्यात् सर्वधर्मान् विहाय च । भक्तानां निकटे सर्वे सन्तिष्ठन्ते महर्षयः ॥ ३४ ॥ नूनं दैवेन विहता ये चाच्युतकथा शुभाम् । हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजाः ॥ ३५ ॥ कामिनो विष्णुविमुखास्ते यान्ति नरके ध्रुवम् । श्वलाङ्गूलं समाश्रित्य को हि तीर्णोऽम्बुधेजलम् ॥ ३६ ॥ कोटिविप्राशनेनैव कोटितीर्थैन किं फलम् । ब्रह्मज्ञानसमो धर्मो नान्यधर्मः कदाचन ॥ ३७ ॥ एकान्तभक्तिः श्रीनाथे ब्रह्मविद्या प्रकीर्त्तिता । विवेकी विचरेदेको ज्ञाता ब्रह्मशरीरधृक् ॥ ३८ ॥ अदृष्टादश्रुताद्भावात् न भाव उपजायते । असंप्रयुञ्जतः प्राणान् शाम्यति स्तिमितं

मनः ॥ ३६ ॥ त्यज दुर्जनसंसर्गं भज साधुसमागमम्। कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ ४० ॥ कदापिनोपसज्जेत स्त्रीषु स्त्रैणेषु चार्थवित्। विषयेन्द्रियसंयोगान्मनः क्षुभ्यति नान्यथा ॥ ४१ ॥ न तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसंगतः। योषित्संगात् यथा पुंसो यथा तत्संगिसंगतः ॥ ४२ ॥ यत्सङ्गात् संक्षयं याति पुमानग्निगतो यथा। रचिता देवमायेयं विमोहाय नृणामिह ॥ ४३ ॥ किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा। किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनोहृतम् ॥४४॥ सुधामयं वचो यासां कामिनां रसवर्द्धनम्। हृदयं क्षुरधाराभं प्रियः को नाम योषिताम् ॥ ४५ ॥ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम्। हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥४६ ॥ नहि कश्चित् प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम्। पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ॥४७॥क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा। स्त्रियो ह्यकरुणाः क्रूराः दुर्मर्षाः प्रियसाहसाः ॥ पित्रोः किं स्वं नु भार्य्यायाः स्वामिनोऽग्नेःश्वगृध्रयोः।

किमात्मनः किं सुहृदामिति यो नावसीयते ॥ ४९ ॥ तस्मिन् कलेवरेऽमेध्ये तुच्छनिष्ठे विपज्जते । अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रियाः ॥५०॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ विण्मूत्रपूये रमतां कृमीनां कियदन्तरम् ॥५१॥यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ ५२ ॥ शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलं। शोचन्ति नैव यत्रैतास्तत्कुलं वर्द्धते सदा ॥ ५३ ॥ सा भार्या या गृहे दक्षा सा भार्या या प्रियंवदा । सा भार्या या प्रियप्राणा सा भार्या या पतिव्रता ॥ ५४ ॥ सर्वेषां वान्धवानाञ्च प्रियः पुत्रश्च योषिताम् । स एव स्वामिनश्चांशः शतपुत्रात् परः पति ॥ ५५ ॥

इति श्रीभक्तिकौस्तुभे गृहस्थाश्रम-माहात्म्यं नाम चतुस्त्रिंश आह्निकं।

कालः पचति भूतानि कालः संहरते प्रजाः। कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः ॥ १ ॥ येन चैवाऽभिपन्नोऽयं प्राणैः प्रियतमैरपि ।

मर्त्यः सद्यो वियुज्येत किमुतान्यैर्धनादिभिः ॥ २ ॥ नाकाले म्रियते जन्तुर्विद्धःशरशतैरपि । कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ३ ॥ मा कंचन शुचो राजन् यदीश्वरवशं जगत् । स संयुनक्ति भूतानि स एव वियुनक्ति च । लोकाः सपाला स्तस्येमे वहन्ति बलिमीशितुः ॥ ४ ॥ यथा गावो नसि प्रोता बद्धास्तन्त्यां प्रचालिताः । वाक्तन्त्यां नामभिः प्रोतं विश्वं तस्य वशे स्थितम् ॥ ५ ॥ विलासोपस्कराणां वै संयोगविगमौ यथा । स्वेच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ६ ॥ संग्रामे वर्त्तमानानां कालचोदितकर्मणाम् । जयः पराजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥ सूरयो हि विपश्यन्ति काल्यमानमिदं जगत् । न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः ॥ ८ ॥ सर्वं कालकृतं मन्ये भवतां च यदप्रियम् । सपालो यद्वशे लोको वायोरिव घनावलिः ॥ ९ ॥ कालेन दैवयुक्तेन विद्रावितमिदं जगत् । प्रतिक्रिया न यस्येह कुतश्चित् कर्हिचित् कदा ॥ १० ॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः । वृद्धानामपि

यद्बुद्धि-र्बालवाक्यैर्विभिद्यते ॥ ११ ॥ पतनात् परमुत्थानम् उत्थानात् पतनं तथा । इत्थं संसारचक्रस्य भ्रमणस्य विधिर्भवेत् ॥ १२ ॥ नावसीदेदथो लोके नाधीरो वा भवेदतः । आत्मनः पतनं दृष्ट्वा अन्यस्याचनतिं तथा ॥ १३ ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं । सुखदुःखे मनुष्याणां भ्राम्यतो रथचक्रवत् ॥ १४ ॥ सुखदुःखे हि पुरुषः पर्यायेणोपसेवते । न ह्यनन्तं सुखं कश्चित् प्राप्नोतीह कदाचन ॥ १५ ॥ सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा । अहं करोमीति वृथाऽभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥ १६ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे । विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ॥ रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः । सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ १७ ॥ कर्मणैव समुत्पत्तिः सर्वेषां सर्वदा भवेत् । समुद्भवश्च जन्तूनां विना कर्म न विद्यते ॥ १८ ॥ कर्मणा रहितो योगो न देहस्य कदाचन । शुभाशुभैस्तथा मिश्रैः रचितं कर्मभिर्ज-

गत् ॥ १६ ॥ विप्रा गावश्च वेदाश्च तपः सत्य दम. [illegible] तितिक्षा च क्रतवश्च हरेस्तनूः ॥ २० ॥ दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म विदुर्बुधाः ॥ २१ ॥ सर्वो दण्डजितोलोको दुर्लभो हि शुचिर्नरः । दण्डस्य हि भयात् सर्वं जगत् भोगाय कल्पते ॥ २२ ॥ नूनं नाना मदोन्नद्धाः शान्तिं नेच्छन्त्यसाधवः । तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा ॥ २३ ॥ लालने बहवो दोषा-स्ताड़ने बहवो गुणाः । क्षेमकामी ततो बालान् ताड़येन्नतु लाल-येत् ॥ २४ ॥ शरणागतसन्त्राणं भूतानामप्यहिंसनम् । बहिर्वेदि च यद्दानं दण्डमित्यभिधीयते ॥ २५ ॥ अदण्ड्यान् दण्डयन् राजा दण्ड्यां-श्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥ २६ ॥ वाग्दण्डं प्रथमं कुर्य्यात् धिग्दण्डं तदनन्तरम् । तृतीयं धनदण्डं च वध-दण्डमतः परम् ॥ २७ ॥ नूनं ह्यदृष्टनिष्ठोऽयम् अदृष्टपरमो जनः । अदृष्ट-मात्मनस्तत्त्वं यो वेद न स मुह्यति ॥ २८ ॥ मनोरथान् करोत्युच्चैर्जनो

फलसाधनम् ॥ २९ ॥ दैवे
दैवहतानपि । युज्यते हर्षशोकाभ्यां दैवं हि फलसाधनम् ॥ २९ ॥ दैवे पुरुषकारे च किं ज्यायस्तद् ब्रवीहि मे । अत्र मे संशयो देव छेत्तुमर्हस्यशेषतः ॥ ३० ॥ स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् । तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥ ३१ ॥ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । विना पुरुषकारेण तथा दैवं न सिध्यति ॥३२॥ बीजमुप्तं विना क्षेत्रम् यथा भवति निष्फलं । विना पुरुषकारेण तथा दैवं न सिध्यति ॥३३॥ पौरुषेणाप्यते सर्वम् मार्गितव्यं फलं नरैः । दैवमेव विजानन्ति नराः पौरुषवर्जिताः ॥ ३४ ॥ प्रतिकूलं सदा दैवं पौरुषेण विहन्यते । मंगलाचारयुक्तेन नित्यमुत्थानशीलिना ॥ ३५ ॥ दैवं पुरुषकारश्च कालश्च मनुजोत्तम । त्रयमेतत् मनुष्यस्य पिण्डितं स्यात् फलावहम् ॥३६॥ नालसाः प्राप्नुवन्त्यर्थान् न च दैवपरायणाः । तस्मात् सर्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥३७॥ निरुत्सवं निरानन्दं निर्वीर्यमरिनन्दनं । मास्म सीमन्तिनी काचित् जनयेत् पुत्रमीदृशं ॥ ३८ ॥ उद्योगेन कृते कार्य्ये सिद्धिर्यत्र न विद्यते ।

दैवं तत्र प्रमाणं स्यात् कर्त्तव्यं पौरुषं ततः ॥३९॥ त्यक्त्वालसान् दैवपरान् मनुष्यान् उत्थानयुक्तान् पुरुषान् हि लक्ष्मीः। अन्विष्य यत्नाद् वृणुते वशीकृता तस्मात् सदोत्थानरता हि भाव्यम् ॥ ४० ॥ बुद्धिरुद्योगधैर्य्ये च शक्तिः साहसविक्रमौ। षड्विधो यस्य उत्साहः तस्य देवोऽपि शङ्कते ॥४१॥

इति श्रीभक्तिकौस्तुभे दैवस्वरूपं नाम पंचत्रिंश आह्निकः।

कार्य्यं वै कारणाद्भिन्नं उत्पन्नं न कदाचन। क्रिया स्वल्पापि ह्येतस्मात् नाहंकारं विना क्वचित् ॥ १ ॥ निर्व्यलीके स्थिरे धर्मे कस्यापि न मतिः स्थिरा। असत्यं श्रूयते सम्यक् कार्य्यानुरोधनात् नरः ॥ २ ॥ अहंकारावृतं विश्वं सम्बद्धं अनृतेन हि। दुःसाध्यं देहिना सत्यं अतः सर्वात्मना किल ॥ ३ ॥ नैकवाक्यं पुराणेषु वेदेषूपनिषत्सु च। शास्त्रेषु धर्मशास्त्रेषु सगुणै रचितेष्विह ॥ ४ ॥ मूलं धर्मविनाशस्य प्रथमं स्यादहंकृतिः। मूलं संसारवृक्षस्य सा एव कथिता बुधैः ॥ ५ ॥ मोहमूलमहंकारः संसारस्तत् समुद्भवः। अहंकारविहीनानां न मोक्षो न च संसृतिः ॥ ६ ॥ न नारी न

धनं गेहं न पुत्रो पितरौ न हि। न भ्राता भगिनी नैव अहंकारस्तु वन्धकृत् ॥ ७ ॥ अहं कर्त्ता मया कार्यं कृतं चेदं करिष्यते। इति संचिन्तनादेव स्वयं वध्नाति देहभृत् ॥ ८ ॥ अधर्मार्जितद्रव्येण यत् करोति शुभं नरः। विपरीतं भवेत्तत्तु फलकाले न संशयः ॥ ९ ॥ मनोऽतिनिर्मलं यस्य स सम्यक् फलभाग् भवेत्। रागलोभात् कृतं कर्म स्यादेव शुद्धिवर्जितम् ॥ १० ॥ अहंकारोद्भवं सर्वं ब्रह्माण्डं सचराचरम्। रागद्वेषविहीनं च कथं भवितुमर्हति ॥ ११ ॥ अहंकाराद् भवेन्मोहः ततः कामादयो ध्रुवं। दम्भोद्वेषस्तथेर्ष्या च असूयाशा ह्यधर्म्मधीः ॥ १२ ॥ स्वार्थासक्तः पुमान्नित्यं नैव वेत्ति शुभाशुभम्। तदर्थं छलमादत्ते छलात् पापे प्रवर्त्तते ॥ १३ ॥ ब्रह्मा विष्णुस्तथा रुद्रः अहंकारयुता हि ते। ततो रागवशात्तेऽपि भ्रमन्ति परिमोहिताः ॥ १४ ॥ निस्पृहः कोऽपि संसारे न भूतो न भविष्यति। सर्वं स्वार्थपरं नित्यं जगत् स्थावरजंगमम्। युगे सत्यात्मके चैव किमद्य कलिदूषिते ॥ १५ ॥ सतां सत्ययुगं साक्षात् सर्वदैवासतां कलिः। मध्यमो

मध्यमानान्तु एवं युगविधिः स्मृतः ॥ १६ ॥ कदाचित् कचनो मर्त्यः सत्य-
धर्मपरायणः । सत्यादन्यतरं नैव मूलं धर्मस्य विद्यते ॥ १७ ॥ रागी विष्णुः
शिवो रागी ब्रह्मापि रागसंयुतः । रागवान् किमकृत्यं वा न करोति जुगु-
प्सितम् ॥ १८ ॥ सदाद्रोहपरा देवास्तपो विघ्नकरास्तथा । छलान्विता
द्वेषपराः परस्परविरोधिनः ॥ १९ ॥ ब्रह्माविष्णुस्तथा रुद्रश्चान्येपि सुर-
सत्तमाः । सर्वे छलविधौ दक्षा मनुष्याणां च का कथा ॥ २० ॥ देवानां
कार्य्यसिद्ध्यर्थं सर्वदैव रमापतिः । दैत्यान् वंचयते सर्वान् अंहोभयविव-
र्जितः ॥ २१ ॥ छलनार्थं बलेर्यज्ञे वामनत्वं विगर्हितम् । सम्प्राप्तं हरिणा
भूयो द्वारपालत्वमेव च । २२ ॥ रामावतारयोगेन देवा वानरतां गताः ।
जाता कृष्णसहायार्थं ते पुनर्गोपयादवाः ॥ २३ ॥ वशिष्ठो वामदेवश्च
विश्वामित्रो बृहस्पतिः । एते पापरताः सर्वे धर्मस्य का गतिर्भवेत् ॥ २४ ॥
कश्यपोऽपि दुराचारः यज्ञार्थं धेनुमाहरत् । इन्द्रोऽग्निश्चन्द्रमावेधाः परदा-
राभिलम्पटाः ॥ २५ ॥ तथापि धार्मिकान् देवान् प्रवदन्ति मनीषिणः ।

जयन्ति चाटुवादा वै धर्मवादाः क्षयं गताः ॥ २६ ॥ परोपदेशे विस्पष्टं शिष्टाः सर्वे भवन्ति हि । विप्लुतिस्त्वविशेषेण स्वकार्य्ये समुपस्थिते ॥ २७ ॥ वैखानसाश्च मुनयो निःसंगा निष्प्रतिग्रहाः । सत्यान्विता गुणातीता दृष्टान्ताय च निर्मिताः ॥ २८ ॥ ब्रह्मा विष्णुस्तथा रुद्रः सर्वे कर्मवशाः किल । कृतकर्मविपाकेन प्राप्नुवन्ति सुखासुखे ॥ २९ ॥ नारायणो हरिः साक्षात् वासुदेवो जनार्दनः । अवतारानसंख्यातान् करोति विधियन्त्रितः ॥ ३० ॥ स्वेच्छया चेद्भवेज्जन्म विष्णोरमिततेजसः । विण्मूत्रमन्दिरे वासं स्वतन्त्रः कथमिच्छति ॥ ३१ ॥ आद्यः स्थिरचराणां च वेदगर्भः सहर्षिभिः । योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्त्तकैः ॥ ३२ ॥ भेददृष्ट्यभिमानेन निःसंगेनापि कर्मणा । कर्त्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभ ॥ ३३ ॥ ससंसृत्य पुनः काले कालेनेश्वरमूर्त्तिना । गुणव्यतिकरे जाते यथापूर्वं प्रजायते ॥ ३४ ॥ नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप । उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः संप्रचक्षते ॥ ३५ ॥ अज्ञानप्रभवाहंधीः स्वपरेति

भिदा यतः। मिथोऽनन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ ३६ ॥ चित्ते कर्त्तरि तत्रात्मा कर्त्तैवाहं धिया स्मृतः। यथा भ्रमरिका दृष्ट्या भ्राम्यतीव महीयते ॥ ३७ ॥ त एतदधिगच्छन्ति विष्णोर्यत् परमं पदम्। अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३८ ॥

इति श्रीभक्तिकौस्तुभे षट्त्रिंशदाह्निके अहंकारबीजः संसारो नाम प्रथमः परिच्छेदः।

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। विनिर्गताश्चतुर्वेदाः तन्मुखात्तदनन्तरम् ॥ १ ॥ पुराणमेकमेवासीत् तदा कल्पान्तरेऽनघ। त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ २ ॥ कलिना ग्रहणं दृष्ट्वा द्वापरे द्वापरे सदा। चतुर्लक्षप्रमाणेन व्यासरूपधरो विभुः। तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रकाशते ॥ ३ ॥ अष्टादशपुराणेषु दशभिर्गीयते शिवः। चतुर्भिर्भगवान् ब्रह्मा द्वाभ्यां देवी तथा हरिः ॥ ४ ॥ शैवभविष्यलैंगानि वाराहं स्कान्दमेव च। मार्कण्डेयं तथा मात्स्यं ब्रह्माण्डकौर्मवामनम्। वदन्ति च दशैतानि शिवं परमकारणम् ॥ ५ ॥ भागवतं वैष्णवं च नारदीयं स

गारुडम् । चतुर्भिर्गीयते विष्णोर्महिमा हि द्विजोत्तमाः ॥ ६ ॥ ब्राह्मं पाद्मं ब्रह्मणो द्वे अग्नेराग्नेयमेककम् । सवितुर्ब्रह्मवैवर्त्तम् एवमष्टादश स्मृतम् ॥ ७ ॥ अष्टादशपुराणानां नामधेयानि यः पठेत् । त्रिसन्ध्यं जपते नित्यं सोऽश्वमेधफलं लभेत् ॥ ८ ॥ यो विद्याच्चतुरो वेदान् सांगोपनिषदो द्विजः । असम्यक् तु पुराणानि नैव स्यात् स विचक्षणः । इतिहासपुराणं यत् पंचमो वेद उच्यते ॥ ९ ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं निहनिष्यति ॥ १० ॥ यस्मात् पुरा ह्यनक्तीदं पुराणं च ततः स्मृतम् । निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ११ ॥

इति श्रीभक्तिकौस्तुभे षट्त्रिंदशाह्निके पुराणमहिमा नाम द्वितीयः परिच्छेदः ।

अद्य मे सफलं जन्म प्रतीतोऽसि मम प्रभो । ब्रह्मादिभिरलभ्यस्त्वं प्रकृतेः पारगो मतः ॥ १ ॥ त्वयि जन्मादिषड्भावा न सन्त्यज्ञानसम्भवाः । निर्विकारोऽसि पूर्णस्त्वं गमनादिविवर्जितः ॥ २ ॥ यथा जले फेनजालंधूमो वह्नौ तथा त्वयि । त्वदाधारा त्वद्विषया माया कार्यं सृजत्यहो ॥ ३ ॥

यावन्मायावृता लोकास्तावत्त्वां न विजानते। अविचारितसिद्धैषाऽविद्या विद्याविरोधिनी ॥ ४ ॥ अविद्याकृतदेहादिसंघाते प्रतिबिम्बिता। चिच्छक्तिर्जीवलोकेऽस्मिन् जीव इत्यभिधीयते ॥ ५ ॥ यावद्देहमनःप्राणबुद्ध्यादिष्वभिमानवान्। तावत्कर्तृत्वभोक्तृत्वसुखदुःखादिभाग्भवेत् ॥ ६ ॥ आत्मनः संसृतिर्नास्ति बुद्धेर्ज्ञानं न जात्विति। अविवेकाद्द्वयं युक्त्वा संसारीति प्रवर्तते ॥ ७ ॥ जडस्य चित्समायोगाच्चित्त्वं भूयाच्चितेस्तथा। जडसंगाज्जडत्वं हि जलाग्न्योर्मेलनं यथा ॥ ८ ॥ यावत्त्वत्पादभक्तानां संगसौख्यं न विन्दति। तावत्संसारदुःखौघान्न निवर्तेन्नरः सदा ॥ ९ ॥ सत्संगलब्धया भक्त्या यदा त्वां समुपासते। तदा माया शनैर्याति तानवं प्रतिपद्यते ॥ १० ॥ ततस्त्वज्ज्ञानसंपन्नः सद्गुरुस्तेन लभ्यते। वाक्यज्ञानं गुरोर्लब्ध्वा त्वत्प्रसादाद्विमुच्यते ॥११॥ तस्मात्त्वद्भक्तिहीनानां कल्पकोटिशतैरपि। न मुक्तिशंका विज्ञानशंका नैव सुखं तथा ॥ १२ ॥ अतस्त्वत्पादयुगले भक्तिर्मे जन्मजन्मनि। स्यात्त्वद्भक्तिमतां संगोऽविद्या याभ्यां विनश्यति

॥ १३ ॥ लोके त्वद्भक्तिनिरतास्त्वद्धर्मामृतवर्षिणः । पुनन्ति लोकमखिलं किं पुनः स्वकुलोद्भवान् ॥१४॥ नमोऽस्तु जगतां नाथ नमस्ते भक्तिभावन । नमः कारुणिकानन्त रामचन्द्र नमोऽस्तु ते ॥ १५ ॥ यदिमेऽनुग्रहो राम तवास्ति मधुसूदन । त्वद्भक्तसंगस्त्वत्पादे दृढा भक्तिः सदाऽस्तु मे ॥ १६ ॥ स्तोत्रमेतत्पठेद्यस्तु भक्तिहीनोऽपि सर्वदा । त्वद्भक्तिस्तस्य विज्ञानं भूयादंते स्मृतिस्तव ॥ १७ ॥ तथेति राघवेणोक्तः परिक्रम्य प्रणम्य तम् । पूजितस्तदनुज्ञातो महेंद्राचलमन्वगात् ॥ १८ ॥

इति श्रीभक्तिकौस्तुभे सप्तत्रिंश आह्निके परशुरामस्तोत्रं नाम प्रथमः परिच्छेदः ।

देव त्वं जगतां नाथः परमात्मा न संशयः । मत्पूर्वकृतपुण्यौघैः संगतोऽद्य मया सह ॥ १ ॥ त्वां भजन्ति महात्मानः संसारविनिवृत्तये । त्वां प्राप्य मोक्षसचिवं प्रार्थयेऽहं कथं भवम् ॥ २ ॥ दाराः पुत्रा धनं राज्यं सर्वं त्वन्मायया कृतम् । अतोऽहं देवदेवेश नाकांक्षेऽन्यत्प्रसीद मे ॥ ३ ॥ आनन्दानुभवं त्वाद्य प्राप्तोऽहं भाग्यगौरवात् । मृदर्थं यतमानेन निधान-

मिव सत्पते ॥ ४ ॥ अनाद्यविद्यासंसिद्धं बन्धनं छिन्नमद्य नः । यज्ञदानतपः-
कर्मपूर्तेष्टादिभिरप्यसौ । न जीर्यते पुनर्दार्ढ्यं भजते संसृतिः प्रभो ।
त्वत्पाददर्शनात्सद्यो नाशमेति न संशयः ॥ ५ ॥ क्षणार्धमपि यच्चित्तं त्वयि
तिष्ठत्यचंचलम् । तस्याज्ञानमनर्थानां मूलं नश्यति तत्क्षणात् ॥ तत्तिष्ठतु
मनो राम त्वयि नान्यत्र मे सदा ॥ ६ ॥ रामरामेति यद्वाणी मधुरं गायति
क्षणम् । स ब्रह्महा सुरापो वा मुच्यते सर्वपातकैः ॥ न कांक्षे विजयं
राम न च दारसुखादिकम् । भक्तिमेव सदा कांक्षेत्वयि बन्धविमोचि-
नीम् ॥ ८ ॥ त्वन्मायाकृतसंसारस्त्वदंशोहं रघूत्तम । स्वपादभक्तिमादिश्य
त्राहि मां भवसंकटात् ॥ ९ ॥ पूर्वं मित्रार्युदासीनास्त्वन्मायावृतचेतसः ।
आसन्मेऽद्य भवत्पाददर्शनादेव राघव ॥ १० ॥ सर्वं ब्रह्मैव मे भाति क्व
मित्रं क्व च मे रिपुः । यावत्त्वन्मायया बद्धस्तावद्गुणविशेषता ॥ सा याद-
दस्ति नानात्वंतावद्भवति नान्यथा । यावन्नानात्वमज्ञानात्तावत्कालकृतं
भयम् ॥ ११ ॥ अतोऽविद्यामुपास्ते यः सोऽन्धे तमसि मज्जति । माया-

मूलमिदं सर्वं पुत्रदारादिबन्धनम् । अतोत्सारय मायां त्वं दासीं तव रघूत्तम ॥१२॥ त्वत्पादपद्मार्पितचित्तवृत्ति स्त्वन्नामसंगीतकथासुवाणी । त्वद्भक्तसेवानिरतौ करौ मे त्वदंगसंगं लभतां मदंगम् ॥ १३ ॥ त्वन्मूर्तिभक्तान् स्वगुरुं च चक्षुः पश्यत्वजस्रं स शृणोतु कर्णः । त्वज्जन्मकर्माणि च पादयुग्मं व्रजत्वजस्रं तव मन्दिराणि ॥ १४ ॥ अंगानि ते पादरजोविमिश्रतीर्थानि बिभ्रत्वहिशत्रुकेतो । शिरस्त्वदीयं भवपद्मजाद्यैर्जुष्टं पदं राम नमत्वजस्रम् ॥ १५ ॥

इति श्रीभक्तिकौस्तुभे सप्तत्रिंशआह्निके सुग्रीवस्तुतिर्नाम द्वितीयः परिच्छेदः ।

नमः स्वात्माभिरामाय निर्गुणाय गुणात्मने । निवृत्तगुणमार्गाय निष्किंचनधनाय ते ॥ १ ॥ देव ते चेष्टितं कश्चिन्न वेद नृविडम्बनम् । न तेऽस्ति कश्चिद्दयितो द्वेष्यो वा पर एव वा ॥ २ ॥ जगतामादिभूता या सा माया गृहिणी तव । लोकत्रयमहागेहे गृहस्थस्त्वमुदाहृतः ॥ ३ ॥ मनसोऽविषयो देव रूपं ते निर्गुणं परम् । कथं दृश्यं भवेद्देव दृश्याभावे भजेत्

कथम् ॥ ४ ॥ अतस्तवावतारेषु रूपाणि निपुणा भुवि । भजन्ति बुद्धिसंपन्नास्तरन्त्येव भवार्णवम् ॥ ५ ॥ कामक्रोधादयस्तत्र बहवः परिपन्थिनः । भीषयन्ति सदा चेतो मार्जारा मूषकं यथा ॥ ६ ॥ त्वन्नामस्मरतां नित्यं त्वद्रूपमपि मानसे । त्वत्पूजानिरतानां ते कथामृतपरात्मनाम् । त्वद्भक्तसंगिनां राम संसारो गोष्पदायते ॥ ७ ॥ अतस्त्वत्पादभक्तेषु तव भक्तिः श्रियोऽधिका । भक्तिमेवाभिवांछन्ति त्वद्भक्ताः सारवेदिनः ॥ ८ ॥ अतस्त्वत्पादकमले भक्तिरेव सदाऽस्तु मे । संसारामयतप्तानां भेषजं भक्तिरेव ते ॥ ९ ॥ विष्णोर्हि भक्तिः सुविशोधनं धियस्ततो भवेज्ज्ञानमतीवनिर्मलम् । विशुद्धतत्त्वानुभवो भवेत्ततः सम्यग्विदित्वा परमं पदं व्रजेत् ॥ १० ॥ तत्त्वं न जानन्ति परात्मनस्ते जनाः समस्तास्तव मायया‌तः । त्वद्भक्तसेवामलमानसानां विभाति तत्त्वं परमेकमैशम् ॥ ११ ॥ ब्रह्मादयस्ते न विदुः स्वरूपं चिदात्मतत्त्वं बहिरर्थभावाः । ततो बुधस्त्वामिदमेव रूपं भक्त्या भजन्मुक्तिमुपैत्यदुःखः ॥ १२ ॥ श्रीरामचन्द्रेऽखिललोकसारे भक्ति-

दृढा नौ र्भवति प्रसिद्धा । भक्तिः प्रसिद्धा भवमोक्षणाय नान्यत्ततः-साधनमस्ति किंचित् ॥ १३ ॥ भजतो भक्तिभावेन प्रसीदति रघूत्तमः । भक्तिर्जनित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी । भक्तिहीनेन यत्किंचित् कृतं सर्वमसत्समम् ॥१४॥ लोके त्वद्भक्तिनिरतास्त्वन्मन्त्रोपासकाश्च ये। विद्या प्रादुर्भवेत् तेषां नेतरेषां कदाचन ॥ १५ ॥ अतस्त्वद्भक्तिसम्पन्ना मुक्ता एव न संशयः । त्वद्भक्त्यामृतहीनानां मोक्षः स्वप्नेऽपि नो भवेत् ॥ १६ ॥ साधुसंगतिरेवात्र मोक्षहेतुरुदाहृता । सत्संगमो भवेद यर्हि त्वत्कथा श्रवणे रतिः। समुदेति ततो भक्तिस्त्वयिरामसनातने ॥ १७ ॥ इतःपरं त्वच्चरणारविन्दयोः स्मृतिः सदा मेऽस्तु भवोपशान्तये । त्वन्नामसंकीर्तनमेव वाणी करोतु मे कर्णपुटं त्वदीयम् ॥ १८ ॥ कथामृतं पातु करद्वयं ते पादारविन्दार्चनमेव कुर्यात् । शिरश्च ते पादयुगप्रणामं करोतु नित्यं भवदीयमेवम् ॥ १९ ॥ देहि मे हरिभक्तिं च त्वन्नामसेवने रुचिः । अतितृष्णा गुणाख्याने नित्यमस्तु ममेश्वर ॥ २० ॥ त्वद्भक्तेषु सदा संगो

भूयान्ये प्राकृतेषु न । जिह्वा मे रामरामेति भक्त्या वदतु सर्वदा ॥ २१ ॥ नमस्ते रामभद्राय वेधसे परमात्मने । त्राहि त्राहि जगन्नाथ मां माया नावृणोतु वै ॥ २२ ॥ अहं त्वद्भक्तभक्तानां तद्भक्तानां च किंकरः । अतो मामनुगृह्णीष्व मोहयस्व न मां प्रभो ॥ २३ ॥ त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः । तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ २४ ॥ अतिरतभवभावनातिदूरं भवविमुखैर्मुनिभिः सदैव दृश्यम् । भवजलधिसुतारणाङ्घ्रिपोतं शरणमहं रघुनन्दनं प्रपद्ये ॥ २५ ॥

इति श्रीभक्तिकौस्तुभे सप्तत्रिंश आह्निके अकिंचनस्तुतिर्नाम तृतीय परिच्छेद. ।

कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः । तत्प्रभा व्यापिनी साक्षाच्छ्रीवत्समुरसा विभुः ॥ १ ॥ स्वमायां वनमालाख्यां नानागुणमयीं दधत् । वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥ २ ॥ बिभर्ति सांख्यं योगं च देवो मकरकुण्डले । मौलिं पदं पारमेष्ठ्यं सर्वलोकाभयंकरम् ॥ ३ ॥ अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः । धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते

॥ ४ ॥ ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत्। अपां तत्त्वं दरवरं तेज-
स्तत्त्वं सुदर्शनम् ॥ ५ ॥ नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम्। काल-
रूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ ६ ॥ आतपत्रं तु वैकुण्ठं द्विजा
धामाकुतोभयम्। त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥ ७ ॥ अन-
पायिनी भगवती श्रीः साक्षादात्मनो हरेः। विष्वक्सेनस्तन्त्रमूर्तिर्विदितः
पार्षदाधिपः। नन्दादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ ८ ॥ वासु-
देवः संकर्षणः प्रद्युम्नः पुरुषः स्वयम्। अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभि-
धीयते ॥ ९ ॥ व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया। ग्रीष्मो नामर्तुरभ-
वन्नातिप्रेयाञ्शरीरिणाम् ॥ १० ॥ स च वृन्दावनगुणैर्वसन्त इव लक्षितः।
यत्रास्ते भगवान्साक्षाद्रामेण सह केशवः ॥ ११ ॥ यत्र निर्झरनिर्ह्रादनिवृत्त-
स्वनझिल्लिकम्। शश्वत्तच्छीकरर्जीषद्रुममण्डलमण्डितम् ॥१२॥ सरित्स-
रःप्रस्रवणोर्मिवायुना कह्लारकञ्जोत्पलरेणुहारिणा। न विद्यते यत्र वनौकसां
दवो निदाघवह्न्यर्कभवोऽतिशाद्वले ॥ १३ ॥ अगाधतोयह्रदिनीतटोर्मिभिर्द्रव-

तपुरीष्याः पुलिनैः समन्ततः । न यत्र चण्डांशुकरा विषोल्बणा भुवो रसं शाद्वलितं च गृह्णते ॥१४॥ ततः प्रावर्तत प्रावृट् सर्वसत्त्वसमुद्भवा । विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ॥१५॥ सान्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः । अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ॥ १६ ॥ तडिद्वन्तो महामेघाश्चण्डश्वसनवेपिताः । प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ॥१७॥ निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः । यथा पापेन पाखण्डा नहि वेदाः कलौ युगे ॥१८॥ क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः । धनिनामुपतापं च दैवाधीनमजानताम् ॥ १९ ॥ सरिद्भिः संगतः सिन्धुश्चुक्षुभे श्वसनोर्मिमान् । अपक्वयोगिनश्चित्तं कामाक्तं गुणयुग्यथा ॥२०॥ गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः । अभिभूयमाना व्यसनैर्यथाधोक्षजचेतसः ॥२१॥ मार्गा बभूवुः संदिग्धास्तृणैश्छन्ना ह्यसंस्कृताः । नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव ॥ २२ ॥ धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात् । व्यक्ते गुणव्यतिकरे गुणवान्पुरुषो यथा ॥२३॥ न रराजोडुपश्छन्नः स्वज्यो-

त्स्नाराजितैर्घनैः । अहंमत्या भासितया स्वभासा पुरुषो यथा ॥२४॥ जलौ-
घैर्निरभिद्यन्त सेतवो वर्षतीश्वरे । पाखण्डिनामसद्वादैर्वेदमार्गाः कलौ यथा
॥२५॥ व्यमुञ्चन्वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनाः। यथाशिषो विश्पतयः काले
काले द्विजेरिताः ॥ २६ ॥ पश्यतैतान्महाभागान्परार्थैकान्तजीवितान् । वात-
वर्षातपहिमान्सहन्तो वारयन्ति नः ॥२७॥ अहो एषां वरं जन्म सर्वप्राण्यु-
पजीवनम् । सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ॥२८॥ पत्रपुष्पफल-
च्छायामूलवल्कलदारुभिः । गन्धनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते
॥२९॥ एतावज्जन्मसाफल्यं देहिनामिह देहिषु । प्राणैरर्थैर्धिया वाचा श्रेय
एवाचरेत्सदा ॥ ३० ॥ अहो अमी देववरामरार्चितं पादाम्बुजं ते सुमनः
फलार्हणम् । नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तरुजन्म यत्कृ-
तम् ॥ ३१ ॥ एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषानुपदं
भजन्ते । प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघा-
त्मदैवम् ॥३२॥ नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव

ते प्रियमीक्षणेन । सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान्हि सतां निसर्गः ॥ ३३ ॥ धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः । नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥३४॥ मृषाऽधर्मस्य भार्यासीद्दम्भं मायां च शत्रुहन् । असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः ॥३५॥ तयोः समभवल्लोभो निकृतिश्च महामते । ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः ॥३६॥ दुरुक्तौ कलिराधत्त भियं मृत्युं च सत्तम । तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥३७॥ संग्रहेण मयाऽख्यातः प्रतिसर्गस्तवानघ । त्रिःश्रुत्वैतत् पुमान् पुण्यं विधुनोत्यात्मनोमलम् ॥ ३८ ॥

इति श्रीभक्तिकौस्तुभे रूपकवर्णनं नाम अष्टत्रिंश आह्निकः ।

अहं हरिः सर्वमिदं जनार्दनो नान्यत् ततः कारणकार्य्यजातम् । ईदृङ् मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥ १ ॥ सर्वं जगदिदं विष्णुः विष्णुः सर्वस्य कारणम् । अहं विष्णुरिति ध्यानं तद्विष्णोः स्मरणं

विदुः ॥ २ ॥ अहमेवाक्षरो नित्यः परमात्मा न संशयः । ब्रह्मसंज्ञोऽहमेवाग्रे तथान्ते च परः पुमान् । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥३॥ स्थूलदेहो भवेद् ब्रह्मा लिङ्गदेहो हरिः स्मृतः । रुद्रस्तु कारणोदेहः तुरीया त्वहमेव च । सर्वान्तर्यामिनी नित्या निर्गुणा रूपवर्जिता ॥ ४ ॥ ज्ञाननेत्रं समादाय चरेद् वह्निमतः परम् । निष्कलं निर्मलं शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ ५ ॥ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । न चास्ति किञ्चित् कर्त्तव्यं अस्ति चेत् स न तत्त्ववित् ॥ ६ ॥ ज्ञानशौचं परित्यज्य वाह्ये यो रमते नरः । स मूढः कांचनं त्यक्त्वा लोष्टं गृह्णाति मोहतः ॥७॥ भावतीर्थं परंतीर्थं प्रमाणं सर्वकर्मसु । आत्मतीर्थं समुत्सृज्य वहिस्तीर्थं च यो व्रजेत् । स करस्थं महारत्नं त्यक्त्वा काचं विमार्गति ॥८॥ वहिस्तीर्थात् परं तीर्थं अन्तस्तीर्थं महामुने । आत्मतीर्थं महातीर्थं अन्यतीर्थं निरर्थकं ॥६॥ चित्तमन्तःस्थितं दुष्टं वहिः स्नानै र्न शुद्ध्यति । तीर्थधौतं शतं चापि सुराभाण्डमिवाशुचि ॥ १० ॥ अन्तःस्थं मां परित्यज्य वहिष्ठं यस्तु सेवते । हस्तस्थं पिण्डमुत्सृज्य लिह-

त्येव स्वकूर्परः ॥ ११ ॥ नाहमस्मि न चान्योस्ति न चायं च न हीतरः । ब्रह्मास्मीति च यज्ज्ञानं तदसङ्गो बुधैः स्मृतः ॥ १२ ॥ न मोक्षो नभसः पृष्ठे न पाताले न भूतले । सर्वाशासंक्षये मोक्षः चेतः क्षय इतीष्यते ॥ १३ ॥ मायास्पृष्टं मनो नित्यं ततो जीवस्य संसृतिः । मनः सृजति वै देहान् गुणान् कर्माणि चात्मनः ॥ १४ ॥ माया नित्या कारणञ्च कर्मबीजं ततः परम् । भ्रमत्येव जगत् सर्वं ततः कर्म नियन्त्रितम् ॥ १५ ॥ तन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु । भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ १६ ॥ अनया नियतं बद्धा मुनयः कोटिसंख्यकाः । योगिनो मोहिताश्चान्ये वञ्चिताः सन्ति संसृतौ ॥ १७ ॥ सर्वमुक्तिं परीहर्त्तुं मोहशास्त्राणि भूतले । निर्मितानि महेशेन सलीलत्वविमोहनात् ॥१८॥ जना वै लोक एतस्मिन् अविद्याकाम-कर्मभिः । गतिमुच्चावचास्वेव न वेद स्वां गतिं भ्रमन् ॥ १९ ॥ स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम् । अभयं चाप्यनीहायां सङ्कल्पाद्विरमेत् कविः ॥ २० ॥ क्लेशभूर्य्यल्पसाराणि कर्माणि विफलानि च । देहिनां

विपयार्त्तानां न तथैवार्पितं त्वयि ॥ २१ ॥ नावमः कर्मकल्पोऽपि विफलाये-
श्वरार्पितः । कल्पने पुरुषस्यैप स ह्यात्मा दयितो हितः ॥ २२ ॥ तन्मङ्गलं
यत्र मनः प्रसन्नं तज्जीवनं यत्र परस्य भृत्या । तदर्ज्जितं यत् स्वजनेन भुक्तं
तद्गर्ज्जनं यत् समरे असूनाम् ॥ २३ ॥ स्नेहाधिष्ठानवर्त्यग्नि-संयोगो याव-
दीयते । ततो दीपस्य दीपत्वम् एवं देहकृतो भवः । रजः सत्वतमोवृत्या
जायतेऽथ विनश्यति ॥ २४ ॥ तर्कोऽप्रतिष्ठः श्रुतयो विभिन्नाः नासौ ऋषि
र्यस्य मतं न भिन्नं । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स
पन्थाः ॥ २५ ॥ यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय
किमु यत्र चतुष्टयम् ॥ २६ ॥ सुहृदां हितकामानां यो न तिष्ठति शासने ।
प्रज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥ २७ ॥ त्रिभार्य्याश्चैव ज्ञानस्य
बुद्धिर्मेधाधृतिस्तथा । विना याभिर्जगत् सर्वं मूढं मत्तसमं सदा ॥ २८ ॥
वैराग्यस्य च द्वे भार्ये श्रद्धा भक्तिश्च पूजिते । याभ्यां शश्वज्जगत् सर्वं
जीवन्मुक्तं प्रतीयते ॥ २९॥ तपो मे हृदयं साक्षात् तनुर्विद्याऽकृतिः क्रिया ।

आत्मा धर्मोऽसवोदेवाः अङ्गानि क्रतवो मम ॥ ३० ॥ तपो मे दुश्चरं वीर्यं आत्माहं तपसः सदा । सृजामि तपसा विश्वं विभर्मि च ग्रसामि च ॥३१॥ चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् । न परीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ३२ ॥ गते कार्ये सदैव स्यात् नृणामेव विचारणा । पूर्वतश्चेद्भवेत् बुद्धिः कथं कार्यं विहीयते ॥ ३३ ॥ विवेकः सर्वदा लोके सम्पदां परमं पदम् । अविवेको हि लोकानामापदां परमं पदम् ॥ ३४ ॥ शक्तिलभ्या गुणाः सर्वे गुणलभ्यं महद्यशः । निःश्रेयसं ज्ञानलभ्यं बललभ्या हि मेदिनी ॥ ३५ ॥ शनैर्विद्या शनैर्धर्मः शनैः पर्वतलङ्घनम् । शनैः कामः शनैरर्थः एते पञ्च शनैः शनैः ॥ ३६ ॥ न साधुदूषणं पश्येत् गुणदृष्टिरनुत्तमः । प्रसादः सर्वदा तस्य अघकारिष्वपि स्फुटम् ॥३७॥ दुर्जनाः शिल्पिनो दासा दुष्टाश्च पटहाः स्त्रियः । ताडिता मार्दवं यान्ति न ते सत्कारभाजनम् ॥ ३८ ॥ शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि । सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ ३९ ॥ ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति । विदुषः

कर्मसिद्धिः स्यात् तथा नाविदुषो भवेत्। उदासीनोऽरिवद्वर्ज्यं आत्मवत् सुहृदुच्यते ॥ ४० ॥ उपानद्युक्तपादोऽहि वेत्ति चर्ममयीं महीम्। बुद्धिर्हि यादृशी यस्य स तद्वन्मन्यते जगत् ॥ ४१ ॥ दुग्धेन सिक्तोनिम्बोऽपि कटुभावं न वै त्यजेत्। प्रकृतिं यान्ति भूतानि उपदेशो निरर्थकः ॥४२॥ यथा यथा नरोऽधर्मं स्वयं कृत्वानुभाषते। तथा तथा त्वचेवाहिः तेनाऽधर्मेण मुच्यते ॥ ४३ ॥ यथा यथा मनस्तस्य दुष्कृतं कर्म गर्हति। तथा तथा शरीरं तत् तेनाऽधर्मेण मुच्यते ॥ ४४ ॥ कृत्वा पापं तु सन्तप्य तस्मात् पापात् प्रमुच्यते। नैवकुर्य्यां पुनरिति निवृत्त्या पूयते हि सः ॥ ४५ ॥ अकृतज्ञमनार्य्यञ्च दीर्घरोषमनार्जवम्। चतुरो विद्धि चाण्डालान् जात्या भवति पञ्चमः ॥ ४६ ॥ यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम्। समतुष्टेस्तदा पुंसः सर्वाः सुखमयादिशः। शर्करा कंटकादिभ्यो यथोपानत्पदः शिवम् ॥ ४७ ॥ असन्तुष्टस्य विप्रस्य तेजो विद्यातपो यशः। स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्य्यते ॥ ४८ ॥ औपस्थ्यजैह्वयकार्पण्यात् गृहपालायते जनः।

अकिञ्चिनोऽपि सन्तुष्टः शेते सर्वाङ्ग विज्वरः ॥ ४९ ॥ रजोधिकाः कर्मपरा
दुःखे च सुखमानिनः । न पश्यन्ति कञ्चिच्छर्म मनः सन्तोपकारकम् ॥५०॥
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् । विश्वं भगवतो यत्र सर्वमेत-
च्चराचरम् ॥ ५१ ॥ यत्र वै ब्राह्मणकुलं तपोविद्या दयान्वितम् । यत्र
गंगाद्या नद्यः पुराणेषु च विश्रुताः ॥ ५२ ॥ सरांसि पुष्करादीनि क्षेत्रा-
ण्यर्हाश्रितान्युत । कुरुक्षेत्रं गयाक्षेत्रं प्रयागः पुलहाश्रमः ॥ ५३ ॥ नैमिषं
फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली । मथुरा च तथा काशी पम्पा बिन्दुसर-
स्तथा ॥ ५४ ॥ नारायणाश्रमो नन्दा सीतारामाश्रमादयः । सर्वे कुलाचला
चैव महेन्द्रमलयादयः ॥ ५५ ॥ एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये ।
एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ ५६ ॥ अकृष्णसारो देशा-
नाम् अब्रह्मण्योऽशुचिर्भवेत् । कृष्णसारोऽप्यसौवीरः कीकटा संस्कृतेरि-
णम् ॥ ५७ ॥ विगर्हितं धर्मशीलैर्ब्रह्मचर्यं उपव्ययम् । पौरोधसं विगर्ह्य च
येन हृष्यन्ति दुर्मतिः ॥ ५८ ॥ न गर्हयन्ति ह्यर्थेषु यविष्ठाङ्घ्र्यभिवादनम् ।

छन्दोभ्योऽनत्र न ब्रह्मन् वयो ज्यैष्ठ्यस्यकारणम् ॥ ५९ ॥ दाता नैव स्मरे-
द्दानं प्रतिग्राही न याचते । उभयोर्नरकेवासो यावच्चन्द्रदिवाकरौ ॥ ६० ॥
परश्चान्यापराधं हि स्वल्पं च बहुमन्यते । निजानामपराधं तु गणयेन्न
कदाचन ॥ ६१ ॥ नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति । स्वस्य पन-
सतुल्यानि पश्यन्नपि न पश्यति ॥ ६२ ॥ सतां श्रुत्वा गुणं नीचः सद्य एव
विषीदति । मिथ्यानिन्दां समाकर्ण्य महानन्दं व्रजेत् सदा ॥ ६३ ॥ साधूनां
वचनं नीचः श्रोतुमायाति बन्धुवत् । ततः समयमासाद्य प्रकाशयति तद्ध-
सन् ॥ ६४ ॥ मनस्यन्यद् वचस्यन्यत् कर्मण्यन्यत् दुरात्मनाम् । मनस्येकं
वचस्येकं कर्मण्येकं महात्मनाम् ॥ ६५ ॥ न तथा तप्यते विद्धः पुमान वाणैः
सुमर्मगैः । यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ ६६ ॥ दूरस्थोऽपि
समीपस्थो यो यस्य हृदयेस्थितः । समीपस्थोऽपि दूरस्थो हृदयाच्चेद्
विनिर्गतः ॥ ६७ ॥ सन्निकर्षो हि मर्त्यानमनादरणकारणम् । गाङ्गं चाम्भो
यथा हित्वा अन्यत्र याति शुद्धये ॥ ६८ ॥ पुण्यापुण्यपशुं हत्वा शिवे चित्तं

निर्योजयन्। मांसाशी साधको ज्ञेय इतरे प्राणघातकाः ॥ ६९ ॥ परशक्त्या च संयोगो मैथुनं विनिगद्यते। तदानन्दभरा मुक्ता इतरे स्त्रीनिषेवकाः ॥ ७० ॥ व्योमपङ्कज-निस्यन्द-सुधा-मद्यमिति स्मृतम्। मधुपानमिदं नाम वाह्ये चाभ्यन्तरे सताम्। इतरं मद्यपानन्तु योगिनां योगघातनम् ॥ ७१ ॥ सुकृतं स्वप्रियेष्वेव दुष्कृतमप्रियेषु च। विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥ ७२ ॥

इति श्रीभक्तिकौस्तुभे तत्त्वकथनं पूर्वार्द्धं नाम एकोनचत्वारिंश आह्निकः।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥१॥ परित्राणाय साधूनां विनाशाय चदुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ २ ॥ ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम्। मम वर्त्मानुवर्तंते मनुष्याः पार्थ सर्वशः ॥ ३ ॥ चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। कर्तारमपि मां विद्धि तस्याकर्तारमव्ययम् ॥ ४ ॥ चंचलं हि मनः कृष्ण प्रमाथि वलवद्दृढम्। तस्याहं निग्रहं

मन्ये वायोरिव सुदुष्करम् ॥ ५ ॥ असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौंतेय वैराग्येणापि गृह्यते ॥६॥ अयतिः श्रद्धयोपेतो योगाच्चलितमानसः । अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ७ ॥ कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति । अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ८ ॥ पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । नहि कल्याणकृत् कश्चित्दुर्गतिं तात गच्छति ॥ ९ ॥ प्राप्य पुण्यकृतांल्लोकान् उषित्वा शाश्वतीः समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ १० ॥ अथवा योगिनामेव कुले भवति धीमताम् । एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ११ ॥ तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् । यतते च ततो भूयः संसिद्धौ कुरुनंदन ॥ १२ ॥ सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥ समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम् । विनश्यत्स्वविनश्यंतं यः पश्यति स पश्यति ॥ १४ ॥ सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः । निबध्नंति महाबाहो देहे देहि-

नमव्ययम् ॥ १५ ॥ तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् । सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥१६॥ रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् । तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम् ॥ १७ ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्य निद्राभिस्तन्निबध्नाति भारत ॥ १८ ॥ सत्वं सुखे संजयति रजः कर्मणि भारत । तमस्तु ज्ञानमावृत्य प्रमादे संजयत्युत ॥१९॥ कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् । रजसस्तु फलं दुःखम् अज्ञानं तमसः फलम् ॥ २० ॥ ऊर्ध्वमूलमधः शाखम् अश्वत्थं प्राहुरव्ययम् । छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ २१ ॥ अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुण प्रवृद्धा विषयप्रवालाः । अधश्च मूलान्यनुसंततानि कर्मानुबंधीनि मनुष्यलोके ॥ २२ ॥ न रूपमस्येह तथोपलभ्यते नांतो न चादि र्न च सं-प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूल-मसंगशस्त्रेण दृढेन छित्त्वा ॥ २३ ॥ ततः पदं तत्परिमार्गितव्यं यस्मिन् गता नैव परागताश्च । तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ २४ ॥ निर्मानमोहा जितसंगदोषा

अध्यात्मनित्या विनिवृत्तकामा: । द्वंद्वैर्विमुक्ताः सुखदुःख संज्ञैर्गच्छंत्यमूढाः पदमव्ययं तत् ॥२५॥ न तद्भासयते सूर्यो न शशांको न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ २६ ॥ त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २७ ॥ यजंते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान्भूतगणांश्चान्ये यजंते तामसा जनाः ॥ २८ ॥ आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ २९ ॥ आयु सत्त्वबलारोग्य-सुखप्रीतिविवर्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥३०॥ कट्वम्ललवणात्युष्ण-तीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकाभयप्रदाः ॥३१॥ यातयामं गतरसं पूति पर्युषितं च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ ३२ ॥ देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शरीरं तप उच्यते ॥ ३३ ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते

॥ ३४ ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत् तपोमानसमुच्यते ॥ ३५ ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ ३६ ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ ३७ ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ ३८ ॥ अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ ३९ ॥ यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञोदानं तपश्चैव पावनानि मनीषिणाम् ॥ ४० ॥ दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ४१ ॥ कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ४२ ॥ नियतं संगरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ ४३ ॥ यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ ४४ ॥

अनुबंधं क्षयं हिंसाम् अनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म तत्तामस-मुदाहृतम् ॥ ४५ ॥ प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी ॥ ४६ ॥ यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ४७ ॥ अधर्मं मन्यते धर्मम् इति या तमसा वृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ४८ ॥ यदग्रे विषमिकाशं परिणामेऽमृतोपमम् । तत्सुखं सात्विकं प्रोक्तम् आत्मबुद्धिप्रसादजम् ॥ ४९ ॥ विषयेंद्रियसंयोगात् यदग्रे चामृतोपमम् । अन्ते च विषमिकाशं तत्सुखं राजसं स्मृतम् ॥ ५० ॥ यदग्रे चानुबंधे च सुखं मोहनमात्मनः । निद्रालस्य प्रमादोत्थं तत्तामसमुदाहृतम् ॥ ५१ ॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ५२ ॥

इति श्रीभक्तिकौस्तुभे चत्वारिंशाह्निके तत्वकथनमुत्तरार्द्धं नाम द्वितीयः परिच्छेदः ।

ब्रह्मोवाच । नौमीड्य तेऽभ्रवपुषे तडिदम्बराय गुञ्जावतंसपरिपिच्छलसन्मुखाय । वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपांगजाय ॥ १ ॥ अस्यापि देव वपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि । नेशे महि त्ववसितु मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः ॥ २ ॥ ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्ताम् । स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभिर्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्याम् ॥ ३ ॥ श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥ ४ ॥ पुरेह भूमन् बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया । विबुद्ध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥ ५ ॥ तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः । अविक्रियात् स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया च नान्यथा ॥ ६ ॥ गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य ।

कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥ ७ ॥ तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् । हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥ ८ ॥ पश्येश मेऽनार्यमनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि । मायां वितत्येक्षितुमात्मवैभवं ह्ययं कियानैच्छमिवार्चिरग्नौ ॥ ९ ॥ अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः । अजावलेपान्धतमोऽन्धचक्षुष एषोऽनुकम्प्यो मयि नाथवानिति ॥ १० ॥ क्वाहं तमो महदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः । क्वेदृग्विधाऽविगणिताण्डपराऽणुचर्यावाताध्वरोमविवरस्य च ते महित्वम् ॥ ११ ॥ उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे । किमस्तिनास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनन्तः॥१२॥ जगत्त्रयान्तोदधिसंप्लवोदे नारायणस्योदरनाभिनालात् । विनिर्गतोऽजस्त्विति वाङ् न वै मृषा किं त्वीश्वरत्वन्न विनिर्गतोऽस्मि॥१३॥ नारायणस्त्वं न हि सर्वदेहिनामात्माऽस्यधीशोऽखिललोकसाक्षी । नारायणोऽङ्गं नर-

भूजलायनात्तच्चापि सत्यं न तवैव माया ॥ १४ ॥ तच्चेज्जलस्थं तव सज्जगद्वपुः किं मे न दृष्टं भगवंस्तदैव । किं वा सुदृष्टं हृदि मे तदैव किं नो सपद्येव पुनर्व्यदर्शि ॥ १५ ॥ अत्रैव मायाधमनाऽवतारे ह्यस्य प्रपञ्चस्य बहिः स्फुटस्य । कृत्स्नस्य चान्तर्जठरे जनन्या मायात्वमेव प्रकटीकृतं ते ॥ १६ ॥ यस्य कुक्षाविदं सर्वं सात्मं भाति यथा तथा । तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना ॥ १७ ॥ अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितमेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि । तावन्तोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासितास्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते ॥१८॥ अजानतां त्वत्पदवीमनात्मन्यात्मात्मना भासि वितत्य मायाम् । सृष्टाविवाहं जगतो विधान इव त्वमेषोऽन्त इव त्रिनेत्रः ॥ १९ ॥ सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादस्स्वपि तेऽजनस्य । जन्माऽसतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च ॥ २० ॥ को वेत्ति भूमन्भगवन्परात्मन् योगेश्वरोतीर्भवतस्त्रिलोक्याम् । क्व वा कथं वा कति वा कदेति

विस्तारयन्क्रीडसि योगमायाम् ॥ २१ ॥ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्। त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत् सदिवावभाति ॥२२॥ एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः। नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥२३॥ एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते। गुर्वर्कलब्धोपनिषत्सु चक्षुषा ये ते तरन्तीव भवानृताम्बुधिम् ॥२४॥ आत्मानमेवात्मतयाऽविजानतां तेनैव जातं निखिलं प्रपञ्चितम्। ज्ञानेन सम्यक् पुनरेव लीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥ २५ ॥ अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात्। अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥ २६॥ त्वामात्मानं परं मत्वा परमात्मानमेव च। आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताऽज्ञता ॥२७॥ अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः। असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः ॥२८॥ अथापि ते देव

पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि । जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥२६॥ तदस्तु मे नाथ स भूरिभागो भवेऽत्र वाऽन्यत्र अथो तिरश्चाम् । येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम् ॥३०॥ अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा । यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥३१॥ अहो भाग्यमहोभाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥३२॥ एषां तु भाग्यमहिमाऽच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः । एतद्धृषीकचषकैरसकृत् पिबामः शर्वादयोऽङ्घ्र्युदजमध्वमृतासवं ते ॥३३॥ तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् । यज्जीवितं तु निखिलं भगवान् मुकुन्दस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥ ३४ ॥ एषां घोषनिवासिनामुत भवान् किं देव रातेति नश्चेतो विश्वफलात् फलं त्वदपरं कुत्राप्ययन्मुह्यति । सद्वेषादिव पूतनापि सकुला त्वामेव देवाऽऽपिता यद्धामार्थसुहृत् प्रियात्मतनय-

प्राणाशया त्वत्कृते ॥ ३५ ॥ तावद्रागादयः स्तेनास्तावत् कारागृहं गृहम् । तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः ॥ ३६ ॥ प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले । प्रपन्नजनताऽऽनन्दसंदोहं प्रथितुं प्रभो ॥३७॥ जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो । मनसो वपुषो वाचो वैभवं तव गोचरः ॥३८॥ अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक् । त्वमेव जगतां नाथ जगदेतत् तवार्पितम् ॥ ३९ ॥ श्रीकृष्ण वृष्णिकुलपुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् । उद्धर्मशार्वरहर क्षितिराक्षसध्रुगाकल्पमार्कमर्हन् भगवन् नमस्ते ॥ ४० ॥

इति श्रीभक्तिकौस्तुभे महास्तुतिर्नाम एकचत्वारिंश आह्निकः ।

यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैः वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः । ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥ पृष्ठे भ्राम्यद् मन्दमन्दरगिरिग्रीवाग्रः कण्डूयनात् निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः

पान्तु वः । यत् संस्कार कलाऽनुवर्त्तनवशात् वेलानिभेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २ ॥ नताः स्म ते नाथ सदाङ्घ्रिपंकजं विरिञ्चवैरिञ्च्यसुरेन्द्र वन्दितम् । परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत्परः प्रभुः ॥ ३ ॥ भवाय नस्त्वं भव विश्वभावन त्वमेव माताऽथसुहृत् पतिः पिता । त्वं सद्गुरुर्नः परमं च दैवतम् यस्यानुवृत्त्या कृतिनो बभूविम ॥ ४ ॥ संसारकूपे पतितं विषयैर्मुषितेक्षणम् । ग्रस्तं कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः । अतस्ते श्रेयसे धीराः पादरेणुमुपासते ॥ ५ ॥ त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ । अदभ्रदयया दृष्ट्या आपन्नानर्हसीक्षितुम् ॥ ६ ॥ नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम् । यन्मूलकेता यतयोऽञ्जसोरु संसारदुःखं बहिरुत्क्षिपन्ति ॥ ७ ॥ यत् सानुबन्धेऽसति देहगेहे ममाहमित्यूढ दुराग्रहाणाम् । पुंसां सुदूरं वसतोऽपि पुर्य्यां भजेम तत्ते भगवन् पदाब्जम् ॥ ८ ॥ यत्र व्रजन्त्यघभिदो रचनाऽनुवादान् शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः । यास्तु श्रुताहतभगैर्नृ-

भिरात्तसाराः तांस्तान्क्षिपन्त्यशरणेषु तमस्सु हन्त ॥६॥ यच्च व्रजन्त्यऽनि-
मिषा मृषभानुवृत्त्या दूरे यमा ह्युपरि नः स्पृहणीयशीलाः । भर्तुर्मिथः सुय-
शसः कथनानुराग-वैक्लव्यबाष्पकलया पुलकीकृतांगाः ॥ १० ॥ पानेन ते
देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं
यथाञ्जसाऽन्वीयुरकुण्ठधिष्ण्यम् ॥ ११ ॥ सा श्रद्दधानस्य विवर्धमाना
विरक्तिमन्यत्र करोति पुंसः । हरेः पदानुस्मृतिनिर्वृतस्य समस्तदुःखात्य-
यमाशु धत्ते ॥ १२ ॥ तान् शोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमु-
खानघेन । क्षिणोति देवोऽनिमिषस्तु येषाम् आयुर्वृथावादगतिस्मृतीनाम्
॥१३॥ तथाऽपरे चात्मसमाधियोग-बलेन जित्वा प्रकृतिं बलिष्ठाम् । त्वामेव
धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥ १४ ॥ कस्तृप्नुयात्
तीर्थपदोऽभिधानात् सत्रेषु वः सूरिभिरीड्यमानात् । यत् कर्णनाडीं पुरु-
षस्य यातं भवप्रदां गेहरतिंछिनत्ति ॥ १५ ॥ यच्छृण्वतोऽपैत्यरतिर्वितृष्णा
सत्त्वं च शुद्ध्यत्यचिरेण पुंसः । भक्तिर्हरौ तत्पुरुषे च सख्यं तदेव हारं वद

मन्यसे चेत् ॥ १६ ॥ सुखाय कर्माणि करोति लोको न लभ्यते दुःखशमः सुखं वा । विन्देत भूयस्तत एव दुःखं यदत्र युक्तं भगवान् वदेन्नः ॥ १७ ॥ येन चेतयते विश्वं विश्वं चेतयते न यम् । यो जागर्ति शयानेऽस्मिन्नायं तं वेद वेद सः ॥ १८ ॥ आत्मावास्यमिदं विश्वं यत्किंचित् जगत्यां जगत् तेन त्यक्तेन भुञ्जीथा मागृधः कस्यस्विद्धनम् ॥ १९ ॥ यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति यं चेकितानमनुचित्तय उच्चकन्ति । भूमण्डलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥ २० ॥ यं न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति । तं भूतनिलयं देवं सुपर्णमुपधावत ॥ २१ ॥ आदिरन्तो न मध्यं च स्वः परो नान्तरं बहिः । विश्वस्यामूनि यद्यस्मात् विश्वं च तदृतं महत् ॥२२॥ स विश्वकायः पुरुहूत ईशः सत्यः स्वयंज्योतिरजः पुराणः । धत्तेऽस्य जन्माद्य जयात्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥ २३ ॥ न यस्य सख्यं पुरुषोऽवैति सख्युः सखा वसन् संवसतः पुरेऽस्मिन् । गुणो यथा गुणिनो व्यक्तदृष्टे स्तस्मै महेशाय नमस्करोमि

॥ २४ ॥ यदोपरामो मनसो नामरूप-रूपस्य दृष्टस्मृतिसंप्रमोपात् । य ईयते केवलया स्वमंस्थया हंसाय तस्मै शुचिस ने नमः ॥ २५ ॥ यस्मिन् यतो येन च यस्य यस्मै यद्यो यथा पश्यति दृश्यते च । परावरेपां परमं प्रसिद्धं प्राग् ब्रह्म तद्धेतुरनन्यदेकम् ॥ २६ ॥ अस्तीति नास्तीति पदार्थनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः । अवेक्षितं किंचन योगसांख्ययोः समं परं चैव क्षितं बृहत्तत् ॥२७॥ योऽनुग्रहार्थं भजतां पादमूलम् अनामरूपो भगवाननन्तः । नामानि रूपाणि च जन्मकर्मभिः भेजे स मह्यं परमः प्रसीदतु ॥२८॥ यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति । यथानिलः पार्थिवमाश्रितोगुणं स ईश्वरो मे कुरुतान् मनोरथम् ॥ २९ ॥ अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पंचदशारमाशु । त्रिणाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ ३० ॥ य एकवर्णं तमसः परं तत् अलोकमव्यक्तमनन्तपारम् । आसां चकारोपसुपर्ण मेनम् उपासते योगरथेन धीराः ॥३१॥ न यस्य कश्चातितितर्त्ति मायां यया जनो मुह्यति वेदनार्थम् । स सर्वनामा

स च विश्वरूपो निषेधनिर्वाणसुखानुभूतिः ॥ ३२ ॥ न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा । तथाऽपि भक्तान् भजते यथा-तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ ३३ ॥ न ह्यस्यास्ति प्रियः कश्चिन् नाप्रियो वाऽस्त्यमानिनः । नोत्तमो नाधमोवाऽपि समानस्य समोऽपि वा ॥ ३४ ॥ न माता न पिता तस्य न भार्या न सुतादयः । नात्मीयो न परश्चापि न देहो जन्म एव च ॥३५॥ न तेऽस्ति स्वपरभ्रान्तिः विश्वस्य सुहृदात्मनः । तथापि स्मरतां शश्वत् क्लेशान् हंसि हृदिस्थितः ॥ ३६ ॥ न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयाऽऽदरणीय पक्षः । अथापि सर्गस्थितिसंयमार्थं धत्ते रजः सत्व तमांसि काले ॥ ३७ ॥ न ब्रह्मणः स्वपरभेदमतिस्तव स्यात् सर्वात्मनः समदृशः स्वसुखानुभूतेः । संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र ॥ ३८ ॥ पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः । हिताय स्वेच्छातनुभिः समीहसे मानं विधुन्वन् जगदीशमानिनाम् ॥३९॥ नमाम्यभीक्ष्णं नमनीयपाद-सरोजमल्पी-

यसि कामवर्षम्। यच्चिन्त्यतेऽन्तर्हृदि भावयुक्तैः मुमुक्षुभिः कर्ममयोरु-
पाशात् ॥ ४० ॥ शुद्धिर्नृणां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदा-
नतपः क्रियाभिः। सत्त्वात्मनामृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृ-
तया यथा स्यात् ॥४१॥ स्यान्नस्तवांघ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनि-
भिरार्द्रहृदोह्यमानः। यः सात्वतैः समविभूतय आत्मवद्भिर्व्यूहेऽर्चितः
सवनशः स्वरतिक्रमाय ॥ ४२ ॥ भवभयमपहन्तुं ज्ञानविज्ञानसारं निगम-
कृदुपजह्रे भृङ्गवद्वेदसारम्। अमृतमुदधितश्चा-पाययद्भृत्यवर्गान् पुरुषमृषभ-
माद्यं कृष्णसंज्ञं नतोऽस्मि ॥ ४३ ॥ तद्वार्त्ता सुखतो ब्रवीमि यदहं सास्तु
स्तुतिस्ते मम। यद्भुञ्जे मम तन्निवेदनमथो यद्यामि सा प्रेष्यता।
यच्छ्रान्तः स्वपिमि तदङ्घ्रियुगले दण्डप्रणामोऽस्तु मे। स्वामी यच्च
करोमि तेन भगवान् विश्वेश्वरः प्रीयताम् ॥ ४४ ॥

इति श्रीभक्तिकौस्तुभे भगवत्स्तुति र्नाम द्विचत्वारिंश आह्निकः ॥

आसीनमुर्व्यां भगवन्तमाद्यं संकर्षणं देवमकुण्ठसत्त्वम्। विवित्सव-

स्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन् ॥ १ ॥ स्वमेव धिष्ण्यं बहु मानयन्तं यं वासुदेवाभिधमामनन्ति। प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय ॥२॥ स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानम्। पद्मं यदर्चन्त्यहिराजकन्याः सप्रेमनानाबलिभिर्वरार्थाः ॥ ३ ॥ मुहुर्गृणन्तो वचसानुरागस्खलत्पदेनास्य कृतानि तज्ज्ञाः। किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ॥ ४ ॥ उदाप्लुतं विश्वमिदं तदासीद्यन्निद्रयाऽमीलितदृङ् न्यमीलयत्। अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणः स्वात्मरतौ निरीहः ॥ ५ ॥ सोऽन्तः शरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाणः। उवास तस्मिन्सलिले पदे स्वे यथानलो दारुणि रुद्धवीर्यः ॥ ६ ॥ चतुर्युगानां च सहस्रमप्सु स्वपन्स्वयोदीरितया स्वशक्त्या। कालाख्ययाऽऽसादितकर्मतन्त्रो लोकानपीतान्ददृशे स्वदेहे ॥ ७ ॥ तस्यार्थसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान्। गुणेन कालानुगतेन विद्धः सूष्यंस्तदाभिद्यत नाभिदेशात् ॥ ८ ॥ सपद्मकोशः सहसोदतिष्ठत्कालेन कर्मप्रति-

बोधनेन । स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥ ९ ॥ तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् । तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं स्म वदन्ति सोऽभूत् ॥ १० ॥ तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः । परिक्रमन्व्योम्नि विवृत्त-नेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ ११ ॥ तस्माद्युगान्तश्वसनावघूर्णज-लोर्मिचक्रात्सलिलाद्विरूढम् । उपाश्रितः कञ्जमु लोकतत्त्वं नात्मानमद्धावि-ददादिदेवः ॥१२॥ क एष योऽसावहमब्जपृष्ठ एतत्कुतो वाब्जमनन्यदप्सु । अस्ति ह्यधस्तादिह किंचनैतदधिष्ठितं यत्र सतानुभाव्यम् ॥ १३ ॥ स इत्थमुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश । नार्वाग्गतस्तत्खरनाल-नालनाभिं विचिन्वंस्तदविन्दताजः ॥ १४ ॥ तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः । यो देहभाजां भयमीरयाणः परिक्षिणो-त्यायुरजस्य हेतिः ॥ १५ ॥ ततो निवृत्तोऽप्रतिलब्धकामः स्वधिष्ण्यमासाद्य पुनः स देवः । शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः ॥१६॥

कालेन सोऽजः पुरुषायुषाभिप्रवृत्तयोगेन विरूढबोधः । स्वयं तदन्तर्हृदये-वभातमपश्यतापश्यत् यन्न पूर्वम् ॥ १७ ॥ मृणालगौरायतशेषभोगपर्यङ्क एकं पुरुषं शयानम् । फणातपत्रायुतमूर्धरत्नद्युभिर्हतध्वान्तयुगान्ततोये ॥ १८ ॥ प्रेक्षां क्षिपन्तं हरितोपलाद्रेः संध्याभ्रनीवेरुरुरुक्ममूर्ध्नः । रत्नोदधारौषधि-सौमनस्यवनस्रजो वेणुभुजाङ्घ्रिपाङ्घ्रेः ॥१९॥ आयामतो विस्तरतः स्वमान-देहेन लोकत्रयसंग्रहेण । विचित्रदिव्याभरणांशुकानां कृतश्रियाऽपाश्रि-तवेषदेहम् ॥ २० ॥ पुंसां स्वकामाय विविक्तमार्गैरभ्यर्चतां कामदुघाङ्घ्रि-पद्मम् । प्रदर्शयन्तं कृपया नखेन्दु-मयूखभिन्नाङ्गुलिचारुपत्रम् ॥२१॥ मुखेन लोकार्तिहरस्मितेन परिस्फुरत्कुण्डलमण्डितेन । शोणायितेनाधरबिम्ब-भासा प्रत्यर्हयन्तं सुनसेन सुभ्र्वा ॥ २२ ॥ कदम्बकिञ्जल्कपिशङ्गवाससा स्वलंकृतं मेखलया नितम्बे । हारेण चानन्तधनेन वत्स श्रीवत्सवक्षस्थल-वल्लभेन ॥२३॥ परार्ध्यकेयूरमणिप्रवेक-पर्यस्तदोर्दण्ड-सहस्रशाखम् । अव्य-क्तमूलं भुवनाङ्घ्रिपेन्द्र-महीन्द्रभोगैरधिवीतवल्शम् ॥ २४ ॥ चराचरौको

भगवन्महीध्र-महीन्द्रबन्धुं सलिलोपगूढम् । किरीटसाहस्रहिरण्यशृङ्ग-माविर्भवत्कौस्तुभरत्नगर्भम् ॥ २५ ॥ निवीतमाम्नायमधुव्रतश्रिया स्वकीर्तिमय्या वनमालया हरिम् । सूर्येन्दुवाय्वग्न्यगमं त्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥२६॥ तर्ह्येव तन्नाभिसरः सरोजम् आत्मानमम्भः श्वसनं वियच्च । ददर्श देवो जगतो विधाता नातः परं लोकविसर्गदृष्टिः ॥२७॥ स कर्मबीजं रजसोपरक्तः प्रजाः सिसृक्षन्नियदेव दृष्ट्वा । अस्तौद्विसर्गाभिमुखस्तमीड्य-मव्यक्तवर्त्मन्यभिवेशितात्मा ॥२८॥

इति श्रीभक्तिकौस्तुभे सर्वोत्कृष्टश्रीमन्नारायण स्वरूपवर्णनं नाम त्रिचत्वारिंश आह्निकः ।

ब्रह्मोवाच । ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते भगवतो गतिरित्यवद्यम् । नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि ॥ १ ॥ रूपं यदेतदवबोधरसोदयेन शश्वन्निवृत्ततमसः सदनुग्रहाय । आदौ गृहीतमवतारशतैकबीजं यन्नाभिपद्मभवनादहमाविरासम् ॥ २ ॥ नातः परं परम यद्भवतः स्वरूपमानन्दमात्रमविकल्पमविद्ध-

वर्चः। पश्यामि विश्वसृजमेकमविश्वमात्मन् भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि ॥३॥तद्वा इदं भुवनमङ्गल मङ्गलाय ध्याने स्म नो दर्शितं त उपासकानाम् । तस्मै नमो भगवतेऽनुविधेम तुभ्यं योऽनादृतो नरकभाग्भिरसत्प्रसंगैः ॥४ ॥ ये तु त्वदीयचरणाम्बुजकोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् । भक्त्या गृहीतचरणः परया च तेषां नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम् ॥ ५ ॥ तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः । तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ६ ॥ दैवेन ते हतधियो भवतः प्रसंगात् सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये । कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥ ७ ॥ क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः शीतोष्णवातवर्षैरितरेतराच्च। कामाग्निनाऽच्युत रुषा च सुदुर्भरेण संपश्यतो मन उरुक्रम सीदते मे ॥ ८ ॥ यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थमायाबलं भगवतो जन ईश पश्येत् । तावन्न संसृतिरसौ प्रतिसंक्रमेत व्यर्थाऽपि दुःखनिवहं वहति

क्रियार्थो ॥ ६ ॥ अह्न्यापृतार्तकरणा निशि निःशयाना नानामनोरथधिया क्षणभग्ननिद्राः । दैवाहतार्थरचना ऋषयोऽपि देव युष्मत्प्रसंगविमुखा इह संसरन्ति ॥ १० ॥ त्वं भावयोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् । यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥ ११ ॥ नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः । यत्सर्वभूतदयया सदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥१२॥ पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च । आराधनं भगवतस्तव सत्क्रियार्थो धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र ॥१३॥ शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः परस्मै । विश्वोद्भवस्थितिलयेषु निमित्तलीलारासाय ते नम इदं चकृमेश्वराय ॥१४॥ यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा गृणन्ति । तेऽनेकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये ॥१५॥ यो वा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलयहेतव आत्ममूलम् ।

भित्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मै नमो भगवते भुवनद्रुमाय ॥१६॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे। यस्ता-वदस्य बलवानिह जीविताशां सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥१७॥ यस्माद्बिभेम्यहमपि द्विपरार्धधिष्ण्यमध्यासितः सकललोकनमस्कृतं यत्। तेपे तपो बहुसवोऽवरुरुत्समानस्तस्मै नमो भगवते पुरुषोत्तमाय ॥१८॥ तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः। रेमे निरस्तरतिरप्यवरुद्धदेहः तस्मै नमो भगवते पुरुषोत्तमाय ॥१९॥ योऽ-विद्यानुपहतोऽपि दशार्धवृत्त्या निद्रामुवाह जठरीकृतलोकयात्रः। अन्त-र्जलेऽहिकशिपुस्पर्शानुकूलां भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ॥२०॥ यन्नाभिपद्मभवनादहमासमीड्य लोकत्रयोपकरणो यदनुग्रहेण। तस्मै नमस्त उदरस्थभवाय योगनिद्रावसानविकसन्नलिनेक्षणाय ॥२१॥ सोऽयं समस्त-जगतां सुहृदेक आत्मा सत्वेन यन्मृडयते भगवान्भगेन। तेनैव मे दृशमनु-स्पृशताद्यथाहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥२२॥ एष प्रपन्नवरदो

रमयात्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः । तस्मिन्स्वविक्रममिदं सृजतोऽपि चेतो युञ्जीत कर्मशमलं च यथा विजह्याम् ॥ २३ ॥ नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः । रूपं विचित्रमिदमस्य विवृण्वतो मे मा रीरिषीष्ट निगमस्य गिरां विसर्गः ॥ २४ ॥ सोऽसावदभ्रकरुणो भगवान्विवृद्धप्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् । उत्थाय विश्वविजयाय च नो विषादं माध्व्या गिरापनयतात्पुरुषः पुराणः ॥ २५ ॥ मैत्रेय उवाच । स्वसंभवं निशाम्यैवं तपोविद्यासमाधिभिः । यावन्मनोवचः स्तुत्वा विरराम स खिन्नवत् ॥ २६ ॥ अथाऽभिप्रेतमन्वीक्ष्य ब्रह्मणो मधुसूदनः । विषण्णचेतसं तेन कल्पव्यतिकराम्भसा ॥२७॥ लोकसंस्थानविज्ञान आत्मनः परिखिद्यतः । तमाहाऽगाधया वाचा कश्मलं शमयन्निव ॥२८॥ श्रीभगवानुवाच । मा वेदगर्भगास्तंद्रीं सर्ग उद्यममावह । तन्मयापादितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥२९॥ भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रयाम् । ताभ्यामन्तर्हृदि ब्रह्मन्लोकान्द्रक्ष्यस्यपावृतान् ॥३०॥ तत आत्मनि लोके च

भक्तियुक्तः समाहितः। द्रष्टासि मां ततं ब्रह्मन्मयि लोकांस्त्वमात्मनः ॥३१॥ यदा तु सर्वभूतेषु दारुष्वग्निमिव स्थितम्। प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम् ॥ ३२ ॥ यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः। स्वरूपेण मयोपेतं पश्यन्स्वाराज्यमृच्छति ॥३३॥ नानाकर्मवितानेन प्रजा बह्वीः सिसृक्षतः। नात्माऽवसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ॥३४ ॥ ऋषिमाद्यं न बध्नाति पापीयांस्त्वां रजोगुणः। मन्मनो मयि निर्बद्धं प्रजाः संसृजतोऽपि ते ॥३५॥ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोपि देहिनाम्। यन्मां त्वं मन्यसेऽयुक्तं भूतेन्द्रियगुणात्मभिः ॥३६॥ तुभ्यं मद्विचिकित्सायामात्मा मे दर्शितोऽबहिः॥ नालेन सलिले मूलं पुष्करस्य विचिन्वतः ॥३७॥ यच्चकर्थाऽङ्ग मत्स्तोत्रं मत्कथाऽभ्युदयाङ्कितम्। यद्वा तपसि ते निष्ठा स एष मदनुग्रहः ॥३८॥ प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया। यदस्तौषीर्गुणमयं निर्गुणं माऽनुवर्णयन् ॥३९॥ य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत्। तस्याशु संप्रसीदेयं सर्वकामवरेश्वरः ॥४०॥ पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना।

राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतम् ॥४१॥ अहमात्मात्मनां धातः प्रेष्ठः संप्रेयसामपि। अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥४२॥

इति श्रीभक्तिकौस्तुभे नारायणस्तुतिर्नाम चतुश्चत्वारिंश आह्निकः।

देवहूतिरुवाच। निर्विण्णा नितरां भूमन्नसदिन्द्रियतर्पणात्। येन संभाव्यमानेन प्रपन्नाऽन्धं तमः प्रभो ॥१॥ तस्य त्वं तमसोऽन्धस्य दुष्पारस्याद्य पारगम्। सच्चक्षुर्जन्मनामन्ते लब्धं मे त्वदनुग्रहात् ॥ २ ॥ य आद्यो भगवान् पुंसामीश्वरो वै भवान्किल। लोकस्य तमसाऽन्धस्य चक्षुः सूर्य इवोदितः ॥ ३ ॥ अथ मे देव संमोहमपाक्रष्टुं त्वमर्हसि। योऽवग्रहोऽहं ममेतीत्येतस्मिन्योजितस्त्वया ॥ ४ ॥ तं त्वा गताहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम्। जिज्ञासयाऽहं प्रकृतेः परस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ५ ॥ मैत्रेय उवाच। इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम्। धियाऽभिनन्द्यात्मवतां सतां गतिर्बभाष ईषत्स्मितशोभिताननः ॥ ६ ॥ श्रीभगवानुवाच। योग आध्यात्मिकः पुंसां मतो

निःश्रेयसाय मे। अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च ॥ ७ ॥ तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे। ऋषीणां श्रोतुकामानां योगं सर्वाङ्गनैपुणम् ॥ ८ ॥ चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम्। गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ ९ ॥ अहं ममाभिमानोत्थैः कामलोभादिभिर्मलैः। वीतं यदा मनः शुद्धमदुःखमसुखं समम् ॥१०॥ तदा पुरुष आत्मानं केवलं प्रकृतेः परम्। निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥११॥ ज्ञानवैराग्ययुक्तेन भक्तियुक्तेन चात्मना। परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥१२॥ न युज्यमानया भक्त्या भगवत्यखिलात्मनि। सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥१३॥ प्रसंगमजरं पाशमात्मनः कवयो विदुः। स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥१४॥ तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम्। अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥१५॥ मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम्। मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥१६॥ मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति

च । तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥१७॥ त एते साधवः साध्वि सर्वसंगविवर्जिताः । संगस्तेष्वथ ते प्रार्थ्यः संगदोषहरा हि ते ॥ १८ ॥ सतां प्रसंगान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः । तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धारतिर्भक्तिरनुक्रमिष्यति ॥ १९ ॥ भक्त्या पुमाञ्जातविराग ऐन्द्रियादृष्टश्रुतान्मद्रचनाऽनुचिन्तया । चित्तस्य यत्तो ग्रहणे योगयुक्तो यतिष्यते ऋजुभिर्योगमार्गैः ॥२०॥ असेवयाऽयं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन । योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे ॥२१॥ देवहूतिरुवाच । काचित्त्वय्युचिता भक्तिः कीदृशी मम गोचरा । यया पदं ते निर्वाणमंजसाऽन्वाश्रवा अहम् ॥२२॥ यो योगो भगवद्बाणो निर्वाणात्मंस्त्वयोदितः । कीदृशः कतिचांगानि यतस्तत्त्वावबोधनम् ॥२३॥ तदेतन्मे विजानीहि यथाऽहं मन्दधीर्हरे । सुखं बुध्येय दुर्बोधं योषा भवदनुग्रहात् ॥२४॥ मैत्रेय उवाच । विदित्वार्थं कपिलो मातुरित्थं जातस्नेहो यत्र तन्वाऽभिजातः । तत्त्वाम्नायं

यत्प्रवदन्ति सांख्यं प्रोवाच वै भक्तिवितानयोगम् ॥२५॥ श्रीभगवानुवाच । देवानां गुणलिंगानामानुश्राविककर्मणाम् । सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ २६ ॥ अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी । जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ २७ ॥ नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाऽभिरता मदीहाः । येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि ॥ २८ ॥ पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नवक्त्रारुणलोचनानि । रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥ २९ ॥ तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः । हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्ते ॥ ३० ॥ अथो विभूतिं मम मायाविनस्तामैश्वर्यमष्टांगमनुप्रवृत्तम् । श्रियं भागवतीं वा स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके ॥ ३१ ॥ न कर्हिचिन्मत्पराः शान्तरूपे नंक्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३२ ॥ इमं लोकं तथैवामुमात्मान-

मुभयायिनम्। आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥ ३३ ॥ विसृज्य सर्वानन्यांश्च मामेवं विश्वतोमुखम्। भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥ ३४ ॥ नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात्। आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥ ३५ ॥ मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात्। वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात्॥ ३६ ॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः। क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥३७॥ एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः। तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ ३८ ॥ प्रकृतिस्थोऽपि पुरुषो नाज्यते प्राकृतैर्गुणैः। अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥ ३९ ॥ सएष यर्हि प्रकृतेर्गुणेष्वभिविषज्जते। अहंक्रियाविमूढात्मा कर्तास्मीत्यभिमन्यते ॥ ४० ॥ तेन संसारपदवीमवशोऽभ्येत्य निर्वृतः। प्रासङ्गिकैः कर्मदोषैः सदसन्मिश्रयोनिषु ॥ ४१ ॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते। ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ ४२ ॥ अतएव शनैश्चित्तं प्रसक्तमसतां पथि।

भक्तियोगेन तीव्रेण विरक्त्या च नयेच्छनम् ॥ ४३ ॥ भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः । नेश्वरस्याशुभं धत्ते स्वे महिम्नि स्थितस्य च ॥४४॥ यथाह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् । स एव प्रतिबुद्धस्य न वै मोहाय कल्पते ॥ ४५ ॥ एवं विदिततत्त्वस्य प्रकृतिर्मयि मानसम् । युञ्जतो नापकुरुत आत्मारामस्य कर्हिचित् ॥ ४६ ॥ प्रसन्नवदनाम्भोजं पद्मगर्भारुणेक्षणम् । नीलोत्पलदलश्यामं शंखचक्रगदाधरम् ॥ ४७ ॥ लसत्पङ्कजकिञ्जल्कपीतकौशेयवाससम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ॥४७॥ मत्तद्विरेफकलया परीतं वनमालया । परार्ध्यहारवलयकिरीटांगदनूपुरम् ॥ ४९ ॥ काञ्चीगुणोल्लसच्छ्रोणिं हृदयाम्भोजविष्टरम् । दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ ५० ॥ अपीच्यदर्शनं शश्वत्सर्वलोकनमस्कृतम् । सन्तं वयसि कैशोरे भृत्यानुग्रहकातरम् ॥ ५१ ॥ कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम् । ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः ॥ ५२ ॥ स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् । प्रेक्षणीये हितं ध्यायेच्छुद्धभावेन चेतसा

॥ ५३ ॥ भृत्यानुकम्पितधियेह गृहीतमूर्तेः संचिन्तयेद्भगवतो वदनारविन्दम् । यद्विस्फुरन्मकरकुण्डलवल्गितेन विद्योतितामलकपोलमुदारनासम् ॥ ५४ ॥

इति श्रीभक्तिकौस्तुभे कपिलदेवहुतिसंवादः पूर्वार्द्धो नाम पञ्च चत्वारिंश आह्निकः ।

श्रीभगवान उवाच । भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते । स्वभावगुणमार्गेण पुंसां भावो विभिद्यते ॥ १ ॥ अभिसंधाय यद्धिंसां दम्भं मात्सर्यमेव वा । संरम्भी भिन्नदृग्भावं मयि कुर्य्यात्स तामसः ॥ २ ॥ विषयानभिसंधाय यश ऐश्वर्यमेव वा । अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥ ३ ॥ कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् । यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ ४ ॥ मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये । मनो गतिरविच्छिन्ना यथा गंगाऽम्भसोऽम्बुधौ ॥ ५ ॥ लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् । अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥ ६ ॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना

मत्सेवनं जनाः ॥ ७ ॥ स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥ ८ ॥ अहं सर्वेषु भूतेषु भूतात्मावस्थितः सदा । तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम् ॥ ९ ॥ यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वाऽर्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥१०॥ द्विषतः परकाये मां मानिनो भिन्नदर्शिनः । भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥११॥ अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् । यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥१२॥ आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् । तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्वणम् ॥१३॥ अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् । अर्हयेद्दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषा ॥१४॥ जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे । ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः ॥१५॥ तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः । तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः ॥१६॥ रूपभेदविदस्तत्र ततश्चोभयतोदतः । तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो

छिपात् ॥१७॥ ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः। ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः ॥१८॥ अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत्। मुक्तसंगस्ततो भूयानद्रोग्धा धर्ममात्मनः ॥१९॥ तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः। मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः ॥२०॥ न पश्यामि परं भूतमकर्तुः समदर्शनात्। समदर्शिनरा नित्यं वैकुण्ठं तं व्रजन्तिने ॥ २१ ॥ मनसैतानि भूतानि प्रणमेद्बहु मानयन्। ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥ २२ ॥ श्रीभगवानुवाच। कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये। स्त्रियाः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः ॥ २३ ॥ कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम्। दशाहेन तु कर्कन्धूः पेश्यण्डं वा ततः परम् ॥ २४ ॥ मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यंगविग्रहः। नखलोमास्थिचर्माणि लिंगच्छिद्रोद्भवस्त्रिभिः ॥२५॥ चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः। षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥ २६ ॥ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमते। शेते विण्मूत्र-

योगैर्त्तैं स जन्तुर्जन्तुसंभवे ॥ २७ ॥ कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम् । मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैः क्षुधितैर्मुहुः ॥ २८ ॥ कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः । मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ २९ ॥ उल्बेन संवृतस्तस्मिन्नन्त्रैश्च बहिरावृतः । आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ३० ॥ अशक्तः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे । तत्र लब्धस्मृतिर्दैवात्कर्म जन्मशतोद्भवम् ॥ ३१ ॥ स्मरन्दीर्घमनुच्छ्वासं शर्म किं नाम विन्दन्ते । गर्भवाससमं दुःखं न भूतं न भविष्यति ॥ ३२ ॥ आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः । नैकत्रास्ते सूतिवातैर्विष्ठाभूरिव सोदरः ॥ ३३ ॥ नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः । स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ ३४ ॥ येनेदृशीं गतिमसौ दशमास्य ईश संग्राहितः पुरुदयेन भवादृशेन । स्वेनैव तुष्यतु कृतेन स दीननाथः को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात् ॥ ३५ ॥ सोऽहं वसन्नपि विभो बहुदुःखवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे । यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु संसृतिचक्रमेतत् ॥ ३६ ॥

तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमसः सुहृदात्मनव । भूयो यथा व्यसनमेतदनेकरन्ध्रं मा मे भविष्यदुपसादितविष्णुपादः ॥३७॥ कपिल उवाच । एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृपिः । सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः ॥ ३८ ॥ तेनावसृष्टः सहसा कृत्वावाक् शिर आतुरः । विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृतिः ॥ ३९ ॥ पतितो भुव्यसृङ्मूत्रे विष्टाभूरिव चेष्टते । रोरूयति गते ज्ञाने विपरीतां गतिं गतः ॥४०॥ सङ्गं न कुर्याच्छोच्येषु योपित्क्रीडामृगेषु च । प्रजापतिः स्वां दुहितरं दृष्ट्वा तद्रूपधर्षितः । रोहिद्भूतां सोऽन्वधावदृक्षरूपी हतत्रपः ॥४१॥ तत्सृष्टसृष्टसृष्टेषु कोऽन्वखण्डितधीः पुमान् । ऋषिं नारायणमृते योपिन्मय्येह मायया ॥४२॥ संगं न कुर्यात्प्रमदासु जातु योगस्य पारं परमारुरुक्षुः । मत्सेवया प्रतिलब्धात्मलाभो वदन्ति या निरयद्वारमस्य ॥ ४३ ॥ योपयाति शनैर्माया योपिद्देवविनिर्मिता । तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ ४४ ॥ यां मन्यते पतिं मोहान्मन्मायामृपभायतीम् । दैवोपसादितं मृत्युं मृगयोर्गा-

यनं यथा ॥ ४५ ॥ यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो हरिः । तदा लोका लयं यान्ति त एतेगृहमेधिनाम् ॥ ४६ ॥ ये स्वधर्मान्न दुह्यन्ति धीराः कामार्थहेतवे । निःसंगा न्यस्तकर्माणः प्रशान्ताः शुद्धचेतसः ॥४७॥ निवृत्तिधर्मनिरता निर्ममा निरहंकृताः । स्वधर्माख्येन सत्त्वेन परिशुद्धेन चेतसा ॥४८॥ सूर्यद्वारेण ते यान्ति पुरुषं विश्वतोमुखम् । परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥४९॥ अथ तं सर्वभूतानां हृत्पद्मेषु कृतालयम् । श्रुतानुभावं शरणं व्रज भावेन भामिनि ॥ ५० ॥ वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनम् ॥५१॥ देवहुतिरुवाच । विश्वं युगान्ते वटपत्र एकः शेते स्म मायाशिशुरङ्घ्रिपानः । स त्वं भृतो मे जठरेण नाथ कथं नु यस्योदर एतदासीत् ॥५२॥ तं त्वामहं ब्रह्म परं पुमांसं प्रत्यक्स्रोतस्यात्मनि संविभाव्यम् । स्वतेजसा ध्वस्तगुणप्रवाहं वन्दे विष्णुं कपिलं वेदगर्भम् ॥५३॥

इति श्रीभक्तिकौस्तुभे कपिलदेवहुतिसंवादे उत्तरार्द्धो नाम षट्चत्वारिंश आह्निकः ।

सूत उवाच । जलन्धर इति ख्यातो जलमण्डलसम्भवः । आसीदन्तकसङ्काशः तपसा लब्धविक्रमः ॥ १ ॥ तेन देवाः सगन्धर्वाः सयक्षोरगराक्षसाः । निर्जिताः समरे सर्वे ब्रह्मा च भगवानजः ॥ २ ॥ विजित्यदेव सङ्घातं ब्रह्माणं वै जलन्धरः । जगाम देवदेवेशं विष्णुं विश्वजितं प्रभुम् ॥ ३ ॥ तयोः समभवद्युद्धं अविराममहर्निशम् । जलन्धर उवाचेदं निर्जित्य मधुसूदनम् ॥४॥ पराजित्य महादेवं दास्ये दानवपुङ्गवाः । ब्रह्मत्वं वैष्णवत्वं च शङ्करत्वं सुरेप्सितम् ॥ ५ ॥ जलन्धरवचः श्रुत्वा सर्वे ते दैत्यदानवाः । जगर्जुरुच्चैः सन्नह्य स चैवाभिययौ शिवम् ॥ ६ ॥ भवोऽपि दृष्ट्वा दैत्येन्द्रं मेरुकूटमिव स्थितम् । अवध्यत्वमपि श्रुत्वा पादाङ्गुष्ठेन लीलया । रथाङ्गं च महारौद्रं चकाराह महाम्भसि ॥ ७ ॥ पादेन निर्मितं चक्रं जलन्धर महार्णवे । बलवान् यदि चोद्धर्तुं तिष्ठ ह्यग्रे न चान्यथा ॥ ८ ॥ जलन्धर उवाच । बाल्ये च भगवान् विष्णुः तपसैव विनिर्जितः । यौवने च तथा ब्रह्मा सर्षिभिः सुरपुङ्गवैः ॥ ९ ॥ गिरीन्द्रो मन्दरः श्रीमान् नीलो मेरुः सुशोभनः । कण्डूयन-

विनोदेन पातितश्चावलीलया ॥१०॥ निरुद्धा लीलया गङ्गा क्षिप्ता ऐरावतादयः। भृत्यैश्चैव मम स्त्रीणां वज्रावरोधनं कृतम् ॥११॥ वडवाया मुखं भग्नं प्रयत्नेन विना मया। तदैव सकलं विश्वं एकार्णवमभूत् क्षणात् ॥१२॥ सरथो भगवानिन्द्रः क्षिप्तश्च शतयोजनम्। नागपाशे मया बद्धः विष्णुश्च गरुडस्तथा ॥१३॥ महादेवस्य नेत्रान्तात् वह्निलेशलवस्ततः। प्रादहत् दैत्यसंघांस्तान् रथं जालन्धरं तथा ॥ १४ ॥ तदा दैत्योऽतिकृच्छ्रेण सुदर्शनं च दुर्धरम्। स्थापयामास वै स्कन्धे द्विधा भूतश्च तत्क्षणात्। पपात दैत्यो बलवान् अञ्जनाद्रिरिवापरः ॥१५॥ यः पठेत् पाठयेद्वापि जलन्धर विमर्दनम्। शृणुयाच्छ्रावयेद्वापि गाणपत्यमवाप्नुयात् ॥१६॥

इति श्रीभक्तिकौस्तुभे सप्तचत्वारिंश आह्निके सुदर्शनोत्पत्तिर्नाम प्रथमः परिच्छेदः।

देवानामसुरेन्द्राणां रणं परमदारुणम्। अभवत् सर्वभूतानां विनाशकरणं पुरा ॥ १ ॥ पराजितास्तदा देवा देवदेवेश्वरं हरिम्। प्रणम्याहुर्यथावृत्तं शोकसंविग्नमानसाः ॥ २ ॥ दानवैः पीडिताः सर्वे वयं त्वां शरणं

गताः । ब्रह्मास्त्रेण तथान्येन न वध्यास्ते कदाचन ॥३॥ सूर्य्यमण्डलसम्भूतं त्वदीयं चक्रमुद्यतम् । कुण्ठितं ह्यभवच्चाग्रे दधीचस्य महात्मनः ॥ ४ ॥ चक्रं जलन्धरं हन्तुं निर्मितं हि पुरारिणा । लब्ध्वा तत् शिवसान्निध्यात् तेन तान् हन्तुमर्हसि ॥ ५ ॥ निशम्य तद्वचस्तेषां स. हरिश्चक्रभृत् स्वयम् । पूजयामास चेशानं लिङ्गं स्थाप्य हिमाचले ॥ ६ ॥ ततो नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् । प्रतिनामार्पयामास एकैकं इन्दिरालयम् ॥ ७ ॥ हरेः पूजापरीक्षार्थं कमलेषु महेश्वरः । जहार कमलञ्चैकम् हृतपुष्पो हरिस्तदा ॥८॥ ध्यानेन चावगम्यैतत् स्वनेत्रमुज्जहार च। तेन चोद्धृतनेत्रेण पूजयामास शङ्करम् ॥ ६ ॥ ततश्चावततराशु भवो भस्मविभूषितः । कोटिभास्करसङ्काशः जटाजूटविमण्डितः ॥ १० ॥ ज्वालामालावृतो दिव्यः तीक्ष्णदंष्ट्रः भयंकरः । वरदाभयहस्तश्च द्वीपिचर्मोत्तरीयकः ॥ ११ ॥ सुघोरं तं ततो दृष्ट्वा देवाः सेन्द्राः प्रदुद्रवुः । विष्णुश्च परमः प्रीतो ननाम च पुनः पुनः ॥१२॥ चचाल ब्रह्मलोकश्च चकम्पे च वसुन्धरा । ददाह शम्भुतेजश्च प्रान्तं

वै शतयोजनम् । हाहाकारो महानासीत् सर्वतो हि महीतले ॥ १३ ॥ तदा प्राह महादेवः कृपया प्रहसन्निव । चक्रं सुदर्शनं नाम ददामि नव शोभनम् ॥ १४ ॥ रूपं मे भवता दृष्टं सर्वलोकभयङ्करम् । शान्तस्यास्त्रं सदा शान्तं शान्तमूर्त्तिप्रसङ्गतः । शान्तं रणाजिरे शस्त्रं अभीदण्ं दुःखसाधनम् ॥१५॥ एवमुक्त्वा ददौ चक्रं सूर्य्यायुतसमप्रभम् । नेत्रं चावेदितं विष्णोः पस्पर्श तं करेण वै । तदारभ्याभवद् विष्णुः पुण्डराक्षो जनैः स्मृतः ॥१६॥

इति श्रीभक्तिकौस्तुभे सप्तचत्वारिंश आह्निके विष्णोः सुदर्शनलाभो नाम द्वितीयः परिच्छेदः ।

ब्रह्मपुत्रो महातेजा राजा क्षुप इति स्मृतः । अभून्मित्रं दधीचस्य मुनीन्द्रस्य मुनीश्वर ॥ १ ॥ प्रसङ्गाच्चाभवद्वादः सुहृत्पाशनिबद्धयोः । अपिस्वित् नृपतिः श्रेष्ठ उत वा विप्र एव च ॥२॥ क्षुप उवाच । अष्टानां लोकपालानां वपुर्धारयते नृपः । महती देवता चासौ महतश्चापि सुव्रत ॥ ३ ॥ श्रुत्वैतद्वचनं तस्य अनादरकरं मुनिः । अताडयत् क्षुपं मूर्ध्नि दधीचो वाममुष्टिना ॥ ४ ॥ कुलिशेनाहनद्रूपः स्वेच्छयानरविग्रहः । संस्मृत्य भार्गवं चासौ

छिन्नगात्रः पपात ह ॥ ५ ॥ सन्धाय पूर्ववद्देहं दधीचस्याह भार्गवः । मृतसञ्जीवनो मन्त्रो मया लब्धोहि शङ्करात् ॥ ६ ॥ सम्पूज्यैव सुखाराध्यं महादेवं जगद्गुरुम् । अवध्यो भव विप्रर्षे मृत्युञ्जयप्रसादतः ॥ ७ ॥ तस्य तद्वचनं श्रुत्वा तपसाराध्य शङ्करम् । वज्रास्थिर्मृत्युहीनश्च अभवच्चा कुतोभयः ॥ ८ ॥ तदाहनत्पदा मूर्ध्नि क्षुपं च सदसिस्थितम् । क्षुपो दधीचं वज्रेण जघानोरसि कोपतः । मोघोऽभवत्तदा वज्रः शङ्करस्य प्रसादतः ॥ ९ ॥ क्षुपो हरिं समाराध्य स्तवेन संप्रसाद्य च । सन्दर्शनमहाह्लादात् तं ननाम पुनः पुनः ॥१०॥ नरेन्द्र उवाच । भगवन् देवदेवेश विष्णो जिष्णो जगत्पते । शङ्करस्य प्रियो भक्तो दधीच इति विश्रुतः ॥ ११ ॥ ब्राह्मणत्वमदोत्सिक्तो वामपादेन मूर्द्धनि । ताडयामास सावज्ञं मां नृपं सदसिस्थितम् ॥ १२ ॥ उवाच च मदाविष्टः सदाहं अकुतोभयः । त्रिशूलिनो महेशस्य प्रसादाद्धि पिनाकिनः ॥१३॥ जेतुमिच्छामि विप्रं तं त्वजेय जगदीश्वर । हितं मम तथा कर्त्तुं त्वमर्हसि जनार्दन ॥ १४ ॥ विष्णुरुवाच । सर्वत्र रुद्रभक्ता-

नाम् अभयं सर्वदा नृप। नीचानां गुणहीनानां दधीचस्यास्य किं पुनः ॥१५॥ तस्मात् तव महाभाग विजयो नैव भूपते। तथाप्येव यतिष्येऽहं अभीष्टपूरणाय ते ॥ १६ ॥ भविता तस्य शापेन प्रजापतिपतेर्मखे। विनाशो मम राजेन्द्र सकलैस्त्रिदशैः सह ॥१७॥ भक्तभक्तस्तदा विष्णुर्दधीचस्याश्रमं ययौ। विप्रस्य रूपमास्थाय तं विप्रं समुवाच ह ॥ १८ ॥ भो भो दधीच विप्रर्षे भवार्च्चनरताव्यय। वरमेकं वृणे त्वत्तः तं भवान् दातुमर्हति ॥१९॥ दधीचः प्राह सर्वज्ञः विष्णुना याचितस्तदा। ज्ञातं तवेप्सितं सर्वं द्विजरूपं त्यजाधुना ॥२०॥ न बिभेमि जगत्यस्मिन् देवदैत्यद्विजादपि। प्रभावाद्देवदेवस्य शङ्करस्य पिनाकिनः॥२१॥श्रीभगवानुवाच। दधीचे तव नास्त्येव जगत्यत्र भयं क्वचित्। भवार्च्चनरतो यस्मात् ततः सर्वज्ञ एव च ॥ २२ ॥ ममानुरोधनाच्चैव सकृद् वक्तुं त्वमर्हसि। क्षुपं प्रति बिभेमीति सदस्यन्तः नमोऽस्तु ते ॥२३॥ प्रार्थितोऽपि हरिं प्राह न मे भीतिः कुतश्चन। दिधक्षुः शिवभक्तं तं विष्णुश्चक्रं ससर्ज ह ॥२४॥ कुण्ठितं चाभवच्चक्रम् शिवभक्तो जगाद च।

भवस्य निर्मितं चक्रं न कदापि हिनस्ति माम् । ब्रह्मास्त्रैश्च तथान्यैश्च प्रयत्नं कर्त्तुमर्हसि ॥२५॥ तस्य तद्वचनं श्रुत्वा दृष्ट्वा मोघं सुदर्शनम् । ससर्ज ह पुनस्तस्मै चास्त्राणि वारिधारया ॥२६॥ दधीचस्तु हरं स्मृत्वा कुशमुष्टिं ससर्ज च । त्रिशूलं ह्यभवद्दिव्यं कालाग्निसदृशप्रभम् ॥२७॥ आयुधानि विसृष्टानि नारायणपुरःसरैः । शान्तानि चाभवन् सद्यः प्रणेमुस्त्रिशिखं भयात् । दुद्रुवुश्चात्तवीर्यास्ते त्रिदशा ये मदोद्धताः ॥२८॥ ततोऽसृजत् स्वदेहाद्धि विष्णुश्च पुरुषोत्तमः । आत्मनः सदृशान् दिव्यान् लक्षलक्षायुतान् गणान् । प्रददाह च तान् सर्वान् तत्क्षणात् मुनिसत्तमः ॥२९ ॥ तस्य विस्मापनार्थाय विश्वमूर्त्तिरभूद्धरिः । विहस्य स हरिं प्राह मायां त्यज वृथा मयि ॥३०॥ दिव्यं ददामि ते चक्षुः पश्यैतस्मिन् कलेवरे । अभिव्यक्तं त्वया सार्द्धम् ब्रह्मरुद्रान्वितं जगत् ॥३१॥ पुनः प्राह जितं विष्णुं स्मृत्वा शिवपदाम्बुजम् ॥३२॥मायया ह्यनया किम्वा मन्त्रशक्त्याथवा तव । वस्तुशक्त्याथवा विष्णो ध्यानशक्त्याथवा पुनः । त्यक्त्वा मायामिमां तस्माद् योद्धुमर्हस्यशेषतः॥३३॥

निरीहः संस्थितो विष्णुर्ब्रह्मणा वारितस्तदा । ननाश निर्जितो विष्णुः प्रणिपत्य महामुनिम् ॥३४॥ दधीचमभिवन्द्याथ प्रार्थयामास स नृपः । क्षमध्वं मम दौरात्म्यं अज्ञानाच्च कृतं तु यत् ॥३५॥ प्रसीद परमेशान प्रसीद शिवसेवक । दुर्लभा सर्वथा भक्तिर्मद्विधैः क्षत्रियाधमैः ॥ ३६ ॥ दधीचः परमः प्रीतस्तत आह नृपं प्रति । ब्राह्मणो विष्णुना पूज्यः किं पुनर्नृपदैवतैः ॥३७॥ शशाप त्रिदशान् विष्णुं शिवद्रोहमनुस्मरन् । दक्षस्य च मखे देवा नारायण पुरःसराः । रुद्रकोपाग्निनाध्वस्ता भवन्त्वथ मुनीश्वराः ॥३८॥ शप्त्वैवं सामरं सर्पिं विष्णुं दधीचसत्तमः । अनुगृह्य नृपं चाथ प्रविवेश निजोटजम् ॥३९॥ तत्स्थानं सुमहत्तीर्थं स्थानेश्वर इति स्मृतः । स्थानेश्वरमनुप्राप्य शिवसायुज्यमाप्नुयात् ॥४०॥ य इदं कीर्त्तयेद्दिव्यं दधीचक्षुपविग्रहम् । अपमृत्युं विनिर्जित्य ब्रह्मलोकं प्रयाति सः ॥४२॥ दधीचिविष्णुसंग्रामं सङ्कीर्त्य यो रणे स्थितः । तस्य मृत्युभयं नास्ति विजयी सर्वथा भवेत् ॥४२॥

इति श्रीभक्तिकौस्तुभे सप्तचत्वारिंश आह्निके दधीचविष्णुसंवादो नाम तृतीयः परिच्छेदः ।

श्रीरुद्र उवाच । यूयं वेदिपदः पुत्रा विदितं वश्चिकीर्षितम् । अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम्॥१॥यः परं रंहसः साक्षात्त्रिगुणाज्जीवसंज्ञितात् । भगवन्तं वासुदेवं प्रपन्नः स प्रियोहि मे ॥ २ ॥ स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चतामेति ततः परं हि माम् । अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये ॥ ३ ॥ अथ भागवता यूयं प्रियाः स्थ भगवान्यथा । न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ४ ॥ इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् । निःश्रेयसकरं चापि श्रूयतां तद्वदामि वः ॥ ५ ॥ जितं त आत्मविद्धुर्य स्वस्तये स्वस्तिरस्तु मे । भवता राधसा राद्धं सर्वस्मा आत्मने नमः ॥ ६ ॥ नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने । वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे ॥ ७ ॥ संकर्षणाय सूक्ष्माय दुरन्तायान्तकाय च । नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने ॥ ८ ॥ नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने । नमः परमहंसाय पूर्णाय निभृतात्मने ॥ ९ ॥ स्वर्गापवर्गद्वाराय नित्यं शुचिपदे नमः । नमो

हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ १० ॥ नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे । तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ११ ॥ सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे । नमस्त्रैलोक्यपालाय सहओजोबलाय च ॥१२॥ अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने । नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ १३ ॥ प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे । नमो धर्मविपाकाय मृत्यवे दुःखदाय च ॥ १४ ॥ नमस्ते आशिषामीश मनवे कारणात्मने । नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ॥ १५ ॥ पुरुषाय पुराणाय सांख्ययोगेश्वराय च । ब्रह्मणे परिपूर्णाय वैकुण्ठपतये नमः ॥ १६ ॥ शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने । चेत आकूतिरूपाय नमो वाचोविभूतये ॥१७॥ दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् । रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम् ॥ १८ ॥ स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम् । चार्वायतचतुर्बाहु सुजातरुचिराननम् ॥ १९ ॥ पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम् । सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ॥ २० ॥ प्रीतिप्रहसितापांग-

मलकैरुपशोभितम् । लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ॥ २१ ॥ स्फुरत्किरीटवलयहारनूपुरमेखलम् । शंखचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ॥ २२ ॥ सिंह स्कन्धत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम् । श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ॥ २३ ॥ पूररेचकसंविग्नवलिवल्गुदलोदरम् । प्रतिसंक्रामयद्विश्वं नाभ्याऽवर्तगभीरया ॥२४॥ श्यामश्रोण्याधिरोचिष्णुदुकूलस्वर्णमेखलम् । समचार्वङ्घ्रिजंघोरुनिम्नजानुसुदर्शनम् ॥ २५ ॥ पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता । प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ॥ २६ ॥ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् । यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ २७ ॥ भवान्भक्तिमतां लभ्यो दुर्लभः सर्वदेहिनाम् । स्वाराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः ॥ २८ ॥ तं दुराराध्यमाराध्य सतामपि दुरापया । एकान्तभक्त्या को वाञ्छेत्पादमूलं विना बहिः ॥ २९ ॥ यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते । विश्वं विध्वंसयन्वीर्यशौर्यविस्फूर्जितभ्रुवा ॥ ३० ॥ क्षणार्धेनापि

तुलये न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसंगस्य मर्त्यानां किमुताशिषः ॥३१॥ अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम् । भूतेष्वनुक्रोशसुसत्त्वशीलिनां स्यात्संगमोऽनुग्रह एष नस्तव ॥ ३२ ॥ न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत् । यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम् ॥ ३३ ॥ यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् । तत्त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥ ३४ ॥ यो माययेदं पुरुरूपयासृजद्विभर्ति भूयः क्षपयत्यविक्रियः । यद्भेदबुद्धिः सदिवात्मदुःस्थया तमात्मतन्त्रं भगवन्प्रतीमहि ॥ ३५ ॥ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये । भूतेन्द्रियान्तःकरणोपलक्षितं वेदे च तंत्रे च त एव कोविदाः ॥३६॥ त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते । महानहंखंमरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥३७॥ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन । अथो विदुस्तं पुरुषं सन्तमन्तर्भुङ्क्ते हृषीकैर्मधु सारघं

यः॥३८॥स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः। भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाऽविषह्यः ॥३९॥कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानव्ययमानकेतनः। विशंकयास्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश ॥४०॥ अथ त्वमसि नो ब्रह्मन्परमात्मन्विपश्चिताम्। विश्वं रुद्रभयत्रस्तमकुतश्चिद्भया गतिः ॥४१॥ इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः। स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥४२॥ तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम्। पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥४३॥ योगादेशमुपासाद्य धारयन्तो मुनिव्रताः। समाहितधियः सर्व एतदभ्यसतादृताः ॥४४॥ इदमाह पुरास्माकं भगवान्विश्वसृक्पतिः। भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ॥४५॥ ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः। अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ॥४६॥ अथेदं नित्यदा युक्तो जपन्नवहितः पुमान्। अचिराच्छ्रेय आप्नोति वासुदेवपरायणः ॥४७॥ श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम्। सुखं तरति दुष्पारं

ज्ञाननौर्व्यसनार्णवम् ॥४८॥ य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम्। अधीयानो दुराराध्यं हरिमाराधयत्यसौ ॥४९॥ विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरम्। मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥५०॥ य इदं कल्य उत्थाय प्राञ्जलिः श्रद्धयाऽन्वितः। शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥५१॥

इति श्रीभक्तिकौस्तुभे रुद्रगीतं नाम अष्टचत्वारिंश आह्निकः।

मैत्रेय उवाच। पुरा विश्वसृजां सत्रे समेताः परमर्षयः। तथामरगणाः सर्वे सानुगा मुनयोऽग्नयः ॥ १ ॥ तत्र प्रविष्टमृषयो दृष्ट्वार्कमिव रोचिषा। भ्राजमानं वितिमिरं कुर्वन्तं तन्महत्सदः ॥ २ ॥ उदतिष्ठन् सदस्यास्ते स्वधिष्ण्येभ्यः सहाग्नयः। ऋते विरिञ्चं शर्वं च तद्भासाक्षिप्तचेतसः ॥ ३ ॥ प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः। उवाच वामं चक्षुर्भ्यामभिवीक्ष्य दहन्निव ॥४॥ श्रूयतां ब्रह्मर्षयो मे सहदेवाः सहाग्नयः। साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात् ॥५॥ अयं तु लोकपालानां यशोघ्नो निरपत्रपः। सद्भि-

राचरितः पन्था येन स्तब्धेन दूषितः ॥ ६ ॥ एष मे शिष्यतां प्राप्तो यन्मे
दुहितुरग्रहीत् । पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत् ॥ ७॥ गृहीत्वा
मृगशावाक्ष्याः पाणिं मर्कटलोचनः । प्रत्युत्थानाभिवादार्हे वाचाऽप्यकृत
नोचितम् ॥ ८ ॥ लुप्तक्रियायाशुचये मानिने भिन्नसेतवे । अनिच्छन्नप्यदां
बालां शूद्रायेवोशतीं गिरम् ॥ ६ ॥ प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः ।
अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन् ॥१०॥ चिताभस्मकृतस्नानः प्रेत-
स्रङ्न्रस्थिभूषणः । शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः ॥११॥ त्रिपुंड्र-
धृक् त्रिशूली च त्रिनेत्रः सर्पभूषणः । पतिः प्रमथभूतानां तमोमात्रात्मका-
त्मनाम् ॥ १२ ॥ तस्मा उन्मादनाथाय नष्टशौचाय दुर्हृदे । दत्ता बत मया
साध्वी चोदिते परमेष्ठिना ॥१३॥ विनिन्द्यैवं स गिरिशमप्रतीपमवस्थितम् ।
दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे ॥ १४ ॥ अयं तु देवयजन इन्द्रोपे-
न्द्रादिभिर्भवः । सह भागं न लभतां देवैर्देवगणाऽधमः ॥१५॥ विज्ञाय शापं
गिरिशानुगाग्रणीर्नन्दीश्वरो रोषकषायदूषितः । दक्षाय शापं विससर्ज

दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥ १६ ॥ य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि । द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥ १७ ॥ गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया । कर्मतन्त्रं वितनुते वेदवादविपन्नधीः ॥१८॥ बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः । स्त्रीकामः सोऽस्त्वतितरां दक्षो बस्तमुखोऽचिरात् ॥१९॥ विद्याबुद्धिरविद्यायां कर्ममय्यामसौ जडः । संसरन्त्विह ये चामुमनु शर्वावमानिनम् ॥ २० ॥ गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा । मथ्ना चोन्मथितात्मानः संमुह्यन्तु हरद्विषः ॥ २१ ॥ सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः । वित्तदेहेन्द्रियारामा याचका विचरन्त्विह ॥ २२ ॥ तस्यैवं ददतः शापं श्रुत्वा द्विजकुलाय वै । भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् ॥ २३ ॥ भवव्रतधरा ये च ये च तान् समनुव्रताः । पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ॥ २४ ॥ नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः । विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ २५ ॥ सदा विद्विपतोरेवं कालो वै ध्रियमाणयोः । जामातुः

श्वशुरस्यापि सुमहानतिचक्रमे ॥ २६ ॥ यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना । प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् ॥ २७ ॥ इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च । बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ॥ २८ ॥ सत्युवाच । प्रजापतेस्ते श्वशुरस्य साम्प्रतं निर्यापितो यज्ञमहोत्सवः किल । वयं च तत्राभिसराम वाम भो यत्रार्थिताऽमी विबुधा व्रजन्ति हि ॥२९॥ कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेंगते । अनाहुता अप्यभियन्ति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम् ॥ ३० ॥ श्रीभगवानुवाच । त्वयोदितं शोभनमेव शोभने अनाहुता अप्यभियन्ति बन्धुषु । ते यद्यनुत्पादितदोषदृष्टयो बलीयसाऽनात्म्यमदेन मन्युना ॥३१॥ विद्यातपोवित्तवपुर्वयःकुलैः सतां गुणैः षड्भि रसत्तमेतरैः । स्मृतौ हतायां भृतमानदुर्दृशः पश्यन्ति मत्ता न हि धाम भूयसाम् ॥ ३२ ॥ नैतादृशानां स्वजनव्यपेक्षया गृहान्प्रतीयादनवस्थितात्मनाम् । येऽभ्यागतान् वक्रधियाऽभिचक्षते आरोपितभ्रूभिरमर्षणाक्षिभिः ॥३३॥ तथाऽरिभिर्न व्यथते शिलीमुखैः शेतेऽर्दितांगो

हृदयेन दूयता । स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्म-ताडितः ॥३४॥ व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियात्मजानामसि सुभ्रु संमता । अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः ॥३५॥ पापच्यमानेन हृदातुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् । अकल्प एषामधिरोढुमञ्जसा पदं परं द्वेष्टि यथाऽसुरा हरिम् ॥३६॥ प्रत्युद्गमप्रश्र-यणाभिवादनं विधीयते साधु मिथः सुमध्यमे । प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥ ३७ ॥ सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । सत्त्वे च तस्मिन् भगवान्वासुदेवो ह्यधोऽक्षजो मे मनसा विधीयते ॥३८॥तत्ते निरीक्ष्यो न पिताऽपि देहकृद्दक्षो मम द्विट् तदनुव्रताश्च ये । यो विश्वसृग्यज्ञगतं वरोरु मामनागसं दुर्वचसाऽकरोत्तिरः ॥३९॥ यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति । संभावितस्य स्वजनात्पराभवो यदा स सद्यो मरणाय कल्पते ॥४०॥ सुहृद्दिदृक्षाप्रतिघात दुर्मनाः स्नेहाद्रुदन्त्यश्रुकलाऽतिविह्वला । भवं भवान्य प्रतिपूरुषं रुषा

प्रधच्यतीवेक्षत जातवेपथुः ॥४१॥ ततो विनिःश्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा । पित्रोरगात्स्त्रैणविमूढधीर्गृहान् प्रेम्णात्मनो योऽर्धं मदात्सतांप्रियः ॥४२॥ तामागतां तत्र न कश्चनाऽऽद्रियद्विमानितां यज्ञकृतो भयाज्जनः । ऋते स्वसॄर्वै जननीं च सादराः प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा ॥४३॥ अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ । अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा । जगर्ह चाऽमर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् ॥ ४४ ॥ श्रीदेव्युवाच । न यस्य लोकेऽस्त्यतिशायनः प्रियस्तथाप्रियो देहभृतां प्रियात्मनः । तस्मिन्समस्तात्मनि मुक्तवैरके ऋते भवन्तं कतमः प्रतीपयेत् ॥४५॥ दोषान्परेषां हि गुणेष्वसाधवो गृह्णन्ति केचिन्न भवादृशा द्विज । गुणांश्च फल्गून्बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम् ॥ ४६ ॥ नाश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिन्दा कुणपात्मवादिषु । सेर्ष्यं महापूरुषपादपांसुभि र्निरस्ततेजस्सु तदेव शोभनम् ॥ ४७ ॥ यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हन्ति तत् ।

पवित्रकीर्तिं तमलंघ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः ॥४८॥ यत्पाद-पद्मं महतां मनोऽलिभिर्निषेवितं ब्रह्मरसासवार्थिभिः। लोकस्य यद्वर्षति चाशिषोऽर्थिनस्तस्मै भवान्द्रुह्यति विश्वबन्धवे ॥४६॥ किंवा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाः श्मशाने। तन्माल्यभस्मनृकपा-ल्यऽवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम् ॥५०॥ कर्णौ पिधाय निरियाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने । छिन्द्यात्प्रसह्य रुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स धर्मः ॥५१॥ अतस्त-वोत्पन्नमिदं कलेवरं न धारयिष्ये शितिकण्ठगर्हिणः। जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्धरणं प्रचक्षते ॥५२॥ न वेदवादाननुवर्तते मतिः स्व एव लोके रमतो महामुनेः। यथा गतिर्देवमनुष्ययोः पृथक् स्व एव धर्मे न परं क्षिपेत्स्थितः ॥५३॥ कर्म प्रवृत्तं च निवृत्तमप्यृतं वेदे विवि-च्योभयलिंगमाश्रितम्। विरोधि तद्यौगपदैककर्तरि द्वयं तथा ब्रह्मणि कर्म नर्च्छति ॥५४॥ मा वः पदव्यः पितरस्मदास्थिता या यज्ञशालासु न धूम-

वर्त्मभिः। तदन्नतृप्तैरसुभृद्भिरीडिता अव्यक्तलिंगा अवधूतसेविताः ॥५५॥ नैतेन देहेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना। व्रीडा ममाभूत्कुजनप्रसंगतस्तज्जन्मधिग्यो महतामवद्यकृत् ॥ ५६ ॥ गोत्रं त्वदीयं भगवान् वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः। व्यपेतनर्मस्मितमाशु तद्ध्यहं व्युत्स्रक्ष्य एतत्कुणपं त्वदंगजम् ॥५७॥ ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम्। ददर्श देहो हतकल्मषः सती सद्यः प्रजज्वाल समाधिजाग्निना ॥ ५८ ॥ तत् पश्यतां खे भुवि चाद्भुतं महद्धा हेति वादः सुमहानजायत। अहो अनात्म्यं महदस्य पश्यत प्रजापते र्यस्य चराचरं प्रजाः ॥ ५९ ॥ वदत्येवं जने सत्या दृष्ट्वाऽसुत्यागमद्भुतम्। दक्षं तत्पार्षदा हन्तुं उदतिष्ठन्नुदायुधाः ॥६०॥ तेषामापततां वेगं निशाम्य भगवान् भृगुः। यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ॥ ६१ ॥ अध्वर्युणा हूयमाने देवा उत्पेतु रोजसा। ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ॥६२॥ तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः। हन्यमाना दिशो भेजुरुशद्भि र्ब्रह्मतेजसा

॥६३॥ मैत्रेय उवाच । भवो भवान्या निधनं प्रजापते रसत्कृताया अवगम्य नारदात् । स्वपार्षदानां च तदध्वरर्भुभिर्विद्रावितुं क्रोधमपारमादधे ॥६४॥ क्रुद्धः सुदष्टौष्ठपुटः स धूर्जटिर्जटां तडिद् वह्निसटोग्ररोचिषम् । उत्कृत्य रुद्रः सहसोत्थितो हसन् गम्भीरनादो विससर्ज तां भुवि ॥६५॥ ततोऽतिकायस्तनुवा स्पृशन्दिवं सहस्रबाहुर्घनरुक् त्रिसूर्यदृक् । करालदंष्ट्रो ज्वलदग्निमूर्द्धजः कपालमाली विविधोद्यतायुधः ॥६६॥ तं किं करोमीति गृणन्तमाह बद्धाञ्जलिं भगवान् भूतनाथः । दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्र भटांशको मे ॥६७॥ आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम् । मेने तदात्मानमसंगरंहसा महीयसां तात सहःसहिष्णुम् ॥६८॥ अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत् सुभैरवम् । उद्यम्य शूलं जगदन्तकान्तकं स प्राद्रवद्घोषणभूषणाङ्घ्रिः ॥ ६९ ॥ अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् । तमः किमेतद्धि कुत रजोऽभूत् इति द्विजा द्विजपत्न्यश्च दध्युः ॥७०॥ वाता न वान्ति न हि सन्ति दस्यवः प्राचीनबर्हि-

जीवतीहोग्रदण्डः। गावो न काल्यन्त इदं कुतो रजो लोकेऽधुना किं प्रलयाय कल्पते ॥ ७१ ॥ प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचु र्विपाको वृजिनस्यैष तस्य। यत् पश्यन्तीनां दुहितॄणां प्रजेशः सुतां सतीं मवदध्यावनागाम् ॥७२॥ तावत् स रुद्रानुचरै र्मखो महास्त्रानायुधै र्वामनकै रुदायुधैः। पिंगैः पिशंगै र्मकरोदराननैः पर्याद्रवद्भि र्विदुरान्वरुध्यत ॥ ७३ ॥ केचिद्बभञ्जुः प्राग्वंशं पत्नीशालां तथापरे। सद आग्नीध्रशालां च तद्विहारं महानसम् ॥ ७४ ॥ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन्। कुण्डेष्वमूत्रयन् केचिद् बिभिदुर्वेदिमेखलाः ॥ ७५ ॥ अबाधन्त मुनीनन्य एके पत्नीरतर्जयन्। अपरे जगृहु र्देवान् प्रत्यासन्नान् पलायितान् ॥ ७६ ॥ भृगुं बबन्ध मणिमान् वीरभद्रः प्रजापतिम्। चण्डीशः पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥ ७७ ॥ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः। तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥ ७८ ॥ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान् भवः। भृगोर्लुलुञ्चे सदसि योऽहसत् श्मश्रु दर्शयन्

॥७९॥ भगस्य नेत्रे भगवान् पातितस्य रुषा भुवि । उज्जहार सदःस्थोऽदणा यः शपन्तमसूसुचत् ॥ ८० ॥ पूष्णश्चापातयद्दन्तान् कालिंगस्य यथा बलः । शप्यमाने गरिमणि योऽहसद् दर्शयन्दतः ॥ ८१ ॥ आक्रम्योरसि दक्षस्य शितधारेण हेतिना । छिन्दन्नपि तदुद्धर्त्तुं नाशक्नोत् त्र्यम्बकस्तदा ॥ ८२ ॥ शस्त्रैरस्त्रान्वितैरेव मणिभिन्नत्वचं हरः । विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥८३॥ दृष्ट्वा संज्ञपनं योगं पशूनां स पति र्मखे । यजमानपशोः कस्य कायात्तेनाहरच्छिरः ॥८४॥

इति श्रीभक्तिकौस्तुभे दक्षमखभंगो नाम एकोनपञ्चाश आह्निकः ।

मैत्रेय उवाच । अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः । स्वयंभुवे नमस्कृत्य कार्त्स्न्ये नैतन्न्यवेदयन् ॥१॥ उपलभ्य पुरैवैतद् भगवानब्जसम्भवः । नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ॥ २ ॥ तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसि । क्षेमाय तत्र सा भूयान्न प्रायेण बुभूषताम् ॥ ३ ॥ अथापि यूयं कृतकिल्बिषा भवं ये बर्हिषो भागभाजं परादुः । प्रसादयध्वं

परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्मम् ॥ ४ ॥ नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम् । विदुः प्रमाणं बलवीर्ययोर्वा तस्यात्मतन्त्रस्य कः पापं विधित्सेत् ॥ ५ ॥ स इत्थमादिश्य सुरानजस्तैः समन्वितः पितृभिः सप्रजेशैः । ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ ६ ॥ ददृशुर्विबुधारम्यां अलकां नाम वै पुरीम् । नन्दा चालकनन्दा च सरितो बाह्यतः पुरः । तीर्थपादपदाम्भोजरजसाऽतीव पावने ॥ ७ ॥ मुमुक्षुशरणं शम्भुम् त्यक्तामर्षमिवान्तकम् । सनन्दाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम् ॥ ८ ॥ उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् । नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् ॥ ९ ॥ ब्रह्मोवाच । जाने त्वामीशं विश्वस्य जगतो योनिबीजयोः । शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥ १० ॥ त्वं कर्मणां मंगलमंगलानां कर्त्तुः स्म लोकं तनुषे स्वः परं वा । अमंगलानां च तमिस्रमुल्बणं विपर्ययः केन तदेव कस्यचित् ॥ ११ ॥ कुर्वध्वरस्योद्धरणं हतस्य भोस्त्वयाऽसमाप्तस्य मनोः प्रजा-

पतेः । न यत्र भागं तव भागिनो ददुः कुयज्विनो येन मखो निनीयते ॥ १२ ॥ श्रीमहादेव उवाच । प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः । मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः ॥ १३ ॥ पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् । देवा प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ॥ १४ ॥ बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः । भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रुर्भृगुर्भवेत् ॥ १४ ॥ सन्धीयमाने शिरसि दक्षो रुद्राभिवीक्षितः । सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ॥ १६ ॥ भवस्तवाय कृतधीर्नाशक्नोदनुरागतः । औत्कण्ठ्याद् बाष्पकलया संपरेतां सुतां स्मरन् ॥ १७ ॥ दक्ष उवाच । भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि धृतो यदपि प्रलब्धः । न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १८ ॥ विद्यातपोव्रतधरान्मुखतः स्म विप्रान् ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्राक् । तद्ब्राह्मणान् परमसर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १९ ॥ योऽसौ मया अविदिततत्त्वदृशा सभायां क्षिप्तो

दुरुक्ति-विशिखै रगणय्य तन्माम्। अर्वाक् पतन्तमर्हत्तम निन्दया पादृष्ट्या-
द्रैया स भगवान् स्वकृतेन तुष्येत् ॥ २० ॥ मैत्रेय उवाच। क्षमाप्यैवं स
मीढ्वांसं ब्रह्मणा चानुमन्त्रितः। कर्म सन्तानयामास सोपाध्यायर्त्विगग्निभिः
॥ २१ ॥ तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश। मुष्णंस्तेज उपानीत
स्तार्क्ष्येण स्तोत्रवाजिना ॥ २२ ॥ श्यामो हिरण्यरशनोऽर्क किरीटजुष्टो
नीलालकभ्रमर-मण्डित-कुण्डलास्यः। कम्ब्वब्जचक्रशरचापगदाऽसि चर्मव्यग्रै-
र्हिरण्मयभुजैरिव कर्णिकारः ॥ २३ ॥ वक्षस्यधिश्रितवधुर्वनमाल्युदारहासा-
वलोककलया रमयंश्च विश्वम्। पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतात-
पत्रशशिनोपरिरज्यमानः ॥ २४ ॥ तमुपागतमालक्ष्य सर्व्वे सुरगणादयः।
मूर्ध्ना धृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ २५ ॥ श्रीभगवानुवाच। अहं
ब्रह्मा च शर्वश्च जगतः कारणं परम्। आत्मेश्वरः उपद्रष्टा स्वयं दृगवि-
शेषणः ॥ २६ ॥ आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज। सृजन्
रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम् ॥ २७ ॥ तस्मिन् ब्रह्मण्यद्वितीये

केवले परमात्मनि । ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति ॥ २८ ॥ यथा पुमान्न स्वांगेषु शिरःपाण्यादिषु क्वचित् । पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः ॥२९॥ त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥ ३० ॥ मैत्रेय उवाच । एवं भगवतादिष्टः प्रजापतिपतिं हरिम् । अर्च्चित्वा क्रतुना स्वेन देवानुभयतोऽयजत् ॥ ३१ ॥ एवं दाक्षायणी हित्वा सती पूर्वकलेवरम् । जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम ॥ ३२ ॥ तमेव दयितं भूय आवृङ्क्ते पतिमम्बिका । अनन्यभावैकगतिं शक्तिः सुप्तेव पूरुषम् ॥ ३३ ॥ इदं पवित्रं परमीशचेष्टितं यशस्यमायुष्यमघौघमर्षणम् । यो नित्यदाऽकर्ण्य नरोऽनुकीर्त्तयेद्धुनोत्यघं कौरव भक्तिभावतः ॥ ३४ ॥

इति श्रीभक्तिकौस्तुभे पञ्चाश आह्निके विष्णुरुद्राभेदज्ञानेन दक्षमखसमापनं नाम प्रथमः परिच्छेदः ।

गजेन्द्र उवाच । नमो भगवते तस्मै यत एतच्चिदात्मकम् । पुरुषायादिबीजाय परेशायाभिधीमहि ॥१ ॥ यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।

योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवम् ॥२॥ यः स्वात्मनीदं निजमायया-
र्पितं क्वचिद्विभातं क्व च तत्तिरोहितम्। अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्म-
मूलोऽवतु मां परात्परः ॥३॥ कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च
सर्वहेतुषु। तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥४॥
न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम्। यथा
नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ५ ॥ दिदृक्षवो यस्य
पदं सुमंगलं विमुक्तसंगा मुनयः सुसाधवः। चरन्त्यलोकव्रतमव्रणं वने
भूतात्मभूताः सुहृदः स मे गतिः ॥ ६ ॥ न विद्यते यस्य च जन्म कर्म वा
न नामरूपे गुणदोष एव वा। तथाऽपि लोकाप्ययसंभवाय यः स्वमायया
तान्यनुकालमृच्छति ॥ ७ ॥ तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये। अरूपा-
योरुरूपाय नम आश्चर्यकर्मणे ॥ ८ ॥ नम आत्मप्रदीपाय साक्षिणे परमा-
त्मने। नमो गिरां विदूराय मनसश्चेतसामपि ॥ ९ ॥ सत्त्वेन प्रतिलभ्याय
नैष्कर्म्येण विपश्चिता। नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ १० ॥

नमः शान्ताय घोराय मूढाय गुणधर्मिणे । निर्विशेषाय साम्याय नमो ज्ञान-घनाय च ॥ ११ ॥ क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे । पुरुषायात्म-मूलाय मूलप्रकृतये नमः ॥ १२ ॥ सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे । असता छाययोक्ताय सदाभासाय ते नमः ॥१३॥ नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय । सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥१४॥ गुणारणिच्छन्नचिदुष्मपाय तत्क्षोभविस्फूर्जितमानसाय । नैष्कर्म्यभावेन विवर्जितागमस्वयंप्रकाशाय नमस्करोमि॥१५॥ मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय । स्वांशेन सर्वतनुभृन्मनसि प्रतीत प्रत्यग्दृशे भगवते बृहते नमस्ते ॥१६॥ आत्मात्मजाप्तगृहवित्तजनेषु सक्तै दुष्प्रापणाय गुणसंगविवर्जिताय । मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥१७॥ यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति । किं त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥ १८ ॥ एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै

भगवत्प्रपन्नाः । अत्यद्भुतं तच्चरितं सुमंगलं गायन्त आनन्दसमुद्रमग्नाः ॥१९॥ तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् । अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥ २० ॥ यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः । नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥२१॥ यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः । तथा यतोऽयं गुणसंप्रवाहो बुद्धिर्मनः खानि शरीरसर्गः ॥ २२ ॥ स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः । नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः ॥२३॥ जिजीविषे नाहमिहाऽमुया किमन्तर्बहिश्चावृतयेभयोन्या । इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम् ॥ २४ ॥ सोऽहं विश्वसृजां विश्वमविश्वं विश्ववेदसम् । विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २५ ॥ योगरन्धितकर्माणो हृदि योगविभाविते । योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥२६॥ नमो नमस्तुभ्यमसह्यवेग-शक्तित्रयायाखिलधीगुणाय । प्रपन्नपालाय दुरन्त-

शक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥ २७ ॥ नायं वेद स्वमात्मानं यच्छ-क्त्याऽहंधिया हतम् । तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम् ॥ २८ ॥ श्रीशुक उवाच । एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिंगभिदाऽभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ॥ २९ ॥ सोऽन्तः सरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् । उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते ॥ ३० ॥ तं वीक्ष्य पीडितमजः सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार । ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं संपश्यतां हरिरमूमुचदुच्छ्रियाणाम् ॥ ३१ ॥ श्रीभगवानुवाच । ये मां स्तुवन्त्यनेनांग प्रतिबुध्य निशात्यये । तेषां प्राणात्यये चाहं ददामि विमलां मतिम् ॥ ३२ ॥

इति श्रीभक्तिकौस्तुभे पञ्चाश आह्निके गजेन्द्रमोक्षणस्तुतिर्नाम द्वितीयः परिच्छेदः ।

प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ । वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥१॥ जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः । सुरुचिः प्रेयसी

पत्युर्नेतरा यत्सुतो ध्रुवः ॥ २ ॥ एकदा सुरुचेः पुत्रममङ्कमारोप्य लालयन् । उत्तमं नारूरुक्षन्तं ध्रुवं राजाऽभ्यनन्दत ॥ ३ ॥ तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम् । सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥ ४ ॥ न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति । न गृहीतो मया यत्त्वं कुक्षावपि नृपात्मजः ॥ ५ ॥ बालोऽसि बत नात्मानमन्यस्त्रीगर्भसंभृतम् । नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः ॥६॥ तपसाराध्य पुरुषं तस्यैवानुग्रहेण मे । गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम् ॥ ७ ॥ मैत्रेयउवाच । मातुः सपत्न्याः सुदुरुक्तिविद्धः श्वसन्रुषादण्डहतो यथाहिः । हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन्सकाशम् ॥ ८ ॥ तं निःश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदूह्य बालम् । निशम्य तत्पौरमुखान्नितान्तं सा विव्यथे यद्गदितं सपत्न्याः ॥ ९ ॥ सोत्सृज्य धैर्यं विललाप शोकदावाग्निना दावलतेव बाला । वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह ॥१०॥ दीर्घं श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला । माऽमङ्गलं

तात परेष्वमंस्था भुङ्क्ते जनो यत्परदुःखदस्तत् ॥११॥ सत्यं सुरुच्याभिहितं भवान्मे यद्दुर्भगाया उदरे गृहीतः। स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम् ॥१२॥ आतिष्ठ तत्तात विमत्सरस्त्वमुक्तं समात्राऽपि यदव्यलीकम्। आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा ॥१३॥ तमेव वत्साऽऽश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम्। अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पुरुषम्॥१४॥ नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि कञ्चन। यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग विमृग्यमाणया ॥१५॥ एवं संजल्पितं मातुराकर्ण्यार्थागमं वचः। संनियम्यात्मनात्मानं निश्चक्राम पितुः पुरात् ॥१६॥ नारद उवाच। नाधुनाप्यवमानं ते सन्मानं वापि पुत्रक। लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु ॥ १७ ॥ विकल्पे विद्यमानेऽपि न ह्यसंतोषहेतवः। पुंसो मोहमृते भिन्ना यल्लोके निजकर्मभिः ॥१८॥ परितुष्येत्ततस्तात तावन्मात्रेण पूरुषः। दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः ॥ १९ ॥ अथ मात्रोपदिष्टेन योगेनावरु-

त्ससि । यत्प्रसादं स वै पुंसां दुराराध्यो मतो मम ॥ २० ॥ मुनयः पदवीं यस्य निःसंगेनोरुजन्मभिः । न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥२१॥ अतो निवर्ततामेष निर्बन्धस्तव निष्फलः । यतिष्यति भवान्काले श्रेयसां समुपस्थिते ॥२२॥ यस्य यद्दैवविहितं स तेन सुखदुःखयोः । आत्मानं तोषयन्देही तमसः पारमृच्छति ॥ २३ ॥ गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् । मैत्रीं समानादन्विच्छेन्न तापैरभिभूयते ॥२४॥ ध्रुव उवाच । सोऽयं शमो भगवता सुखदुःखहतात्मनाम् । दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥२५॥ अथापि मेऽविनीतस्य क्षात्त्रं घोरमुपेयुषः । सुरुच्या दुर्वचोबाणैर्भिन्ने न श्रयते हृदि ॥२६ ॥ पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे । ब्रूह्यस्मत्पितृभिर्ब्रह्मन् अन्यैरप्यनधिष्ठितम्॥२७॥नारद उवाच । जनन्याऽभिहितः पन्थाः स वै निःश्रेयसस्य ते । भगवान्वासुदेवस्तं भज तत्प्रवणात्मना ॥२८॥ धर्मार्थकाममोक्षार्थं य इच्छेच्छ्रेय आत्मनः । एकमेव हरेस्तत्र कारणं पादसेवनम् ॥२९॥ तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि । पुण्यं

मधुवनं यत्र सान्निध्यं नित्यदा हरेः॥३०॥स्नात्वाऽनुसवनं तस्मिन् कालिन्द्याः सलिले शिवे। कृत्वोचितानि निवसन्नात्मनः कल्पितासनः ॥३१॥ प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम्। शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम् ॥३२॥ प्रसादाभिमुखं शश्वत्प्रसन्न वदनेक्षणम्। सुनासं सुभ्रुवं चारुकपोलं सुरसुन्दरम् ॥३३॥ तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम्। प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम् ॥३४॥ श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम्। शंखचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ॥३५॥ किरीटिनं कुण्डलिनं केयूरवलयान्वितम्। कौस्तुभाभरणग्रीवं पीतकौशेयवाससम्॥३६॥काञ्चीकलापपर्यस्तलसत्काञ्चननूपुरम्। दर्शनीयतमं शान्तं मनोनयनवर्धनम्॥ ३७ ॥ पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम्। हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ॥ ३८ ॥ स्मयमानमभिध्यायेत्सानुरागावलोकनम्। नियतेनैकभूतेन मनसा वरदर्षभम् ॥ ३९ ॥ एवं भगवतो रूपं सुभद्रं ध्यायतो मनः। निर्वृत्या परया तूर्णं संपन्नं न निवर्तते ॥४०॥ जप्यश्च परमो गुह्यः

श्रूयतां मे नृपात्मज । यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् ॥४१॥ ॐ नमो भागवते वासुदेवाय । मंत्रेणानेन देवस्य कुर्याद्द्रव्यमयीं बुधः । सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित् ॥ ४२ ॥ सलिलैः शुचिभिर्माल्यैर्वन्यमूलफलादिभिः । शस्ताङ्कुरांशुकैश्चार्चेत्तुलस्या प्रियया प्रभुम् ॥४३ ॥ इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः । ययौ मधुवनं पुण्यं हरेश्चरणचर्चितम् । तपोवनं गते तस्मिन्प्रविष्टोऽन्तः पुरं मुनिः ॥४४॥

इति श्रीभक्तिकौस्तुभे ध्रुवोपाख्याने नारदोपदेशो नाम एकपञ्चाश आह्निकः ।

राजोवाच । सुतो मे बालको ब्रह्मन् स्त्रैणेनाऽकरुणात्मना । निर्वासितः पञ्चवर्षः सह मात्रा महान्कविः ॥ १ ॥ अप्यनाथं वने ब्रह्मन्मास्मादन्त्यर्भकं वृकाः । श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् ॥ २ ॥ अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय । योऽङ्कं प्रेम्णाऽऽरुरुक्षन्तं नाभ्यनन्दमसत्तमः ॥३॥नारद उवाच । मा मा शुचः स्वतनयं देवगुप्तं विशांपते । तत्प्रभावमविज्ञाय व्यावृङ्क्ते यद्यशो जगत् ॥ ४ ॥ सुदुष्करं कर्म कृत्वा लोकपालैरपि

प्रभुः । एष्यत्यचिरतो राजन् यशो विपुलयंस्तव ॥ ५ ॥ इति देवर्षिणा प्रोक्तं विश्रुत्य जगतीपतिः । राजलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥ ६ ॥ तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम् । समाहितः पर्यचरदृष्यादेशेन पूरुषम् ॥ ७ ॥ त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः । आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन् हरिम् ॥ ८ ॥ द्वितीयं च तथा मासं षष्ठे षष्ठेऽर्भको दिने । तृणपर्णादिभिः शीर्णैः कृतान्नोऽभ्यर्चयद्विभुम् ॥ ९ ॥ तृतीयं चानयन्मासं नवमे नवमेऽहनि । अब्भक्ष उत्तमश्लोकमुपाधावत् समाधिना ॥ १० ॥ चतुर्थमपि वै मासं द्वादशे द्वादशेऽहनि । वायुभक्षो जितश्वासो ध्यायन् देवमधारयत् ॥११॥ पञ्चमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः । ध्यायन् ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ॥ १२ ॥ सर्वतो मन आकृष्य हृदि भूतेन्द्रियाशयम् । ध्यायन् भगवतो रूपं नाद्राक्षीत्किंचनापरम् ॥ १३ ॥ आधारं महदादीनां प्रधानपुरुषेश्वरम् । ब्रह्म धारयमाणस्य त्रयो लोकाश्चकम्पिरे ॥ १४ ॥ यदैकपादेन स पार्थिवार्भकस्तस्थौ तदङ्गुष्ठनिपीडिता

महीं । ननाम तत्रार्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥ १५ ॥ तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्याऽसुमनन्यया धिया । लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ॥ १६ ॥ श्रीभगवानुवाच । मा भैष्ट बालं तपसो दुरत्ययान्निवर्तयिष्ये प्रतियात स्वधाम । यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि संगतात्मा ॥ १७ ॥ स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम् । तिरोहितं सहसैवोपलक्ष्य बहिःस्थितं तदवस्थं ददर्श ॥१८॥ तद्दर्शनेनागतसाध्वसः क्षिताववन्दताङ्गं विनमय्य दण्डवत् । दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकः चुम्बन्निवास्येन भुजैरिवाश्लिषन् ॥१९॥ स तं विवक्षन्तमतद्विदं हरिर्ज्ञात्वास्य सर्वस्य च हृद्यवस्थितः । कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥ २० ॥ स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः । तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षितिः ॥ २१ ॥ ध्रुव उवाच । योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्ति-

धरः स्वधाम्ना ।अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान् नमो भगवते पुरुषाय तुभ्यम् ॥२२॥ त्वद्दत्तया वयुनयेदमचष्ट विश्वं सुप्तः प्रबुद्ध इव नाथ भवत्प्रपन्नः।तस्यापवर्ग्यशरणं तव पादमूलं विस्मयतेऽकृतविदा कथमार्तबन्धो॥२३ नूनं विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः । अर्चन्ति कल्पकतरुं कुणपोपभोग्यमिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम् ॥२४॥या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् किं त्वन्तकासिलुलितात्पततां विमानात् ॥२५॥ भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त महतामयलाशयानाम् । येनाञ्जसोल्वणमुरुव्यसनं भवाब्धिं नेष्ये भवद् गुणकथामृतपानमत्तः ॥२६॥ ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः । ये त्वब्जनाभ भवदीयपदारविन्द-सौगन्ध्यलुब्धहृदयेषु कृतप्रसंगाः ॥२७॥ यस्मिन्विरुद्धगतयो ह्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्यात् । तद्ब्रह्म विश्वभवमेकमनन्तमाद्य-मानन्दमात्रमविकारमहं प्रपद्ये

॥२८॥ सत्याऽशिषो हि भगवंस्तव पादपद्ममाशीस्तथानु भजतः पुरुषार्थमूर्तेः । अप्येवमार्य भगवान्परिपाति दीनान्वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥२९॥ श्रीभगवानुवाच । वेदाहं ते व्यवसितं हृदि राजन्यबालक । तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ॥३०॥ नान्यैरधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुवक्षिति । यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥३१॥ मेढ्यां गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम् । धर्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौकसः । चरन्ति दक्षिणीकृत्य भ्रमन्तो यत्सतारकाः ॥३२॥ भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि । ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् । उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते गतः ॥३३॥ ध्रुव उवाच । समाधिना नैकभवेन यत्पदं विदुः सनन्दादय ऊर्ध्वरेतसः । मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापगतः पृथङ्मतिः ॥३४॥ अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत । भवच्छिदः पादमूलं गत्वाऽयाचे यदन्तवत् ॥३५॥ मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः । यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः ॥३६॥

देवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् । तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥३७॥ मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि । प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ॥३८॥ भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः । भाग्यं फलति सर्वत्र न विद्या न तपः फलम् ॥३९॥ स्वराज्यं यच्छतो मौढ्यान्मानो मे भिक्षितो बत । ईश्वरात्क्षीणपुण्येन फलीकारानिवाधनः ॥४०॥

इति श्रीभक्तिकौस्तुभे ध्रुवोपाख्याने वरप्रदानं नाम द्विपञ्चाश आह्निकः ।

आकर्ण्यात्मजमायान्तं हर्षवेगेन धर्षितः । निश्चक्राम पुरात्तूर्णमात्मजाभीक्षणोत्सुकः ॥१॥ सुनीतिः सुरुचिश्चास्य महिष्यौ रुक्मभूषिते । आरुह्य शिविकां सार्धमुत्तमेनाभिजग्मतुः ॥ २ ॥ तं दृष्ट्वोपवनाभ्याश आयान्तं तरसा रथात् । अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वलः ॥ ३ ॥ परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः श्वसन् । विष्वक्सेनाङ्घ्रि-संस्पर्शहताशेषाघबन्धनम् ॥ ४ ॥ अभिवन्द्य पितुः पादावाशीर्भिश्चाभिमन्त्रितः । ननाम मातरौ

शीर्ष्णा सत्कृतः सज्जनाग्रणीः ॥ ५ ॥ सुरुचिस्तं समुत्थाप्य पादावनतमर्भकम् । परिष्वज्याह जीवेति बाष्पगद्गदया गिरा ॥ ६ ॥ यस्य प्रसन्नो भगवान्गुणैर्मैत्र्यादिभिर्हरिः । तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥७॥ उत्तमश्च ध्रुवश्चोभावन्योऽन्यं प्रेमविह्वलौ । अंगसंगादुत्पुलकावस्त्रौघं मुहुरूहतुः ॥ ८ ॥ सुनीतिरस्य जननी प्राणेभ्योऽपि प्रियं सुतम् । उपगुह्य जहावाधिं तदंगस्पर्शनिर्वृता ॥९॥ उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् । श्रुत्वा दृष्ट्वाद्भुततमं प्रपेदे विस्मयं परम् ॥ १० ॥ वीक्ष्योढवयसं तं च प्रकृतीनां च संमतम् । अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवःपतिम्॥११॥ उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा । हतः पुण्यजनेनाद्रौ तन्माताऽस्य गतिं गता ॥१२ ॥ ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचाऽर्पितः । जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम् ॥१३॥ ततो निष्क्रम्य बलिन उपदेवमहाभटाः असहन्तस्तं निनादमभिपेतुरुदायुधाः ॥ १४ ॥ स तानापततो वीर उग्रधन्वा महारथः । एकैकं युगपत्सर्वानहन् बाणैस्त्रिभिस्त्रिभिः ॥१५॥ तेऽपिचामुममृष्यन्तः पाद-

स्पर्शमिवोरगाः । अभ्यवर्षन्प्रकुपिताः सरथं सहसारथिम्॥१६॥ तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम् । कायानाविविशुस्तिग्मा गिरीनशनयो यथा ॥१७॥ क्षणेनाच्छादितं व्योम घनानीकेन सर्वतः । विस्फुरत्तडिता दिक्षु त्रासयत् स्तनयित्नुना ॥ १८ ॥ ववृषू रुधिरौघासृक्पूयविण्मूत्रमेदसः । निपेतुर्गगनादस्य कबन्धान्यग्रतोऽनघ ॥ १९ ॥ ततः खेऽदृश्यत गिरिर्निपेतुः सर्वतोदिशम् । गदापरिघनिस्त्रिंशमुसलाः साश्मवर्षिणः ॥ २० ॥ अहयोऽशनिनिःश्वासा वमन्तोऽग्निं रुषाक्षिभिः । अभ्यधावन् गजा मत्ताः सिंहव्याघ्राश्च यूथशः ॥ २१ ॥ समुद्र ऊर्मिभिर्भीमः प्लावयन्सर्वतो भुवम् । आससाद महाह्रादः कल्पान्त इव भीषणः ॥ २२ ॥ मुनय ऊचुः । औत्तानपादे भगवांस्तव शार्ङ्गधन्वा देवः क्षिणोत्ववनतार्तिहरो विपक्षान् । यन्नामधेयमभिधाय निशम्य चाद्धा लोकोऽञ्जसा तरति दुस्तरमङ्गमृत्युम् ॥२३॥ निशम्य गदतामेवमृषीणां धनुषि ध्रुवः । संदधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम् ॥ २४ ॥ संधीयमान एतस्मिन्माया गुह्यकनिर्मिताः । क्षिप्रं विनेशुर्विदुर

क्लेशा ज्ञानोदये यथा ॥२५॥ तान्हन्यमानानभिवीक्ष्य गुह्यकाननागसश्चि-
त्ररथेन भूरिशः । औत्तानपादिं कृपया पितामहो मनुर्जगादोपगतः सहर्-
र्षिभिः ॥२६॥ मनुरुवाच । अलं वत्सातिरोषेण तमोद्वारेण पाप्मना । येन
पुण्यजनानेतानवधीस्त्वमनागसः ॥ २७ ॥ नन्वेकस्यापराधेन प्रसङ्गाद्बहवो
हताः । नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम् ॥ २८ ॥ स खल्विदं
भगवान्कालशक्त्या गुणप्रवाहेण विभक्तवीर्यः । करोत्यकर्तैव निहन्त्यहन्ता
चेष्टा विभूम्नः खलु दुर्विभाव्या ॥२९॥ सोऽनन्तोऽन्तकरः कालोऽनादिरादि-
कृदव्ययः । जनं जनेन जनयन्मारयन्मृत्युनान्तकम् ॥ ३० ॥ केचित्कर्म वद-
न्त्येनं स्वभावमपरे नृप । एके कालं परे दैवं पुंसः काममुतापरे ॥ ३१ ॥
अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च । न वै चिकीर्षितं तात को वेदाथ
स्वसंभवम् ॥ ३२ ॥ तमेव मृत्युममृतं तात दैवं सर्वात्मनोपेहि जगत्परा-
यणम् । यस्मै बलिं विश्वसृजो हरन्ति गावो यथा वै नसि दामयन्त्रिताः
॥३३॥ संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् । श्रुतेन भूयसा राजन्नगदेन

यथामयम् ॥३४॥ हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतम् । यज्जघ्निवान्पुण्यजनान्भ्रातृघ्नानित्यमर्षितः ॥३५॥ तं प्रसादय वत्साशु सन्नत्या प्रश्रयोक्तिभिः । न यावन्महतां तेजः कुलं नोऽभिभविष्यति ॥३६॥ ध्रुवं निवृत्तं प्रतिबुद्ध्य वैशसादपेतमन्युं भगवान्धनेश्वरः । तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत्कृताञ्जलिम् ॥३७॥ धनद उवाच । भो भो क्षत्रियदायाद परितुष्टोऽस्मि तेऽनघ । यस्त्वं पितामहादेशाद्वैरं दुस्त्यजमत्यजः ॥३८॥ न भवानवधीद्यक्षान्न यक्षा भ्रातरं तव । काल एव हि भूतानां प्रभुरप्ययभावयोः ॥३९॥ अथायजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः । द्रव्यक्रियादेवतानां कर्म कर्मफलप्रदम् ॥४०॥ षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमण्डलम् । भोगैः पुण्यक्षयं कुर्वन्नभोगैरशुभक्षयम् ॥४१॥ त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृपासनम् । मन्यमान इदं विश्वंमायारचितमात्मनि ॥४२॥ भक्तिं हरौ भगवति प्रवहन्नजस्रमानन्दबाष्पकलया मुहुरर्द्यमानः विक्लिद्यमानहृदयः पुलकाचिताङ्गो नात्मानमस्मरदसाविति मुक्तलिङ्गः ॥ ४३ ॥ स ददर्श विमानाग्र्यं नभसो-

ऽवतरद्ध्रुवः। विभ्राजयद्दशदिशो राकापतिमिवोदितम् ॥४४॥ सुनन्दनन्दावूचतुः। भो भो राजन्सुभद्रं ते वाचं नोऽवहितः शृणु। यः पञ्चवर्षस्तपसा भवान्देवमतीतृपत् ॥४५॥ तस्याखिलजगद्धातुरावां देवस्य शार्ङ्गिणः। पार्षदाविह संप्राप्तौ नेतुं त्वां भगवत्पदम् ॥४६॥ सुदुर्जयं विष्णुपदं जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम्। आतिष्ठ तच्चन्द्रदिवाकरादयो ग्रहर्क्षताराः परियन्ति दक्षिणम् ॥४७॥ अनास्थितं ते पितृभिरन्यैरप्यंग कर्हिचित्। आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥४८॥ एतद्विमानप्रवरमुत्तमश्लोकमौलिना। उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि ॥४९॥ परीत्याभ्यर्च्य धिष्ण्याग्र्यं पार्षदावभिवन्द्य च। इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम् ॥५०॥ तदोत्तानपदः पुत्रो ददर्शान्तकमागतम्। मृत्योर्मूर्ध्नि पदं दत्त्वा आरुरोहाद्भुतं गृहम् ॥५१॥ स च स्वर्लोकमारोक्ष्यन्सुनीतिं जननीं ध्रुवः। अन्वस्मरदगं हित्वा दीनां यास्ये त्रिविष्टपम् ॥५२॥ इति व्यवसितं तस्य व्यवसाय सुरोत्तमौ। दर्शयामासतुर्देवीं पुरो यानेन गच्छतीम् ॥५.॥ इत्युत्तान-

पदः पुत्रो ध्रुवः कृष्णपरायणः । अभूत्त्रयाणां लोकानां चूडामणि-रिवामलः ॥ ५४ ॥ महिमानं विलोक्यास्य नारदो भगवानृषिः । आतोद्यं वितुदन् श्लोकान्सत्रेऽगायत्प्रचेतसाम् ॥ ५५ ॥ नूनं सुनीतेः पतिदेवताया-स्तपः प्रभावस्य सुतस्य तां गतिम् । दृष्ट्वाभ्युपायानपि वेदवादिनो नैवाधि-गन्तुं प्रभवन्ति किं नृपाः ॥ ५६ ॥ ध्रुवस्योद्दामयशसश्चरितं संमतं सताम् । धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत् । स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्य-मघमर्षणम् ॥५७॥ श्रुत्वैतच्छ्रद्धयाभीक्ष्णमच्युतप्रियचेष्टितम् । भवेद्भक्ति-र्भगवति यथा स्यात्क्लेशसंक्षयः ॥ ५८ ॥ महत्त्वमिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः । यत्र तेजस्तदिच्छूनां मानो यत्र मनस्विनाम् ॥ ५९ ॥ प्रयतः कीर्तयेत्प्रातः समवाये द्विजन्मनाम् । सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत् ॥ ६० ॥ पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथवा ॥ दिनक्षये व्यतीपाते संक्रमेऽर्कदिनेऽपि वा ॥ ६१ ॥ श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः । नेच्छंस्तत्रात्मनात्मानं संतुष्ट इति सिध्यति ॥ ६२ ॥

ज्ञानमज्ञाततत्वाय यो दद्यात्सत्पथेऽमृतम्। कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णते ॥ ६३ ॥

इति श्रीभक्तिकौस्तुभे ध्रुवोपाख्याने परमपदप्राप्तिर्नाम त्रिपञ्चाश आह्निकः।

नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्मायजत तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः दुरधिगमोऽपि भगवान् भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं आविश्चकार ॥ १ ॥ अथ ह ऋत्विक्सदस्य गृहपतयोऽधना इवोत्तमधनमुपलभ्य सबहुमानमर्हणेनावनतशीर्षाण उपतस्थुः अभिष्टूयमानो भगवान् सदयमिदमाह आग्नीध्रीयेंऽशकलयावतरिष्यामि आत्मतुल्यमनुपलभमानः॥२॥ वर्हिषि तस्मिन्नेव विष्णुदत्त भगवान्परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधायने मेरुदेव्यां धर्मान् दर्शयितुकामो वातरशनानां श्रमणानामृषीणामूर्ध्वमन्थिनां शुक्लया तनुवाऽवततार ॥३ ॥ नाभिस्तु यथाभिलपितं सुप्रजास्त्वमवरुध्यातिप्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकसधर्मं भगवन्तं

पुराणपुरुषं मायाविलसितमतिः वत्स तातेति सानुरागमुपलालयन् परां निर्वृतिमुपगतः ॥ ४ ॥ विदितानुरागमापौरप्रकृतिजनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनः कालेन तन्महिमानमवाप ॥ ५ ॥ अथ ह भगवानृषभदेवो जयन्त्यामिन्द्रदत्तायाम् आत्मजानाम आत्मसमानानां शतं जनयामास ॥६ ॥ येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद् येनेदं वर्षं भारतमिति व्यपदिशन्ति। कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः। आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः। इति भागवतधर्मदर्शना नव महा भागवताः। यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः ॥ ७ ॥ स कदाचिदटमानो भगवानृषभो ब्रह्मावर्तगतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयन्तीनाम् आत्मजानवहितात्मनः प्रश्रयप्रणयभरसुयन्त्रितान् अप्युपशिक्षयन्निति होवाच॥८॥ ऋषभ

उवाच । नायं देहो देहभाजां नृलोके कष्टान्कामानर्हते विड्भुजां ये । तपो दिव्यं पुत्रका येन सत्त्वं शुध्येद् यस्माद्ब्रह्मसौख्यं त्वनन्तम् ॥ ९ ॥ महत्सेवां द्वारमाहुर्विमुक्तेः तमोद्वारं योषितां सङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥ १० ॥ ये वा मयीशे कृतसौहृदार्था जनेषु देहंभरवार्तिकेषु । गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके ॥ ११ ॥ नूनं प्रमत्तः कुरुते विकर्म यदिन्द्रियप्रीतय आपृणोति । न साधु मन्ये यत आत्मनोऽयमसन्नपि क्लेशद आस देहः ॥ १२ ॥ पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् । यावत्क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥ १३ ॥ एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययात्मन्युपधीयमाने । प्रीतिर्न यस्मान्मयि वासुदेवे न देहयोगात्परिमुच्यतेऽतः ॥ १४ ॥ यदा न पश्यत्ययथागुणेहां स्वार्थे प्रमत्तः सहसा विपश्चित् । गतस्मृतिर्विन्दति तत्र तापान् आसाद्य मैथुन्यमगारमज्ञः ॥ १५ ॥ पुंसः स्त्रिया मिथुनीभावमेतं तयोर्मिथो

हृदयग्रन्थिमाहुः । अतो गृहक्षेत्रसुताप्तवित्तैः जनस्य मोहोऽयमहंममेति॥१६॥
यदा मनोहृदयग्रन्थिरस्य कर्मानुबद्धो दृढ आश्लथेत । तदा जनः संपरिवर्त-
तेऽस्मात् मुक्तः परं यात्यतिहाय हेतुम् ॥१७॥ हंसे गुरौ मयि भक्त्यानुवृत्त्या
वितृष्णया द्वन्द्वतितिक्षया च । सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञासया
तपसेहानिवृत्त्या ॥१८॥ मत्कर्मभिर्मत्कथया च नित्यं मद्देवसङ्गाद् गुणकीर्त-
नान्मे । निर्वैरसाम्योपशमेन पुत्रा जिहासया देहगेहात्मबुद्धेः ॥१९॥ अध्या-
त्मयोगेन विविक्तसेवया प्राणेन्द्रियात्माभिजयेन सम्यक् । सच्छ्रद्धया ब्रह्म-
चर्येण शश्वद् असंप्रमादेन यमेन वाचाम् ॥ २० ॥ सर्वत्र मद्भावविचक्षणेन
ज्ञानेन विज्ञानविराजितेन । योगेन धृत्युद्यमसत्त्वयुक्तो लिंगं व्यपोहेत्कुश-
लोऽहमाख्यम् ॥२१॥ कर्माशयं हृदयग्रन्थिबन्धम् विद्ययाऽसादितमप्रमत्तः ।
अनेन योगेन यथोपदेशं सम्यग्व्यपोह्योपरमेत योगात् ॥ २२ ॥ पुत्रांश्च
शिष्यांश्च नृपो गुरुर्वा मल्लोककामो मदनुग्रहार्थः । इत्थं विमन्युरनुशिष्या-
दतज्ज्ञान् न योजयेत्कर्मसु कर्ममूढान् । कं योजयन्मनुजोऽर्थं लभेत निपात-

गन् नष्टदृशं हि गर्ते ॥२३॥एवं नाराणां विषयस्पृहा च निपातयन् निरयेत्व-
न्धकूपे ॥२४॥ लोकः स्वयं श्रेयसि नष्टदृष्टि र्योऽर्थान्समीहेत निकामकामः ।
अन्योन्यवैरः सुखलेशहेतोः अनन्तदुःखं च न वेद मूढः ॥२५॥ कस्तं स्वयं तद-
भिज्ञो विपश्चिद् अविद्यायामन्तरे वर्तमानम् । दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं
प्रयोजयेदुत्पथगं यथान्धम् ॥२६॥ पिता न स स्यात् जननी न सा स्यात् पतिर्न
स स्यात् स्वजनो न स स्यात् । दैवं न तत् स्यात् न गुरुश्च स स्यात् न मोच-
येद्यः समुपेतमृत्युम् ॥ २७ ॥ इदं शरीरं मम दुर्विभाव्यं सत्त्वं हि मे हृदयं
यत्र धर्मः । पृष्ठे कृतो मे यदधर्म आरात् अदतो हि मामृषभं प्राहुरार्याः॥२८।
तस्माद्भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सनाभम् । अक्लिष्ट-
बुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ॥२९॥ भूतेषु वीरुद्भ्य-
उदुत्तमा ये सरीसृपास्तेषु सबोधनिष्ठाः । ततो मनुष्याः प्रमथास्ततोऽपि
गन्धर्वसिद्धा विबुधानुगा ये ॥ ३० ॥ देवासुरेभ्यो मघवत्प्रधाना दक्षादयो
ब्रह्मसुतास्तु तेषाम् । भवः परः सोऽथ विरिञ्चवीर्यः स मत्परोऽहं द्विजदे-

घदेवः ॥३१ ॥ न ब्राह्मणैस्तुलये भूतमन्यत् पश्यामि विप्राः किमतःपरं तु । यस्मिन्नृभिः प्रहुतं श्रद्धयाहम् अश्नामि कामं न तथाग्निहोत्रे ॥ ३२ ॥ धृता तनूरुशती मे पुराणी येनेह सत्त्वं परमं पवित्रम् । शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षानुभवश्च यत्र॥३३॥मत्तोऽप्यनन्तात्परतः परस्मात्स्वर्गापवर्गाधिपतेर्न किंचित् । येषां किमु स्यादितरेण तेषाम् अकिंचनानां मयि भक्तिभाजाम् ॥३४॥सर्वाणि मद्धिष्ण्यतया भवद्भिः श्चराणि भूतानि सुता ध्रुवाणि ।संभावितव्यानि पदे पदे वो विविक्तदृग्भिस्तदुहार्हणंमे ॥३५॥ मनोवचोदृक् करणेहितस्य साक्षात्कृतं मे परिबर्हणं हि। विना पुमान्येन महाविमोहात् कृतान्तपाशान्न विमोक्तुमीशेत् ॥३६॥ एवमनुशास्य स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज । जडान्धमूकबधिरपिशाचोन्मादकवत् अवधूतवेषोऽभिभाष्यमाणोपि जनानां गृहीतमौनव्रतःतूष्णीं बभूव॥३७॥तत्र तत्र

पुरग्रामगिरिवनाश्रमादिषु अनुपथमवनिचरापसदैः परिभूयमानो मक्षिकाभि-
रिव वनगजः तर्जनताडनावमेहनष्ठीवन-ग्रावशकृद्रजःप्रक्षेप-पूतिवातदुरुक्तैः त-
दविगणयन्नेव असत्संस्थान एतस्मिन्देहोपलक्षणे सदुपदेश उभयानुभवस्वरूपेण
स्वमहिमावस्थानेन असमारोपिताहंममाभिमानत्वात् अविखण्डितमनाः पृथि-
वीमेकचरः परिबभ्राम॥३८॥ लम्बमानकुटिलजटिलकपिशकेशभूरिभारो: अव-
धूतमलिननिजशरीरेण ग्रहगृहीत इवादृश्यत। व्रतमाजगरमास्थितः शयान ए-
वाऽश्नाति पिबति खादत्यवमेहति हदति स्म ॥३९॥ तस्य ह यः पुरीषसुरभि-
सौगन्ध्यवायुः तं देशं दशयोजनं समन्तात् सुरभिं चकार । एवं गोमृगकाक-
चर्यया व्रजंस्तिष्ठन्नासीनः शयान काकमृगगोचरितः पिबति खादत्यवमे-
हति स्म। अथ समीरवेगविधूत-वेणुविकर्षणजाताग्र-दावानलः तद्वनम् अलेलि-
हानः सह तेन ददाह॥४०॥यस्य किल अनुचरितंउपाकर्ण्य कोङ्कवेङ्ककुटकानां
राजाऽर्हन्नामोपशिक्ष्य कलावधर्मे उत्कृष्यमाणे भवितव्येन विमोहितः
स्वधर्मपथम् अकुतोभयमपहाय कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः

संप्रवर्तयिष्यते ॥ ४१ ॥ इति ह स्म सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धाचरितेरितं पुंसां समस्तदुश्चरिताभिहरणम् परममहामंगलायनमिदम् अनुश्रद्धयोपचितया अनुशृणोत्याश्रावयतिवाऽवहितो भगवति तस्मिन्वासुदेव एकान्ततो भक्तिरनयोरपि समनुवर्तते॥४२॥

इति श्रीभक्तिकौस्तुभे ऋषभदेवोपाख्यानं नाम चतुष्पञ्चाश आह्निकः ।

भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय सञ्चिन्तितस्तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे ॥ १ ॥ स बहुविन्महीपतिः पितृपितामहवत्सलतया स्वे स्वे कर्मणि वर्तमानाः प्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत् । ईजे च भगवन्तं यज्ञक्रतुरूपं क्रतुभिरुच्चावचैः ॥२॥ एवं कर्मविशुद्ध्या ब्रह्मणि भगवति वासुदेवे उच्चैस्तरां भक्तिरनुदिनमेधमानरया अजायत। वर्षायुतसहस्रपर्यन्तावसितकर्मनिर्वाणावसरःपुलहाश्रमं प्रवव्राज । यत्र ह वाव भगवान्हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन संनिधाप्यत इच्छारूपेण ॥ ३ ॥ तस्मिन् अचिरतपुरुपपरिचर्यया

भगवति प्रवर्धमानानुरागभर-द्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमान-रोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयन एवं निज-रमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लाद-गम्भीरहृदयहृदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार ॥ ४ ॥ भगवन्तं हिरण्मयं पुरुषमुज्जिहाने सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदु होवाच । परोरजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान । सुरेतसाऽदः पुनराविश्य चष्टे हंसं गृध्राणं नृषद्रिंगिरामिमः ॥ ५ ॥ एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्त उप-विवेश । तत्र तदा राजन्हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम । तया पेपीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयंकर उदपतत् ॥ ६ ॥ तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगततृषा भयात् सह-सैवोच्चक्राम । तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो योनिनि-

र्गतो गर्भः स्रोतसि निपपात । तत्प्रसवोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्यांचिद्दर्यां कृष्णसारसती निपपाताथ च ममार ॥ ७ ॥ तं त्वेणकुणकं कृपणं स्रोतसानूह्यमानमभिवीक्ष्यापविद्धं बन्धुरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत् । तस्य ह वा एणकुणक उच्चैरेतस्मिन्कृतनिजाभिमानस्य अहरहः तत्पोषणपालनलालनप्रीणनानुध्यानेन आत्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ८ ॥ अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातापितरौ भ्रातृज्ञातीन् यौथिकांश्चैवोपेयाय नान्यं कंचन वेद मय्यतिविस्रब्धश्च अत एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमनसूयुनाऽनुष्ठेयं शरण्योपेक्षादोषविदुषा ॥ ९ ॥ नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वानर्थानपि गुरुतरानुपेक्षन्ते । इति कृतानुषङ्ग आसनशयनाटनस्थानाशनादिषु सहमृगजहुनास्नेहानुबद्ध-

हृदय आसीत्॥१०॥ कुशकुसुमसमित्पलाशफलमूलोदकानि आहरिष्यमाणो
वृकसालावृकादिभ्यो भयमाशंसमानो यदा सह हरिणकुणकेन वनं समावि-
शति तदा पथिषु च मुग्ध भावेन तत्र तत्र विषक्तमतिप्रणयभरहृदयः
कार्पण्यात्स्कन्धेनोद्वहति अन्यदा भृशमुद्विग्नमना होवाच ॥ ११ ॥ अपि
वत स वै कृपण एणबालको मृतहरिणीसुतः अहो ममानार्यस्य शठकिरात-
मतेरकृतसुकृतस्य कृतविस्रम्भ आत्मप्रत्ययेन तदविगणयन्सुजन इवाग-
मिष्यति किम् । अपिस्विदसौ भगवानुडुपतिरेनं मृगपतिभयान्मृतमातरं
मृगबालकं स्वाश्रमपरिभ्रष्टं अनुकम्पया कृपणजनवत्सलः परिपाति ॥ १२॥
एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा योगा-
रम्भणतो विभ्रंशितो राजर्षिर्भरतस्य दुरतिक्रमः कालः करालरभस
आपद्यत॥१३॥तदानीमपि पार्श्ववर्तिनम् आत्मजमिवानुशोचन्तम् अभिवीक्ष-
माणो मृग एवाभिनिवेशितमना इतरवन्मृगशरीरमवाप ॥ १४ ॥ तत्रापि ह
वा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानुभावेनानुस्मृत्य भृशमनु-

तप्यमानो निगूढनिर्वेदो विसृज्य मृगीमातरं पुनर्भगवत्क्षेत्रमुपशमशील-मुनिगणदयितं शालग्रामं पुलस्त्यपुलहाश्रमं कालञ्जरात्प्रत्याजगाम ॥१५॥ तस्मिन्नपि कालं प्रतीक्षमाणः संगाच्च भृशमुद्विग्न आत्मसहचरः शुष्कपर्ण-तृणवीरुधा वर्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकक्लिन्न मुत्ससर्ज ॥१६॥ अथ कस्यचिद् द्विजवरस्याऽङ्गिरः प्रवरस्य शमदमतपः स्वाध्यायाध्ययन-त्यागसंतोषतितिक्षाप्रश्रय-विद्याऽनसूयात्मज्ञानानन्दयुक्त-स्यात्मसदृश-श्रुतशीलाचार-रूपौदार्यगुणा नव सोदर्या अंगजा बभूवुःमिथुनं च यवीयस्यां भार्यायाम् ॥१७॥ यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतम् उत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः। तत्रापि स्वजन-संगाच्च भृशमुद्विजमानो भगवतः कर्मबन्धविध्वंसन-श्रवणस्मरणगुणविव-रणचरणारविन्दयुगलं मनसा विदधत् आत्मनः प्रतिघातमाशंकमानो भगवद-नुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरः आत्मानमुन्मत्तजडान्धबधिरस्वरूपेण दर्श-यामास लोकस्य॥१८॥पितर्युपरते भ्रातर एनमतत्प्रभावविदः त्रय्यां विद्या-

यामेव पर्यवसितमतयो न परविद्यायां जडमतिरिति भ्रातुरनुशासननिर्बन्धा-न्न्यवृत्सत ॥१६॥ स च प्राकृतैर्द्विपदः पशुभिरुन्मत्तजडबधिरेत्यभिभाष्य-माणो यदा तदनुरूपाणिप्रभाषते कर्माणि च स कार्यमाणः परेच्छया करोति विष्टितो वेतनतो वा याञ्चया यदृच्छया वोपासादितमल्पं बहु मिष्टं कदन्नं वाभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम् ॥२०॥ शीतोष्णवातवर्षेषु वृष इवानावृतांगः पीनः संहननांगः स्थण्डिलसंवेशनानुन्मर्दनामज्जनरजसा महामणिरिवानभिव्यक्तब्रह्मवर्चसः कुपटावृतकटिः उपवीतेनोरुमषिणा द्विजातिरितिब्रह्मबन्धुरिति संज्ञया अतज्ज्ञजनावमतो विचचार ॥२१॥ अथ कदाचित्कश्चित् वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकाम स्तदनुचराश्च निशि निशीथसमये आकस्मिकेन विधिना केदारान्वीरासनेन मृगवराहादिभ्यः संरक्षमाणमङ्गिरः प्रवरसुतमपश्यन् अनवद्यलक्षणमवमृश्य भर्तृकर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चण्डिकागृहमुपनिन्युर्मुदा विकसितवदनाः॥२२॥अथ पणयस्तं स्वविधिनाभिषिच्या अहतेन वाससाच्छाद्य

भूषणालेपस्रक्तिलकादिभिरुपस्कृतं भुक्तवन्तं पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः। वृषलराजपणिश्च पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदभिमन्त्रितम् असिमतिकरालनिशितम् उपाददे ॥२३॥ इति तेषां वृषलानां कर्मातिदारुणमुपलभ्य ब्रह्मतेजसातिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाट सैव देवी भद्रकाली। महाऽट्टहासम् अतिसंरम्भेण विमुञ्चन्ती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्णशीर्ष्णां गलात् स्रवन्तमसृगासवमत्युष्णं सह गणेन निपीय अतिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त च विजहार शिरः कन्दुकलीलया ॥२४॥ एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलति ॥२५॥

इति श्रीभक्तिकौस्तुभे भरतोपाख्याने महदभिचारफलवर्णनं नाम पञ्चपञ्चाश आह्निकः।

अथ सिन्धुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिविकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननांगो गोखरवद्दूरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह

गृहीतः प्रसभम् अदर्ह उवाह शिबिकां स ह महानुभावः ॥ १ ॥ यदा हि द्विजवरस्येषुमात्रावलोकानुगते र्न समाहिता पुरुषगतिः स्तदा विषमगतां स्वशिबिकां रहूगण उपधार्य पुरुषानधिवहत आह हे वोढारः साध्वतिक्रमत किमिति विषममुह्यते यानमिति ॥ २ ॥ अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्य विज्ञापयांबभूवुः । अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमुह वयं पारयाम इति ॥ ३ ॥ राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युः अविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसाऽऽवृतमतिराह । अहो कष्टं भ्रातः व्यक्तमुरुपरिश्रान्तो दीर्घमध्वानमेक एव ऊहिवान्सुचिरं नातिपीवा न संहननांगो जरसा चोपद्रुतो भवान्सखे नो एवापर एते संघट्टिन इति ॥४॥ अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः किमिदमरे त्वं जीवन्मृतो मां कदर्थीकृत्य भर्तृशासनमतिचरसि प्रमत्तस्य च ते करोमि चिकित्सां दण्डपाणिरिव जनताया यथा प्रकृतिं स्वां भजिष्यस इति ॥ ५ ॥ एवं बह्वबद्धमपि भाषमाणं नरदेवाभिमानं पण्डित-

मानिनं स भगवान्ब्राह्मणो ब्रह्मभूतो विगतस्मय इदमाह ॥ ६ ॥ ब्राह्मण उवाच । त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद्यदि वीर भारः । गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति राशौ न विदां प्रवादः ॥ ७ ॥ स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड् भयं कलिरिच्छा जरा च । निद्रा रतिर्मन्युरहंमदः शुचो देहेन जातस्य न मे हि सन्ति ॥ ८ ॥ जीवन्मृतत्वं नियमेन राजन् आद्यन्तवद्यद्विकृतस्य दृष्टम् । स्वस्वाम्यभावो ध्रुव ईड्य यत्र तर्ह्युच्यतेऽसौ विधिकृत्ययोगः ॥ ९ ॥ विशेषबुद्धेर्विवरं मनाक् च पश्याम यन्न व्यवहारतोऽन्यत् । क ईश्वरस्तत्र किमीशितव्यं तथापि राजन्करवाम किं ते ॥ १० ॥ उन्मत्तमत्तजडवत्स्वसंस्थां गतस्य मे वीर चिकित्सितेन । अर्थः कियान्भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः ॥ ११ ॥ स चापि पाण्डवेय सिन्धुसौवीरपतिः तत्त्वजिज्ञासायां सम्यक्श्रद्धयाऽधिकृताधिकारः तद्धृदयग्रन्थिविमोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थसंमतं त्वरयाऽवरुह्य शिरसा पादमूलमुपसृतः क्षमापयन् विगतनृप-

देवस्मय उवाच ॥१२॥ कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः । कस्यासि कुत्रत्य इहापि कस्मात्क्षेमाय नश्चेदसि नोत शुक्लः ॥१३॥ नाहं विशङ्के सुरराजवज्रात् न त्र्यक्षशूलात् न यमस्य दण्डात् । नाग्न्यर्कसोमानिलवित्तपास्यात् शंके भृशं ब्रह्मकुलावमानात् ॥१४॥ तद् ब्रूह्यसङ्गो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः । वचांसि योगग्रथितानि साधो न नः क्षमं ते मनसापि भेत्तुम् ॥१५॥ दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गन्तुर्भवतश्चानुमन्ये । यथाऽसतो दानमानाद्यभावात् समूल इष्टो व्यवहारमार्गः ॥१६॥ स्थाल्यग्नितापात् पयसोऽभितापःतत्तापतस्तण्डुलगर्भरन्धिः । देहेन्द्रियास्वाशयसन्निकर्षात् तत्संसृतिः पुरुषस्यानुरोधात् ॥ १७ ॥ शास्ताऽभिगोप्ता नृपतिः प्रजानां यः किंकरो वै न पिनष्टि पिष्टम् । स्वधर्ममाराधनमच्युतस्य यदीहमानोविजहात्यघौघम् ॥१८॥ ब्राह्मण उवाच । अकोविदः कोविदवादवादान्वदस्यथो नातिविदां वरिष्ठः । न सूरयो हि व्यवहारमेनं तत्वावमर्शेन सहामनन्ति ॥१९॥ तथैव राजन्नुरुगार्हमेध-वितानविद्योरुविजृम्भितेषु न वेदवादेषु हि

तत्ववादः प्रायेण शुद्धो नु चकास्ति साधुः ॥२०॥ न तस्य तत्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन्। स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात् ॥२१॥ यावन्मनो रजसा पूरुषस्य सत्वेन वा तमसा वानुरुद्धम्। चेतोभिराकूतिभिरातनोति निरंकुशं कुशलं चेतरं वा ॥२२॥ स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा। बिभ्रत्पृथङ्नामभि रूपभेदमन्तर्बहिष्ट्वं च पुरैस्तनोति ॥२३॥ दुःखं सुखं व्यतिरिक्तं च तीव्रं कालोपपन्नं फलमाव्यनक्ति। आलिङ्ग्य मायारचितान्तरात्मा स्वदेहिनं संसृतिचक्रकूटः ॥२४॥ तावानयं व्यवहारः सदाविः क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः। तस्मान्मनोलिङ्गमदो वदन्ति गुणागुणत्वस्य परावरस्य ॥२५॥ गुणानुरक्तं व्यसनाय जन्तोः क्षेमाय नैर्गुण्यमथो मनः स्यात्। यथा प्रदीपो घृतवर्तिमश्नन् शिखाः सधूमा भजति ह्यन्यदा स्वम् ॥२६॥ पदं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेऽन्यत्र तत्वम्। तत्त्वं परं ब्रह्म वदन्तिविज्ञा ब्रह्मात्मभावेन चरन्त्यनिर्वृताः ॥२७॥ एकादशासन्मनसो हि

वृत्तय आकृतयः पञ्च धियोऽभिमानः। मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीर भूमीः ॥२८॥ गन्धाकृतिः स्पर्शरसश्रवांसि विसर्गरत्यर्त्यभिजल्पशिल्पाः। एकादशं स्वीकरणं ममेति शय्यामहं द्वादशमेक आहुः ॥२९॥ द्रव्यस्वभावाशयकर्मकालैरेकादशामी मनसो विकाराः। सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतो न मिथो न स्वतः स्युः ॥३०॥ क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचितस्य नित्याः। आविर्हिताः क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥३१॥ क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयंज्योतिरजः परेशः। नारायणो भगवान्वासुदेवः स्वमाययाऽत्मन्यवधीयमानः ॥३२॥ यथाऽनिलः स्थावरजङ्गमानाम् आत्मस्वरूपेण निविष्ट ईशेत्। एवं परो भगवान्वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥ ३ ॥ न यावदेतां तनुभृन्नरेन्द्र विधूय मायां वयुनोदयेन। विमुक्तसंगोजितषट्सपत्नो वेदात्मतत्त्वं भ्रमतीह तावत् ॥ ३४ ॥ न यावदेतन्मन आत्मलिंगं संसारतापावपनं जनस्य। यच्छोकमोहामयरागलोभ-वैरानुबन्धं ममतां

चिधत्तो॥३५॥भ्रातृव्यमेनं तददभ्रवीर्यम् उपेक्षयाऽध्येधितमप्रमत्तः।गुरोर्हरेश्च-
रणोपासनास्त्रो जहि व्यलीकं स्वयमात्ममोषम् ॥३६॥ रहूगण उवाच । नमो
नमः कारणविग्रहाय स्वरूपतुच्छीकृतविग्रहाय । नमोऽवधूतद्विज-
बन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम् ॥३७॥ ज्वरामयार्तस्य यथाऽगदं सन्नि-
दाघदग्धस्य यथा हिमाम्भः । कुदेहमानाहिविदष्टदृष्टेर्ब्रह्मन्वचस्तेऽमृतमौष-
धं मे ॥ ३८ ॥ यदाह योगेश्वर दृश्यमानं क्रियाफलं सद्व्यवहारमूलम् । न
ह्यञ्जसा तत्त्वविमर्शनाय भवानमुष्मिन्भ्रमते मनो मे । ३९ ॥ ब्राह्मण
उवाच । अयं जनो नाम चलन्पृथिव्यां यः पार्थिवः पार्थिव कस्य हेतोः ।
तस्यापि चाङ्घ्र्योरधिगुल्फजंघा-जानूरुमध्योरशिरोधरांसाः ॥ ४० ॥
अंसेऽधिदार्वी शिबिका च यस्यां सौवीरराजेत्यपदेश आस्ते । यस्मिन्भवा-
न् रूढनिजाभिमानो राजास्मि सिन्धुष्विति दुर्मदान्धः ॥४१॥ शोच्यानिमां-
स्त्वमधिकष्टदीनान् विष्ट्या निगृह्णन्निरनुग्रहोसि । जनस्य गोप्ताऽस्मि
विकत्थमानो न शोभसे वृद्धसभासु धृष्टः ॥४२॥ यदा क्षितावेव चराचरस्य

विदाम निष्ठां प्रभवं च नित्यम् । तन्नामतोऽन्यद्व्यवहारमूलं निरूप्यतां सत्क्रिययानुमेयम् ॥४३॥ एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानात्परमाणवो ये । अवेद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः ॥ ४४ ॥ एवं कृशं स्थूलमणुर्बृहद्यत् असच्च सज्जीवमजीवमन्यत् । द्रव्यस्वभावाशयकालकर्मनाम्नाऽजयावेहि कृतंद्वितीयम् ॥ ४५ ॥ ज्ञानं विशुद्धं परमार्थमेकमनन्तरं त्ववहिर्ब्रह्म सत्यम् । प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ति ॥४६॥ रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा । न च्छन्दसा नैव जलाऽग्निसूर्यैर्विना महत्पादरजोभिषेकम् ॥४७॥ यत्रोत्तमश्लोक गुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः । निषेव्यमाणोऽनुदिनं मुमुक्षो र्मतिं सतीं यच्छति वासुदेवे ॥४८॥ अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसंगबन्धः । व्यासक्त चित्तोपि तथाऽप्रमेये मृगोऽभवंमृगसंगाद्धतार्थः ॥४९॥ सा मां स्मृतिर्मृगदेहेऽपि वीर कृष्णार्चनप्रभवा नो जहाति । अथो अहं जनसंगादसंगो विशङ्कमानोऽविवृतश्चरामि ॥ ५० ॥ तस्मान्न-

रोऽसंगसुसंगजात-ज्ञानासिनेहैव विवृक्णमोहः। हरिं तदीहाकथनस्मृतिभ्यां लब्धस्मृतिर्यात्यतिपार मध्वनः॥ ५१ ॥

इति श्रीभक्तिकौस्तुभे भरतोपाख्याने भरतोपदेशो नाम षट्पञ्चाश आह्निकः।

ब्राह्मणउवाच। दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमः सत्वविभक्त-कर्मदृक्। स एष सार्थोऽर्थपरः परिभ्रमन् भवाटवीं याति नशर्मविन्दति॥१॥ यस्यामिमे षण्नरदेवदस्यवः सार्थं विलुम्पन्ति कुनायकं बलात्। गोमायवो यत्र हरन्ति सार्थिकं प्रमत्तमाविश्य यथोरणं वृकाः॥ २ ॥ प्रभूतवीरुत्तृणगु-ल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः। क्वचित्तु गन्धर्वपुरं प्रपश्यति क्वचित्क्व-चिच्चाशुरयोल्मुकग्रहम्॥३॥ निवासतोयद्रविणात्मबुद्धिः ततस्ततो धावति भो अटव्याम्। क्वचिच्च वात्योत्थितपांसुधूम्रा दिशो न जानातिरजस्व-लाक्षः॥ ४ ॥ अदृश्यझिल्लीस्वनकर्णशूल उलूकवाग्भिर्व्यथितान्तरात्मा। अपुण्यवृक्षान् श्रयते क्षुधाऽर्दितो मरीचितोयान्यभिधावति क्वचित्॥ ५ ॥ क्वचिद्वितोयाः सरितोऽभियाति परस्परं चालप तेनिरन्धः। आसाद्य दावं

क्वचिदग्नितसो निर्विंग्नले क्व च यत्नैर्हृतासुः ॥६॥ शूरैर्हृतस्वः क्व च निर्विण्ण-चेताः शोचन् विमुह्यन्नुपयाति कश्मलम्। क्वचिच्च गन्धर्वपुरं प्रविष्टः प्रमोदते निर्वृतवन्मुहूर्तम् ॥ ७ ॥ चलन्क्वचित्कण्टकशर्कराऽङ्घ्रिः नगारुरुक्षुर्विमना इवास्ते। पदेपदेऽभ्यन्तरवह्निनाऽर्दितः कौटुम्बिकः क्रुध्यति वै जनाय ॥८॥ क्वचिन्निगीर्णोऽजगराहिना जनो नावैति किंचिद्विपिनेऽपविद्धः। दष्टः स्म शेते क्व च दन्दशूकैरन्धोऽन्धकूपे पतितस्तमिस्रे ॥९॥ कर्हि स्मचित्क्षुद्ररसान्विचिन्वं-स्तन्मक्षिकाभिर्व्यथितो विमानः। तत्रातिकृच्छ्रात्प्रतिलब्धमानो बलाद्विलु-म्पन्त्यथ तं ततोऽन्ये ॥१०॥ क्वचिच्च शीतातपवातवर्ष प्रतिक्रियां कर्तुम-नीश आस्ते। क्वचिन्मिथो विपणन् यच्च किंचिद्विद्वेषमृच्छत्युत वित्तशाठ्यात् ॥ ११ ॥ क्वचित्क्वचित्क्षीणधनस्तु तस्मिन् शय्यासनस्थानविहारहीनः। याचन्परादप्रतिलब्धकामः पारक्यदृष्टिर्लभतेऽवमानम् ॥ १२ ॥ अन्यो-ऽन्यवित्तव्यतिषङ्गवृद्ध वैरानुबन्धो विवहन्मिथश्च। अध्वन्यमुष्मिन्नुरुकृच्छ्र-वित्तबाधोपसर्गैर्विहरन्विपन्नः ॥ १३ ॥ तांस्तान्विपन्नान् स हि तत्र तत्र

विहाय जातं परिगृह्य सार्थः । आवर्ततेऽद्यापि न कश्चिदत्र वीराध्वनः पारमुपैतियोगम् ॥ १४ ॥ मनस्विनोनिर्जितदिग्गजेन्द्रा ममेति सर्वे भुवि बद्धवैराः । मृधे शयीरन् न तु तद्व्रजन्ति यन्न्यस्तदण्डो गतवैरोऽभियाति ॥ १५ ॥ प्रसज्जति क्वापि लताभुजाश्रयस्तदाश्रया व्यक्तपदद्विजस्पृहः क्वचित्कदाचिद्धरिचक्रतस्त्रसन्सख्यं विधत्ते बककङ्कगृध्रैः ॥ १६ ॥ तैर्वञ्चितो हंसकुलं समाविशन् न रोचयन् शीलमुपैतिवानरान् । तज्जातिरासेन सुनिर्वृतेन्द्रियः परस्परोद्वीक्षणविस्मृतावधि ॥ १७ ॥ द्रुमेषु रंस्यन्सुतदारवत्सलो व्यवायदीनो विवशः स्वबन्धने । क्वचित्प्रमादाद्गिरि कन्दरे पतन्वल्लीं गृहीत्वा गजभीत आस्थितः ॥ १८ ॥ अतः कथंचित्सविमुक्त आपदः पुनश्च सार्थं प्रविशत्यरिंदम । अध्वन्यमुष्मिन्नजया निवेशितो भ्रमज्जनोऽद्यापि न वेद कश्चन ॥ १९ ॥ रहूगणत्वमपि ह्यध्वनोऽस्य संन्यस्त दण्डः कृतभूतमैत्रः । असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तरातिपारम् ॥ २० ॥ राजोवाच । अहो नृजन्माखिल-

जन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन्। न यद्धृषीकेशयशः कृतात्मनां महात्मनां वः प्रचुरः समागमः ॥ २१ ॥ न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला। मौहूर्तिकाद्यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतोऽविवेकः ॥ २२ ॥ नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः। ये ब्राह्मणा गामवधूतलिङ्गाश्चरन्ति तेभ्यः शिवमस्तु राज्ञाम् ॥ २३ ॥ श्रीशुक उवाच। इत्येवमुत्तरामातः स वै ब्रह्मर्षिसुतः सिन्धुपतय आत्मसतत्त्वं विगणयतः परानुभावः परमकारुणिकतयोपदिश्य रहूगणेन सकरुणमभिवन्दितचरण आपूर्णार्णव इव निभृतकरणोर्म्याशयो धरणिमिमां विचचार ॥ २४ ॥ सौवीरपतिरपि सुजनसमवगतपरमात्मसतत्त्व आत्मन्यविद्याऽध्यारोपितां देहात्ममतिं विससर्ज ॥ एवं हि नृप भगवदाश्रिताश्रितानुभावः ॥ २५ ॥ राजोवाच। यो ह वा इह बहुविदा महाभागवत त्वयाऽभिहितः परोक्षेण वचसा जीवलोकभवाध्वा स ह्यार्यमनीषया कल्पितविषयो नाञ्जसाऽव्युत्पन्नलोकसमधिगमः। अथ

तदेवैतद्दुरवगम समवेतानुकल्पेन निर्दिश्यतामिति ॥ २६ ॥

इति श्रीभक्तिकौस्तुभे भरतोपाख्याने भवाटवी वर्णनं नाम सप्तपञ्चाश आह्निकः।



स होवाच । य एष देहात्ममानिनां सत्वादिगुणविशेषविकल्पितकुशला-कुशलसमवहारविनिर्मितविविधदेहावलिभिर्वियोगसयोगाद्यनादिसंसारानु-भवस्य द्वारभूतेन षडिन्द्रियवर्गेण तस्मिन्दुर्गाध्ववद् सुगमेऽध्वन्यापतित ईश्व-रस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोकोयं यथा वणिक्सार्थोऽर्थ-परः स्वदेहनिष्पादितकर्मानुभवः श्मशानवदशिवतमायां संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहस्तत्तापोपशमनीं हरिगुरुचरणारविन्दमधु-करानुपदवीमवरुन्धे यस्यामु ह वा एते षडिन्द्रियनामानः कर्मणा दस्यव एव ते ॥ १ ॥ तद्यथा पुरुषस्य धनं यत्किंचिद्धर्मौपयिकं बहुकृच्छ्राधिगतं साक्षात्परमपुरुषाराधनलक्षणो योऽसौ धर्मस्तं तु सांपराय उदाहरन्ति । तद्धर्म्यं धनं दर्शनस्पर्शनश्रवणास्वादनावघ्राणसंकल्पव्यवसायगृहग्राम्योप-भोगेन कुनाथस्याजितात्मनो यथा सार्थस्य तथाऽजितात्मनो विलुम्पन्ति

॥ २ ॥ अथ च यत्र कौटुम्बिका दारापत्यादयो नाम्ना कर्मणा वृकशृगाला एवानिच्छतोऽपि कदर्यस्य कुटुम्बिन उरणकवत्संरक्ष्यमाणं मिषतोपि हरन्ति ॥३॥ यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धबीजं क्षेत्रं पुनरेवावपनकाले गुल्मतृणवीरुद्भिर्गह्वरमिव भवति एवमेव गृहाश्रमः कर्मक्षेत्रं यस्मिन् न हि कर्माण्युत्सीदन्ति यदयं कामकरण्ड एष आवसथः ॥४॥ तत्र गतो दंशमशकसमापसदैर्मनुजैः शलभशकुन्ततस्करमूषकादिभिरुपरुध्यमानबहिःप्राणः क्वचित्परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसाऽनुपपन्नार्थं नरलोकं गन्धर्वनगरमुपपन्नमिति मिथ्यादृष्टिरनुपश्यति ॥५॥ तत्र च क्वचिदातपोदकनिभान् विषयानुपधावति पानभोजनव्यवायादिव्यसनलोलुपः ॥ ६ ॥ क्वचिच्चाशेषदोषनिषदनं पुरीषविशेषं तद्वर्णगुणनिर्मितमतिःसुवर्णमुपादित्सत्यग्निकामकातर इवोल्मुकपिशाचम् ॥ ७ ॥ अथ कदाचिन्निवासपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेश एतस्यां संसाराटव्यामितस्ततः परिधावति ॥८॥ क्वचिच्च वात्यौपम्यया प्रमदयाऽरोहमारोपितस्तत्कालरजसा रजनी-

भूत्वा इवासाधुमर्यादो रजस्वलाक्षो दिग्देवता अतिरजस्वलमतिर्न विजानाति ॥ ९ ॥ क्वचित्सकृदवगतविषयवैतथ्यः स्वयं पराभिध्यानेन विभ्रंशितस्मृतिस्तयैव मरीचितोयप्रायांस्तानेवाभिधावति ॥१०॥ क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं प्रत्यक्षं परोक्षं वा रिपुराजकुलनिर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः ॥११॥ स यदा दुग्धपूर्वसुकृतस्तदा कारस्करकाकतुण्डाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थशून्यद्रविणाञ्जीवन्मृतान्स्वयं जीवन्म्रियमाण उपधावति ॥१२॥ एकदाऽसत्प्रसंगान्निकृतमतिर्व्युदकस्रोतःस्खलनवदुभयतोऽपि दुःखदं पाखण्डमभियाति ॥१३॥ यदा तु परबाधयान्ध आत्मने नोपनमति तदा हि पितृपुत्रबर्हिष्मतः पितृपुत्रान् वा स खलु भक्षयति ॥१४॥ क्वचिदासाद्य गृहं दाववत्प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं निर्वेदमुपगच्छति ॥१५॥ क्वचित्कालविषमितराजकुलरक्षसाऽपहृतप्रियतमधनासुः प्रमृतक इव विगतजीवलक्षण आस्ते ॥१६॥ कदाचिन्मनोरथोपगतपितृपितामहाद्यसत्सदिति स्वप्ननिर्वृतिलक्षणमनुभवति

॥१७॥ क्वचिद्गृहाश्रमकर्मचोदनाऽति-भरगिरिमारुरुक्षमाणो लोकव्यसन-कर्शितमनाः कण्टकशर्कराक्षेत्रं प्रविशन्निव सीदति ॥१८॥ क्वचिच्च दुःसहेन कायाभ्यन्तरवह्निना गृहीतसारः स्वकुटुम्बाय क्रुध्यति ॥१९॥ स एव पुनर्निद्राऽजगरगृहीतोऽन्धे तमसि मग्नः शून्यारण्य इव शेते नान्यत्किंचन वेद शव इवापविद्धः ॥२०॥कदाचिद्भग्नमानदंष्ट्रो दुर्जनदन्दशूकैरलब्धनिद्राक्षणो व्यथितहृदयेनानुक्षीयमाणविज्ञानोऽन्धकूपेऽन्धवत् पतति॥२१॥ कर्हिस्मचित्काममधुलवान्विचिन्वन्यदा परदारपरद्रव्याण्यवरुन्धानो राज्ञा स्वामिभिर्वा निहतः पतत्यपारे निरये ॥ २२ ॥ अथ च तस्मादुभयथाऽपि हि कर्मास्मिन्नात्मनः संसारावपनमुदाहरन्ति ॥ २३ ॥ मुक्तस्ततो यदि बन्धाद्देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनवस्थितिः ॥ २४ ॥ क्वचिच्च शीतवाताद्यनेकाधिदैविकभौतिकात्मीयानां दशानां प्रतिनिवारणेऽकल्पो दुरन्तचिन्तया विषण्ण आस्ते ॥ २५ ॥ क्वचिन्मिथो व्यवहरन्यत्किंचिद्धनमन्येभ्यो वा काकिणिकामात्रमप्यपहरन्यत्किंचिद्वा विद्वेषमेति वित्तशा-

स्यात् ॥२६॥ अप्यन्यमुष्मिन्निम उपसर्गास्तथा सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्याऽवमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः ॥ २७ ॥ क्वापि देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेकविज्ञानो यद्विहारगृहारम्भाकुलहृदयस्तदाश्रयावसक्तसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्माऽपारेऽन्धे तमसि प्रहिणोति ॥२८॥ कदाचिदीश्वरस्य भगवतो विष्णोश्चक्रात्परमाण्वादिद्विपरार्धापवर्गोपलक्षणात्परिवर्तितेन वयसा रंहसा हरत आब्रह्मतृणस्तम्बादीनां भूतानामनिमिषतो मिषतां वित्रस्तहृदयस्तमेवेश्वरं कालचक्रनिजायुधं साक्षाद्भगवन्तं यज्ञपुरुषमनादृत्य पाखण्डदेवताः कङ्कगृध्रबकवटप्राया आर्यसमयपरिहृताः सांकेत्येनाभिधत्ते ॥२९॥ यदा पाखण्डिभिरात्मवञ्चितैस्तैरुरुवञ्चितो ब्रह्मकुलं समावसंस्तेषां शीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठानेन भगवतो यज्ञपुरुषस्याराधनमेव तदरोचयन् शूद्रकुलं भजते निगमाचारेऽशुद्धितो यस्य मिथुनीभावः कुटुम्बभरणं यथा वानरजातेः

॥ ३० ॥ तत्रापि निरवरोधः स्वैरेण विरहन्नतिकृपणबुद्धिरन्योन्यमुख-निरीक्षणादिना ग्राम्यकर्मणैव विस्मृतकालावधिः ॥ ३१ ॥ क्वचिद् द्रुमवदैहिकार्थेषु गृहेषुरंस्यन्यथा वानरः सुतदारवत्सलो व्यवायक्षणः ॥३२॥ क्वचिद्एवमध्वन्यवरुन्धानो मृत्युगजभयात्तमसि गिरिकन्दरप्राये ॥ ३३ ॥ क्वचिच्छीतवाताद्यनेकदैविकभौतिकात्मीयानां दुःखानां प्रतिनिवारणेऽकल्पो दुरन्तविषयविषण्ण आस्ते ॥ ३४ ॥ क्वचिन्मिथो व्यवहरन्यत्किंचिद्धनमुपयाति वित्तशाठ्येन ॥३५॥ क्वचित्क्षीणधनः शय्यासनशनाद्युपभोगविहीनो यावदप्रतिलब्धमनोरथोपगतादानेऽवसितमतिस्ततस्ततोऽवमानादीनि जनादभिलभते ॥३६॥ एवं वित्तव्यतिषंगविवृद्धवैरानुबन्धोऽपि पूर्ववासनया मिथ उद्वहत्यथापवहति ॥ ३७ ॥ एतस्मिन्संसाराध्वनि नानाक्लेशोपसर्गबाधित आपन्नविपन्नो यत्र यस्तमु ह वावेतरस्तत्र विसृज्य जातं जातमुपादाय शोचन्मुह्यन्बिभ्यद्विवदन्क्रन्दन्संहृष्यन्गायन्नह्यमानः साधुवर्जितो नैवावर्ततेऽद्यापि यत आरब्ध एष नरलोकसार्थोऽयमध्वनः पारमुपदिशन्ति ॥ ३८ ॥

यदिदं योगानुशासनं न वा एतदवरुन्धते यन्न्यस्तदण्डा मुनय उपशमशीला उपरतात्मानः समवगच्छन्ति ॥३९॥ यदपि दिगिभजयिनो यज्विनो ये वै राजर्षयः किं तु परं मृधे शयीरन्नस्यामेव ममेयमिति कृतवैरानुबन्धायां विसृज्य स्वयमुपसंहृताः ॥४०॥ कर्मवल्लीमवलम्ब्य तत आपदः कथंचिन्नरकाद्विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो नरलोकसार्थमुपयाति एवमुपरि गतोऽपि ॥४१॥ तस्येदमुपगायन्ति । आर्षभस्येह राजर्षेर्मनसापि महात्मनः । नानुवर्त्मार्हति नृपो मक्षिकेव गरुत्मतः ॥ ४२ ॥ यो दुस्त्यजान्दारसुतान्सुहृद्राज्यं हृदिस्पृशः । जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ ४३ ॥ यो दुस्त्यजान्क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् । नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवाऽनुरक्तमनसामभवोऽपि फल्गुः ॥४४॥ यज्ञाय धर्मपतये विधिनैपुणाय योगाय सांख्यशिरसे प्रकृतीश्वराय । नारायणाय हरये नम इत्युदारं हास्यन्मृगत्वमपि यः समुदाजहार ॥४५॥ य इदं भागवत सभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्य-

धन्यं यशस्यं स्वर्ग्यापवर्ग्यं वाऽनुशृणोत्याख्यास्यति अभिनन्दति च सर्वा एवाशिष आत्मन आशास्ते न कांचन परत इति ॥४६॥

इति श्रीभक्तिकौस्तुभे भरतोपाख्याने परोदयविवरणं नाम अष्टपञ्चाश आह्निकः ।

राजोवाच । समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम् । इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ १ ॥ श्रीशुक उवाच । साधु पृष्टं महाराज हरेश्चरितमद्भुतम् । यत्र भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ २ ॥ जिह्वां लब्ध्वापि यो विष्णुं कीर्तनीयं न कीर्तयेत् । लब्ध्वापि मोक्षनिःश्रेणीं नारोहति स दुर्मतिः ॥ ३ ॥ तस्मात् गोविन्दमाहात्म्यमानन्दरससुन्दरम् । शृणुयात्कीर्तयेन्नित्यं स कृतार्थो न संशयः ॥ ४ ॥ निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः । स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ५ ॥ जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान् । तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत् ॥ ६ ॥ यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमायया । सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्य-

माणस्तम ईश्यत्यसौ ॥ ७ ॥ कालं चरन्तं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत् । य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यजः ॥ ८ ॥ अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा । प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे ॥९॥ नारद उवाच । निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् । प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥ १०॥ हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा । वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥११॥ तस्माद् वैरानुबन्धेन निर्वैरेण भयेन च । स्नेहात् कामेन वा युञ्ज्यात् कथंचिन्नेक्षते पृथक् ॥१२॥ यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् । न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥१३॥ कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् । संरम्भभययोगेन विन्दते तत्सरूपताम् ॥१४॥ कामाद् द्वेषाद् भयात् स्नेहात् यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः । तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥१५ ॥ नारद उवाच । भ्रातर्यैवं विनिहते हरिणा क्रोडमूर्तिना । हिरण्यकशिपू राजन् पर्यतप्यद्

रुषा शुचा ॥१६॥ आह चेदं रुषा पूर्णः संदष्टदशनच्छदः । कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम् ॥१७॥ सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् । पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ १८ ॥ तस्यत्यक्तस्वभावस्य घृणेर्मायावनौकसः । भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥१९॥ मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै । रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ॥ २० ॥ तस्मिन् कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ । विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥२१॥ तावद् यात भुवं यूयं विप्रक्षत्रसमेधिताम् । सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः ॥ २२ ॥ यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः । तं तं जनपदं यात संदीपयत वृश्चत ॥ २३ ॥ इति ते भर्तृनिर्देशमादाय शिरसादृताः । तथा प्रजानां कदनं विदधुः कदनप्रियाः । त एव मनुजा भूत्वा निन्दन्ति वैदिकान्सदा ॥ २४ ॥ हिरण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः । कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥ २५ ॥ हिरण्यकशिपुरुवाच । अम्बाम्ब हे वधूः पुत्रा वीरं

माऽर्हथ शोचितुम् । रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २६ ॥
भूतानामिह संवासः प्रपायामिव सुव्रते । दैवेनैकत्र नीतानामुन्नीतानां स्वक-
र्मभिः ॥ २७ ॥ नित्य आत्माऽव्ययः शुद्धः सर्वगः सर्ववित् परः धत्तेऽसावा-
त्मनो लिंगं मायया विसृजन् गुणान् ॥ २८ ॥ यथाम्भसा प्रचलता तरवोपि
चला इव । चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः ॥२९॥ एवं गुणैर्भ्राम्य-
माणे मनस्यविकलः पुमान् । याति तत्साम्यतां भद्रे ह्यलिंगो लिंगवानिव
॥ ३० ॥ एष आत्मविपर्यासो ह्यलिंगे लिंगभावना । एष प्रियाप्रियैर्योगो
वियोगः कर्मसंसृतिः ॥३१॥ संभवश्च विनाशश्च शोकश्च विविधः स्मृतः ।
अविवेकश्च चिन्ता च विवेकास्मृतिरेव च ॥३२॥ अत्राप्युदाहरन्तीममिति-
हासं पुरातनम् । यमस्य प्रेतबन्धूनां संवादं तं निबोधत ॥ ३३ ॥ उशी-
नरेष्वभूद्राजा सुयज्ञ इति विश्रुतः । सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत
॥ ३४ ॥ तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितम् । आह तान् बालको भूत्वा
यमः स्वयमुपागतः ॥ ३५ ॥ यम उवाच । अहो अमीषां वयसाधिकानां

विपश्यतां लोकविधिं विमोहः। यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचन्त्यपार्थम् ॥ ३६ ॥ अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः। अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे ॥३७॥ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते च यः। तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसंग्रहे प्रभुः ॥ ३८ ॥ पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति। जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ३९ ॥ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले न भवन्ति सर्वशः। न तत्र ह्यात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४० ॥ इदं शरीरं पुरुषस्य मोहजं यथा पृथग् भौतिकमीयते गृहम्। यथौदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥४१॥ यथाऽनलो दारुषु भिन्न ईयते यथाऽनिलो देहगतः पृथक् स्थितः। यथा नभः सर्वगतं न सज्जते तथा पुमान् सर्वगुणाश्रयः परः ॥ ४२ ॥ सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ।

यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित् ॥४३॥ ततः शोचत मा यूयं परं चात्मानमेव च। क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा ॥ ४४ ॥ स्वपराभिनिवेशेन विना ज्ञानेन देहिनाम्। ज्ञानेनात्मानमीक्षन्ते ज्ञानिनस्तत्त्वदर्शिनः ॥ ४५ ॥ नारद उवाच। हिरण्यकशिपू राजन्नजेयमजरामरम्। आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥४६॥ स तेपे मन्दरद्रोण्यां तपः परमदारुणम्। ऊर्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठाश्रितावनिः। ॥४७॥ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः। तिर्यगूर्ध्वमधो लोकानतपद् विष्वगीरितः ॥ ४८ ॥ चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः। निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥४९॥ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः। धात्रे विज्ञापयामासुर्देवदेव जगत्पते। दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ॥ ५० ॥ तस्यायं किल संकल्पश्चरतो दुश्चरं तपः। कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः। अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ॥ ५१ ॥ किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवा-

दिभिः। इति विज्ञापितो देवैर्भगवानत्मभूर्नृप। परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥५२॥ न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः। पिपीलिकाभिराचीर्ण-मेदस्त्वङ्मांसशोणितम् ॥५३॥ ब्रह्मोवाच। उत्तिष्ठोत्तिष्ठ भद्रं ते तपः सिद्धोऽसि काश्यप। वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ ५४ ॥ अद्राक्षमहमेतत्ते हृत्सारं महदद्भुतम्। दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥५५॥ नैतत् पूर्वर्षयश्चक्रु र्न करिष्यन्ति चापरे। निरम्बुर्धारयेत् प्राणान् को वै दिव्यसमाः शतम् ॥ ५६ ॥ व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम्। तपोनिष्ठेन भवता जितोऽहं दितिनन्दन। ततस्त आशिषः सर्वा ददाम्यसुरपुङ्गव ॥५७॥ कमण्डलुजलेनौक्षद् दिव्येनामोघराधसा ॥५८॥ स तत् कीचकवल्मीकात् सहओजो बलान्वितः। सर्वावयवसंपन्नो वज्रसंहननो युवा। उत्थितस्तप्तहेमाभोविभावसुरिवैधसः ॥ ५९ ॥ हिरण्यकशिपुरुवाच। यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम। भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो ॥६०॥ नान्तर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः।

न भूमौ नाम्बरे मृत्युर्ननरैर्नमृगैरपि ॥ ६१ ॥ व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः अप्रतिद्वन्द्वतां युद्धे ऐकपत्यं च देहिनाम् ॥ ६२ ॥ सर्वेषाम् लोकपालानां महिमानं यथात्मनः । तपोयोगप्रभावानां यन्नरिष्यति कर्हिचित् ॥६३॥

इति श्रीभक्तिकौस्तुभे हिरण्यकशिपोर्वरयाचनं नाम एकोनषष्टितम आह्निकः ।

ब्रह्मोवाच । तातेमे दुर्लभाः पुंसां यान् वृणीषे वरान् मम । तथापि वितराम्यंग वरान् यदपि दुर्लभान् ॥ १ ॥ एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः । भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन् ॥ २ ॥ स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः । त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ॥ ३ ॥ तमंग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः । उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥ ४ ॥ जगुर्महेन्द्रासनमोजसा स्थितं विश्वावसुस्तुम्बुरुरस्मदादयः । गन्धर्वसिद्धा ऋषयोऽस्तुवन् मुहुर्विद्याधरा अप्सरसश्च पाण्डव॥५॥तस्योग्रदण्डसंविग्नाः सर्वे लोकाः

सपालकाः । अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ ६ ॥ तेषामाविरभू-
द्वाणी अरूपा मेघनिस्वना । सन्नादयन्ती ककुभः साधूनामभयंकरी ॥ ७ ॥
मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः । मद्दर्शनं हि भूतानां सर्वश्रेयो-
पपत्तये ॥ ८ ॥ ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य यत् । तस्य शान्तिं
करिष्यामि कालं तावत् प्रतीक्षत ॥ ९ ॥ यदा देवेषु वेदेषु गोषु विप्रेषु
साधुषु । धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ १० ॥ निर्वैराय
प्रशान्ताय स्वसुताय महात्मने । प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम्
॥ ११ ॥ नारद उवाच । तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः । प्रह्लादो-
ऽभून्महांस्तेषां गुणैर्महदुपासकः ॥ १२ ॥ ब्रह्मण्यः शीलसंपन्नः सत्यसंधो
जितेन्द्रियः । आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः ॥ १३ ॥ दासवत्
संनतार्याङ्घ्रिः पितृवद् दीनवत्सलः । भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वर-
भावनः । विद्यार्थरूपजन्माढ्यो मानस्तम्भविवर्जितः ॥ १४ ॥ नोद्विग्न-
चित्तो व्यसनेषु निःस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् । दान्तेन्द्रियप्राण-

शरीरधीः सदा प्रशान्तकामो रहितासुरोसुरः ॥ १५ ॥ न्यस्तक्रीडनको बालो जडवत्तन्मनस्कया । कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ १६ ॥ आसीनः पर्यटन्नश्नञ्शयानः प्रपिबन् ब्रुवन् । नानुसंधत्त एतानि गोविन्दपरिरम्भितः ॥ १७ ॥ क्वचिद्रुदति वैकुण्ठचिन्ताशबलचेतनः । क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥ १८ ॥ नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् । क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ १९ ॥ क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः । अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ २० ॥ स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिञ्चनसंगलब्धया । तन्वन्परां निर्वृतिमात्मनो मुहुर्दुःसंगदीनान्यमनः शमं व्यधात् ॥ २१ ॥ तस्मिन् महाभागवते महामान्ये महात्मनि । हिरण्यकशिपू राजन्नकरोदघमात्मजे ॥ २२ ॥ नारद उवाच । पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः । शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ २३ ॥ तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् । पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान्

॥ २४ ॥ एकदाऽसुरराट् पुत्रमंकमारोप्य पाण्डव । पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥ २५ ॥ प्रह्लाद उवाच । तत् साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् । हित्वात्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ २६ ॥ गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः। प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ २७ ॥ वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा । बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ २८ ॥ बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् । भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ॥ २९ ॥ प्रह्लाद उवाच । स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः । विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ३० ॥ स यदानुव्रतः पुंसां पशुबुद्धिर्विभिद्यते । अन्य एष तथाऽन्योऽहमिति भेदगताऽसती ॥ ३१ ॥ स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते । मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ ३२ ॥ यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ । तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ ३३ ॥

नारद उवाच। एतावद् ब्रह्मणायोक्त्वा विरराम महामतिः। तं निर्भर्त्स्याथ कुपितः स दीनो राजसेवकः ॥ ३४ ॥ आनीयतामरे वेत्रमस्माकमयशस्करः। कुलांगारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ ३५ ॥ दैत्यचन्दनवने जातोऽयं कण्टकद्रुमः। यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ ३६ ॥ तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम्। दैत्येन्द्रं दर्शयामास मातृमृष्टमलंकृतम् ॥ ३७ ॥ आरोप्यांकमवघ्राय मूर्धन्यश्रुकलाम्बुभिः। आसिञ्चन् विकसद्वक्त्रमिदमाह युधिष्ठिर ॥ ३८ ॥ हिरण्यकशिपुरुवाच। प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम्। कालेनैतावतायुष्मन् यदशिक्षद् गुरोर्भवान् ॥ ३९ ॥ प्रह्लाद उवाच। श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ ४० ॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा। क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ ४१ ॥ निशम्यैतत् सुतवचो हिरण्यकशिपुस्तदा। गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ ४२ ॥ ब्रह्मबन्धो किमेतत् ते विपक्षं श्रयताऽसता।

असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ ४३ ॥ सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः । तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ ४४ ॥ गुरुपुत्र उवाच । न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो । नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं कददाः स्म मानः ॥ ४५ ॥ नारद उवाच । गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् । न चेद् गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः ॥ ४६ ॥ प्रह्लाद उवाच । मतिर्न कृष्णे परतः स्वतो व मिथोभिपद्येत गृहव्रतानाम् । अदान्तगोभिर्विशतां तमिस्रं पुनःपुनश्चर्वितचर्वनानाम् ॥४७॥ न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः । अन्धा यथान्धैरपनीयमाना वागीशतन्त्यामुरुदाम्निबद्धाः ॥ ४८ ॥ नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः । महीयसां पादरजोभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥४९॥ इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा । अन्धीकृतात्मा स्वोत्संगान्निरस्यत महीतले ॥ ५० ॥ आहामर्षरुषाविष्टः कषायीभूतलोचनः । वध्यतामाश्वयं

वध्यो निःसारयत नैर्ऋताः ॥ ५१ ॥ अयं मे भ्रातृहा सोऽयं हित्वा स्वान् सुहृदोऽधमः । पितृव्यहन्तुर्यः पादौ विष्णोर्दासवदर्चति ॥ ५२ ॥ परोऽप्यपत्यं हितकृद्यथौषधं स्वदेहजोऽप्यामयवत् सुतोऽहितः । छिन्द्यात् तदंगं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात् ॥५३॥ सर्वैरुपायैर्हन्तव्यः संभोजशयनासनैः । सुहृल्लिंगधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥५४॥ परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि । युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः ॥ ५५ ॥ धर्ममर्थं च कामं च नितरां चानुपूर्वशः । प्रह्लादायोचत् राजन् प्रश्रयावनताय च ॥ ५६ ॥ यदाचार्यः परावृत्तो गृहमेधीयकर्मसु । वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५७ ॥ अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः । उवाचविद्वां स्तन्निष्ठां कृपया प्रहसन्निव ॥५८॥

इति श्रीभक्तिकौस्तुभे प्रह्लादस्य गुरुगृहेवासो नाम पष्ठितम आह्निकः ।

प्रह्लाद उवाच । कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह । दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ १ ॥ यथा हि पुरुषस्येह विष्णोः पादोप-

सर्पणम् । यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ २ ॥ सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् । सर्वत्र लभ्यते दैवाद् यथा दुःखमयत्नतः ॥ ३ ॥ तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् । न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥ ४॥ ततो यतेत कुशलः क्षेमाय भयमाश्रितः । शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥ ५ ॥ पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः । निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ६ ॥ मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः । जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ ७ ॥ दुरापूरेण कामेन मोहेन च बलीयसा । शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ ८ ॥ को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः । स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥ ९॥ कोन्वर्थतृष्णां विसृजेत्प्राणेभ्योपि य ईप्सितः । यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ १० ॥ कथं प्रियाया अनुकम्पितायाः संगं रहस्यं रुचिरांश्च मन्त्रान् । सुहृत्सु च स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ ११ ॥ पुत्रान् स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन्स्व-

सुतौ पितरौ च दीनौ । गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीस्तु कुल्याः पशुभृत्यवर्गान् ॥ १२ ॥ त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः । औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः ॥ १३ ॥ कुटुम्बपोषाय वियन्निजायुर्न बुध्यतेऽर्थं विहतं प्रमत्तः । सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥१४॥ वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः । प्रेत्येह चाथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी ॥१५॥ विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन् स्वलोकाय न कल्पते वै । यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः ॥१६॥ यतो न कश्चित् क्व च कुत्रचिद्वा दीनः स्वमात्मानमलं समर्थः । विमोचितुं कामदृशां विहारक्रीडामृगो यन्निगडो विसर्गः ॥ १७ ॥ ततो विदूरात् परिहृत्य दैत्या दैत्येषु संगं विषयात्मकेषु । उपेत नारायणमादिदेवं विमुक्तसंगैरिषितोऽपवर्गः ॥१८॥ न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः । आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः ॥१९॥ परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु । भौतिकेषु

विकारेषु भूतेष्वथ महत्सु च ॥ २० ॥ गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा । एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २१ ॥ प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् । व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥ २२ ॥ केवलानुभवानन्दस्वरूपः परमेश्वरः । माययाऽन्तर्हितैश्वर्य ईयते गुणसर्गया ॥ २३ ॥ तस्मात् सर्वेषु भूतेषु दयां कुरुत सौहृदम् । आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ २४ ॥ तुष्टे च तत्र किमलभ्यमनन्त आद्ये किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः । धर्मादयः किमगुणेन च काङ्क्षितेन सारंजुषां चरणयोरुपगायतां नः ॥ २५ ॥ धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता । मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ २६ ॥ ज्ञानं तदेतदमलं दुरवापमाह नारायणो नरसखः किल नारदाय । एकान्तिनां भगवतस्तदकिञ्चनानां पादारविन्दरजसाप्लुतदेहिनां स्यात् ॥ २७ ॥ भवतामपि भूयान्मे यदि श्रद्दधते वचः । वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा

॥ २८ ॥ तस्माद् भवद्भिः कर्त्तव्यं कर्मणां त्रिगुणात्मनाम् । बीजनिर्हरणं योगः प्रवाहोपरमो धियः ॥ २९ ॥ तत्रोपायसहस्राणामयं भगवतोदितः । यदीश्वरे भगवति यथा यैरञ्जसा रतिः ॥ ३० ॥ गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च । संगेन साधुभक्तानामीश्वराराधनेन च ॥ ३१ ॥ श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् । तत्पादाम्बुरुहध्यानात्तल्लिंगेक्षार्हणादिभिः ॥ ३२ ॥ हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः । इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥ ३३ ॥ एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे । वासुदेवे भगवति यया संलभते रतिम् ॥ ३४ ॥ निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि । यदातिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ ३५ ॥ यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् । मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्ममतिर्गतत्रपः ॥ ३६ ॥ तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः । निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेन समेत्यधोक्ष-

जम् ॥ ३७ ॥ अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशात-
नम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३८ ॥
कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः । स्वस्यात्मनः
सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ ३९ ॥ रायः कलत्रं
पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः । सर्वेऽर्थकामाः क्षणभंगुरायुषः
कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः ॥ ४० ॥ एवं हि लोकाः क्रतुभिः कृता
अमी क्षयिष्णवः सातिशया न निर्मलाः । तस्माददृष्टश्रुतदूषणं परं भ-
क्त्यैकयेशं भजतात्मलब्धये ॥ ४१ ॥ यदर्थ्यर्थेह कर्माणि विद्वन्मान्यः
सकृन्नरः । करोत्यतो विपर्यासममोघं विन्दते फलम् ॥ ४२ ॥ सुखाय दुःख-
मोक्षाय संकल्प इह कर्मिणः । सदाप्नोतीहया दुःखमनीहायाः सुखावृतः
॥ ४३ ॥ कामान्कामयते काम्यैर्यदर्थमिह पूरुषः । स वै देहस्तु पारक्यो
भंगुरो यात्युपैति च ॥ ४४ ॥ किमु व्यवंहितापत्यदारागारधनादयः । राज्यं
कोशगजामात्यभृत्याप्ता ममतास्पदाः ॥ ४५ ॥ किमेतैरात्मनस्तुच्छैः सह

देहेन नश्वरैः । अनर्थैरर्थसंकाशैर्नित्यानन्दमहोदधेः ॥ ४६ ॥ निरूप्यतामिह स्वार्थः कियान्देहभृतोऽसुराः । निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४७ ॥ कर्माण्यारभते देही देहेनात्मानुवर्तिना । कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥४८॥ तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः । भजतानीहयात्मानमनीहं हरिमीश्वरम् ॥४९॥ सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः । भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥ ५० ॥ देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा । भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयम् ॥५१॥ नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः । प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥ ५२ ॥ न दानं न तपो नेज्या न शौचं न व्रतानि च । प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥ ५३ ॥ ततो हरौ भगवति भक्तिं कुरुत दानवाः । आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥५४॥ दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः । खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५५ ॥ एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः । एकान्तभक्तिर्गो-

विन्दे यत्सर्वत्र तदीक्षणम् ॥ ५६ ॥

इति श्रीभक्तिकौस्तुभे दैत्यबालकान् प्रति प्रह्लादस्योपदेशो नाम एकषष्टितम आह्निकः ।

अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् । जगृहुर्निरवद्यत्वात् नैव गुर्वनुशिक्षितम् ॥ १ ॥ अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् । आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा ॥ २ ॥ श्रुत्वा तदप्रियं दैत्यो दुःसहं तनयानयम् । आह्लेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ॥ ३ ॥ रे दुर्विनीत मन्दात्मन् कुलभेदकराधम । स्तब्धं मच्छासनोद्धूतं नेष्ये त्वाऽद्य यमक्षयम् ॥ ४ ॥ क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः । तस्य मेऽभीतवन्मूढ शासनं किंबलोऽत्यगाः ॥ ५ ॥ प्रह्लाद उवाच । न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम् । परेऽवरेऽमी स्थिरजंगमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ६ ॥ स ईश्वरः काल उरुक्रमोऽसावोजःसहःसत्त्वबलेन्द्रियात्मा । स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥ ७ ॥ जह्यासुरं भावमिमं त्वमात्मनः समं मनो धत्स्व न सन्ति विद्विषः ।

ऋतेऽजितादात्मन उत्पथस्थितात्तद्धि ह्यनन्तस्य महत् समर्हणम् ॥ ८ ॥ दस्यून्पुरा षण्ण विजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश । जितात्मनोऽज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥ ९ ॥ हिरण्यकशिपुरुवाच । व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे । मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विप्लवा गिरः ॥१०॥ यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः । क्वासौ यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते ॥११॥ एवं दुरुक्तैर्मुहुरर्दयन् रुषा सुतं महाभागवतं महासुरः । खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं तताडातिबलः स्वमुष्टिना ॥ १२ ॥ तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत् । यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामाप्ययमंग मेनिरे ॥ १३ ॥ स सत्वमेनं परितो विपश्यन्स्तम्भस्य मध्यादनुनिर्जिहानम् । नायं मृगो नापि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपम् ॥ १४ ॥ मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम् । प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम् ॥ १५ ॥

करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम्। स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥ १६ ॥ दिवि स्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यम् । चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम् ॥ १७ ॥ ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया। तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत्। स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडतो यद्वदहिर्गरुत्मतः ॥ १८ ॥ असाध्वमन्यन्त हृतौकसोऽमरा घनच्छदा भारत सर्वधिष्ण्यपाः। तं मन्यमानो निजवीर्यशंकितं यद्धस्तमुक्तो नृहरिं महासुरः ॥ १९ ॥ पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे। धराधराभो भयभीतलोचनो ननाद मातंगसमानवत्स्वनः ॥ २० ॥ तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः। कृत्वाऽट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः ॥ २१ ॥ विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाखुं कुलिशाक्षतत्वचम्। द्वार्यूर आपात्य ददार लीलया नखैर्यथाऽहिं गरुडो

मद्भाविषम् ॥ २२ ॥ तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः । ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥ २३ ॥ साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् । अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शंकिता ॥ २४ ॥ प्रह्लादं प्रेषयामास ब्रह्मावस्थितमन्तिके । तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ २५ ॥ तथेति शनकै राजन् महाभागवतोऽर्भकः । उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ २६ ॥ अस्तौषीद् हरिमेकाग्रमनसा सुसमाहितः । प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ २७ ॥ प्रह्लाद उवाच । ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः । नाराधितुं पुरुगुणैरधुनापि पिप्रुः किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ २८ ॥ मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः । नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय ॥ २९ ॥ नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य

यथा मुक्तश्रीः ॥ ३० ॥ तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि
गृणामि यथामनीषम् । नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि
पुमाननुवर्णितेन ॥३१॥ सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो
वयमिवेश न चोद्विजन्तः । क्षेमाय भूतय उतात्मसुखाय चास्य विक्री-
डितं भगवतो रुचिरावतारैः ॥ ३२ ॥ तद्यच्छ मन्युमसुरश्च हतस्त्वयाद्य
मोदेत साधुरपि वृश्चिकसर्पहत्या । लोकाश्च निर्वृतिमिताः प्रतियन्ति
सर्वे रूपं नृसिंह विभयाय जनाः स्मरन्ति ॥ ३३ ॥ नाहं बिभेम्यजित ते-
ऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् । अन्त्रस्रजः क्षतज-
केसरशंकुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ ३४ ॥ त्रस्तोऽस्म्यहं
कृपणवत्सल दुःसहोग्रसंसारचक्रकदनात् ग्रसतां प्रणीतः । बद्धः स्वकर्म-
भिरुशत्तम तेऽङ्घ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा नु ॥ ३५ ॥ यस्मात्
प्रियाप्रियवियोगसयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः । दुःखौ-
पधं तदपि दुःखमतद्धियाहं भूमन् भ्रमामि वद मे तव दास्ययोगम् ।

॥ ३६ ॥ सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह विरिञ्च-गीताः । अञ्जस्तितर्म्यनुगृणन् गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंस-संगः ॥ ३७ ॥ बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमुदन्वति मज्जतो नौः । तप्तस्य तत्प्रतिविधिर्य इहाञ्जसेष्टस्तावद्विभो तनुभृतां त्व-दुपेक्षितानाम् ॥ ३८ ॥ यस्मिन् यतो यर्हि येन च यस्य यस्माद् यस्मै यथा यदुत यस्त्वपरः परो वा । भावः करोति विकरोति पृथक् स्वभावः संचोदितस्तदखिलं भवतः स्वरूपम् ॥ ३९ ॥ माया मनः सृजति कर्म-मयं बलीयः कालेन चोदितगुणानुमतेन पुंसः । छन्दोमयं यदजया-ऽर्पितषोडशारं संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥ ४० ॥ स त्वं हि नित्य-विजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्य विसर्गशक्तिः । चक्रे विसृष्टमजयेश्वर षोडशारे निष्पीड्यमानमुपकर्ष विभो प्रपन्नम् ॥४१॥ दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति यां जनो-ऽयम् । येऽस्मत्पितुः कुपितहासविजृम्भितभ्रूविस्फूर्जितेन लुलिताः स तु

ते निरस्तः ॥ ४२ ॥ तस्मादमुस्तनुभृतामहमाशिषोऽज आयुः श्रियं विभव-
मैन्द्रियमाविरिञ्चात्। नेच्छामि ते विलुलितानुरुविक्रमेण कालात्मनोप-
नय मां निजभृत्यपार्श्वम् ॥ ४३ ॥ कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः
क्वेदं कलेवरमशेषरुजां विरोहः। निर्विद्यते न तु जनो यदपीति विद्वान्
कामानलं मधुलवैः शमयन् दुरापैः ॥ ४४ ॥ क्वाहं रजःप्रभव ईश तमोऽधि-
केऽस्मिन् जातः सुरेतरकुले क्व तवानुकम्पा। न ब्रह्मणो न तु भवस्य न
वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ ४५ ॥ नैषा परावरमति-
र्भवतो ननु स्यात् जन्तोर्यथात्मसुहृदो जगतस्तथापि। संसेवया सुरतरो-
रिव ते प्रसादः सेवानुरूपमुदयो न परावरत्वम् ॥ ४६ ॥ एवं जनं निप-
तितं प्रभवाहिकूपे कामाभिकाममनु यः प्रपतन् प्रसंगात्। कृत्वात्मसात्
सुरर्षिणा भगवन् गृहीतः सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ ४७ ॥
मत्प्राणरक्षणमनन्त पितुर्वधश्च मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम्।
खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि।

॥ ४८ ॥ इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान्विभावयसि हंसि जगत्प्रतीपान्। धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ सत्त्वम् ॥ ४९ ॥ नैतन्मनस्तव कथासु विकुण्ठनाथ संप्रीयते दुरितदुष्टमसाधु तीव्रम्। कामातुरं हर्षशोकभयैषणार्तं तस्मिन् कथं तव गतिं विमृशामि दीनः ॥ ५० ॥ जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित्। घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ५१ ॥ एवं स्वकर्मपतितं भववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतम्। पश्यञ्जनं स्वपरविग्रहवैरमैत्रं हन्तेति पारचर पीपृहि मूढमद्य ॥ ५२ ॥ कोन्वत्र तेऽखिलगुरो भगवन्प्रयास उत्तारणेऽस्य भवसंभवलोपहेतोः। मूढेषु वै महदनुग्रह आर्तबन्धो किं तेन ते प्रियजनाननुसेवतां नः ॥ ५३ ॥ नैवोद्विजे पर दुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहाऽमृतमग्नचित्तः। शोचे ततो विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ५४ ॥ प्रायेण देवमुनयः स्वविमुक्ति-

कामा मौनं चरन्ति विजने न परार्थनिष्ठाः। नैतान् विहाय कृपणान् विमुमुक्ष एको नान्यं त्वदन्य शरणं भ्रमतोऽनुपश्ये ॥५५॥ यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम्। तृप्यन्ति नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ५६ ॥ मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः। प्रायः परं पुरुष ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वाऽत्र तु दाम्भिकानाम् ॥ ५७ ॥ रूपे इमे सदसती तव वेदसृष्टे बीजांकुराविव न चान्यदरूपकस्य। युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ५८ ॥ त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेऽन्द्रियाणि हृदयं चिदनुग्रहश्च। सर्वं त्वमेव सगुणो विगुणश्च भूमन्नान्यत् त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ५९ ॥ नैते गुणा न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः। आद्यन्तवन्त उरुगाय विदन्ति हि त्वामेवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ६० ॥ तत्तेऽर्हत्तम नमः स्तुतिकर्मपूजाः

कर्मस्मृतिश्चरणयोः श्रवणं कथायाम् । संसेवया त्वयि विनेति षडंगया किं भक्तिं जनः परमहंसगतौ लभेत ॥६१॥ विप्राद्द्विषड्गुणयुतादरविन्दनाभ-पादारविन्दविमुखात् श्वपचं वरिष्ठम् । मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं न तु भूरिमानः ॥ ६२ ॥ नृसिंह उवाच । य एतत् कीर्तये-न्मह्यं त्वया गीतमिदं नरः । त्वां च मां च स्मरन्काले कर्मबन्धा-त्प्रमुच्यते ॥ ६३ ॥ त्रिः सप्तभिः पिता पूतः पितृभिः सह तेऽनघ । यत्सा-धोऽस्य गृहे जातो भवान्वै कुलपावनः ॥ ६४ ॥ यत्र यत्र च मद्भक्ताः प्र-शान्ताः समदर्शिनः । साधवः समुदाचारास्ते पूयन्त्यपि कीकटाः ॥ ६५ ॥ सर्वात्मना न हिंसन्ति भूतग्रामेषु किंचन । उच्चावचेषु दैत्येन्द्र मद्भावेन गतस्पृहाः ॥ ६६ ॥ भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः । भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥६७॥ य एतत् पुण्यमाख्यानं विष्णो-र्वीर्योपबृंहितम् । कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशाद्विमुच्यते ॥६८॥ एतद्य आदिपुरुषस्य मृगेन्द्रलीलां दैत्येन्द्रयूथपवधं प्रयतः पठेत । दैत्यात्मजस्य

च सतां प्रवरस्य पुण्यं श्रुत्वानुभावमकुतोभयमेति लोकम् ॥३९॥

इति श्रीभक्तिकौस्तुभे हिरण्यकशिपुवधो नाम द्विषष्टितम आह्निकः ।

श्रीगणेशायनमः । ऋषय ऊचुः । कथं देवो महदेवो विश्वसंहारकारकः । शरभाख्यं महाघोरं विकृतं रूपमास्थितः । किं किं कार्यं कृतं तेन ब्रूहि सर्वमशेषतः ॥ १ ॥ सूत उवाच । एवमभ्यर्थितो देवै र्मतिं चक्रे मुनीश्वराः । तत्तेजो नारसिंहाख्यं संहर्त्तुं परमेश्वरः ॥ २ ॥ तदर्थं स्मृतवान् रुद्रं वीरभद्रम् महाबलम् । आत्मनो भैरवं रूपं महाप्रलयकारकम् ॥ ३ ॥ आजगाम पुरः सद्यः साट्टहासं गणाधिपः । नृसिंहरूपैरत्युग्रैः कोटिभिः परिवारितः ॥ ४ ॥ उत्पतद्भिर्गणवरैः नृत्यद्भिश्च मुदान्वितैः । क्रीडद्भिश्च महावीरैः ब्रह्माद्यैः कन्दुकैरिव ॥ ५ ॥ कल्पान्तज्वलनज्वालो विलसल्लोचनत्रयः । आत्तशस्त्रो जटाजूटो ज्वलद्बालेन्दुमण्डितः ॥ ६ ॥ बालेन्दु द्वितयाकारः तीक्ष्णदंष्ट्राङ्कुराद्वयः । आखण्डलधनुःखण्ड-सन्निभभ्रूलतायुतः ॥ ७ ॥ महाप्रचण्डहुङ्कार-बधिरीकृतदिङ्मुखः । नीलमेघाञ्जनाकारो भीषणश्मश्रुशो-

भितः ॥ ८ ॥ अप्रतिद्वन्द्वबाहुभ्यां भ्रामयंस्त्रिशिखं मुहुः ॥ ९ ॥ ततो निवेदितं तेन किमत्र स्मृतिकारणम् । आज्ञापय जगत्स्वामिन् प्रसादः क्रियतां मयि ॥१०॥ श्रीभगवानुवाच । अकाले भयमुत्पन्नं देवानामति भैरवम् । ज्वलितः स नृसिंहाग्निः शमयैनं दुरासदम् ॥११॥ बोधय सान्त्वयन्नादौ तेन चेन् नोपशाम्यति । तर्हि मत्परमं भावं भैरवं सम्प्रदर्शय ॥ १२ ॥ सूक्ष्मं सूक्ष्मेण संहृत्य स्थूलं स्थूलेन तेजसा । वक्त्रमानय कृत्तिञ्च वीरभद्र ममाज्ञया ॥ १३ ॥ इत्यादिष्टो गणाध्यक्षः प्रशान्तवपुरास्थितः । जगाम रंहसा तत्र यत्रास्ते नरकेशरी ॥ १४ ॥ ततस्तं बोधयामास वीरभद्रो हरो हरिम् । उवाच वाक्यमीशानः पितापुत्रमिवौरसम् ॥ १५ ॥ वीरभद्र उवाच । भगवन्नवतीर्णोऽसि जगत्सुखाय माधव । स्थित्यर्थं विनियुक्तोऽसि परेण परमेष्ठिना ॥ १६ ॥ जगत् सर्वं त्वया सिंह रक्षितं मत्स्यरूपिणा । पुच्छे नावं समाबध्य भ्रमन्नेकार्णवे पुरा ॥ १७ ॥ बिभृता कूर्मरूपेण वाराहेणोद्धृता मही । अनेन हरिरूपेण हिरण्यकशिपुर्हतः ॥ १८ ॥ वामनेन बलिर्बद्धस्त्वया

विक्रमता तथा ॥१९॥ इत्थं यदा यदा लोके दुःखं किञ्चित् प्रजापते । तदा तदावतीर्णस्त्वं तत् करोपि निरामयम् ॥ २० ॥ त्वमेव सर्वभूतानां प्रभवः प्रभुरव्ययः । त्वया धर्माश्च वेदाश्च शुभेमार्गे प्रतिष्ठिताः ॥ २१ ॥ यदर्थमवतारोऽयं निहतः सोऽपि केशव । उपसंहर विश्वात्मन्नाति घोरं वपुस्तव ॥ २२ ॥ त्वत्समः शिवभक्तोहि नास्ति कोऽपि कुतोऽधिकः ॥ २३ ॥ सूत उवाच । इत्युक्तो वीरभद्रेण नृसिंहः शान्तया गिरा । महाघोरेण कोपेन चाधिकं प्राज्वलत्तदा ॥२४॥ नृसिंह उवाच । आगतोऽसि यतस्तत्र गच्छत्वं मा हितं वद । इदानीं संहरिष्यामि जगदेतच्चराचरम् ॥२५॥ संहर्त्तु र्न हि संहारः प्रकृत्या परतोऽपि वा । शासितं हि मया सर्वं मच्छास्ता नैव विद्यते ॥२६॥ मत्प्रसादाज्जगत् सर्वं मर्य्यादामभितिष्ठति । अहं हि सर्वशक्तीनां प्रवर्त्तको निवर्त्तकः ॥ २७ ॥ मन्नाभिपङ्कजाज्जातः पुरा ब्रह्मा चतुर्मुखः । तल्ललाटसमुत्पन्नो भगवान् वृषभध्वजः ॥ २८ ॥ अहं नियन्ता सर्वस्य मत्परं नास्ति दैवतम् । अतो मां शरणं प्राप्य गच्छ त्वं विगतज्वरः ॥२९॥

सूत उवाच। साहङ्कारं वचः श्रुत्वा विहस्यामित विक्रमः। उवाच वीरभ-द्रस्तं सावज्ञं स्फुरिताधरः ॥३०॥ वीरभद्र उवाच। किं न जानासि विश्वेशं संहर्त्तारं पिणाकिनम्। असम्बद्धप्रलापश्च विनाशस्त्वयि केवलः ॥३१॥ प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि वीर्यं समाहितम्। तन्नाभिपङ्कजाज्जातः पञ्च-वक्त्रः पितामहः ॥३२॥ सृष्ट्यर्थेन जगत् पूर्वं शङ्करं नीललोहितम्। ललाटे चिन्तयामास तपस्युग्रे व्यवस्थितः ॥ ३३ ॥ तल्ललाटादभूच्छम्भुः सृष्ट्यर्थं तन्न दूषणम् ॥३४॥ अंशोऽहं देवदेवस्य महाभैरवरूपिनः। त्वत्संहारे नियु-क्तोऽस्मि विनयेन बलेन वा ॥३५॥ तुच्छं दैत्यं विदार्य्यैकं तच्छक्तिकलया-युतः। अहङ्कारावलेपेन गर्ज्जसि त्वमतन्द्रितः। उपकारो ह्यसाधूनामपका-राय केवलम् ॥३६॥ यत्त्वं सिंह महेशानं नसारमेव मन्यसे। न त्वं स्रष्टा न संहर्त्ता न स्वतन्त्रो हि कुत्रचित्। कुलालचक्रवत् यत्वं प्रेरितोऽसि पिना-किना ॥३७॥ अद्यापि तव निक्षिप्तं कपालं कूर्मरूपिनः। हरहारलतामध्ये मूढ कस्मान्न बुध्यसे ॥ ३८ ॥ विस्मृतं किं तदंशेन यत्पुरा तारकारिणा।

वाराह विग्रहस्तस्य दंष्ट्रोत्पाटनपीडितः ॥३९॥ दग्धोऽस्मि तस्य शूलाग्रे विष्व-क्सेनवपुर्धरः । दक्षयज्ञे शिरश्छिन्नं मया ते यज्ञरूपिनः ॥४०॥ ब्रह्मणस्तव पुत्रस्य छिन्नं यत् पञ्चमं शिरः । नाद्यापि सन्धितं तच्च तदंशं तस्य तत्फलम् ॥४१॥ निर्जितस्त्वं दधीचेन संग्रामे महदैवतः । कण्डूयमाने शिरसि कथं तद्विस्मृतं त्वया ॥४२॥ चक्रं विक्रमतो यस्य तवैपोढ़ि पराक्रमः । कुतः प्राप्तं कृतं केन सर्वं तदपि विस्मृतम् ॥४३॥ यदा हि सकला लोका संहृता प्रलये मया । तदा निद्रावशं शेते तथापि सात्त्विको भवान् ॥ ४४ ॥ त्वदादिस्तम्ब-पर्य्यन्तं रुद्रशक्तिविजृम्भितम् । शक्तिमाननलस्त्वञ्च रुद्रशक्तिकणायुतः ॥४५॥ तत्तेजसो न माहात्म्यं युवां द्रष्टुमपित्तमौ । स्थूलाश्चापि प्रपश्यन्ति तद्विष्णोः परमं पदम् ॥ ४६ ॥ अदितेश्च तथेन्द्राग्नि यमानां वरुणस्य च । कलङ्किनः शशाङ्कस्य जनित्वा परमेश्वरः ॥ ४७ ॥ कालोऽसि त्वं महाकालः कालकालो महेश्वरः । तदेव कलया युक्तो मृत्युमृत्युस्त्वमेव च ॥ ४८ ॥ मेरुधन्वाद्ययोधीरो भृगपत्नी हिरण्मयः । शास्ताऽशेषस्य जगतो न त्वं

नैव चतुर्मुखः ॥ ४६ ॥ इत्थं सर्वं समालोच्य -संहरात्मानमात्मना । नोचेत्तस्यैव ह्रीदानीं महाभैरवरूपिणः । कोपाशनि र्महाघोर स्त्वन्मूर्ध्नि निपतिष्यति ॥५०॥

इति श्रीभक्तिकौस्तुभे नृसिंहसान्त्वनं नाम त्रिषष्ठितम आह्निकः ।

सूत उवाच । इत्युक्तो वीरभद्रेण नृसिंहः क्रोधविह्वलः । ननाद चण्डवेगेन तं ग्रहीतुं प्रचक्रमे ॥ १ ॥ अत्रान्तरे महाघोर-विपक्षभयकारणम् । गगनव्यापि दुर्द्धर्षं शिवतेजःसमुद्भवम् । वीरभद्रस्य तद्रूपं तदैव समदृश्यत ॥ २ ॥ तदा तेजांसि सर्वाणि तस्मिन् लीनानि शाङ्करे । अभूत् संहाररूपेण सुव्यक्तः परमेश्वरः ॥ ३ ॥ बभौ मृगार्द्धदेहेन पक्षाभ्यां चञ्चुनायुतः ॥ ४ ॥ सहस्रबाहुर्जटिल-श्चन्द्रार्द्धकृतशेखरः । अतितीक्ष्णमहादंष्ट्रो वज्राधिकनखायुधः ॥ ५ ॥ नीलकण्ठश्चतुस्पादः प्रलयाग्निसमुद्भवः । अतिक्रूरज्वलत्कोप-संरक्तनयनत्रयः । युगान्तोद्यतजीमूत-भीमगम्भीरनिस्वनः ॥ ६ ॥ हरिस्तद्दर्शनादेव विनष्टबलविक्रमः । संस्थितोग्रे सहस्रांशो-

र्यथा खद्योतविभ्रमः ॥ ७ ॥ पादावावध्य पुच्छेन वाहुभ्यां वाहुमण्डलम् । भिन्दन्नुरसि चञ्च्वा च पक्षाघातविमोहितम् ॥ जगाम गगनं सद्यः गृहीत्वाथ हरो हरिम् ॥ ६ ॥ उत्क्षिप्योत्क्षिप्य संगृह्य निपात्य च निपात्य च । उड्डीयोड्डीय रुद्रश्च विहगो हि यथोरगम् ॥ १० ॥ हरिं हरन्तं शरभमीशानं परमेश्वरम् । अनुयाताः सुराः सर्वे नमोनाम्येन तुष्टुवुः ॥ ११ ॥ नीयमानः परवशो दीनवक्त्रः कृताञ्जलिः । तुष्टाव परमेशानं हरिस्तं ललिताक्षरैः ॥ १२ ॥ नृसिंह उवाच । नमो रुद्राय शर्वाय महाग्रासाय विष्णवे । नम उग्राय भीमाय नमः क्रोधाय मृत्यवे ॥ १३ ॥ नमो भवाय सर्वाय शङ्कराय शिवाय ते । कालाय कालकालाय महाकालाय तेजसे ॥ १४ ॥ महादेवाय महते सूक्ष्माय मृत्युमृत्यवे । वीराय वीरभद्राय निराधाराय शूलिने ॥ १५ ॥ एकाय नीलकण्ठाय श्रीकण्ठाय पिनाकिने । अनन्ताय ह्यचिन्त्याय पशूनां पतये नमः ॥ १६ ॥ पराय परमेशाय परात्परतराय ते । विश्वेश्वराय विश्वाय नमस्ते लिङ्गमूर्त्तये ॥ १७ ॥ नमो विष्णुकलत्राय विष्णुक्षेत्राय

भानवे । हरिचक्रप्रदानाय नमोऽहिभूषणाय ते ॥ १८ ॥ ईशानाय शरण्याय महाभैरव रूपिणे । नमो नृसिंहसंहन्त्रे कामकालपुरारये ॥ १९ ॥ महापापौघसंहन्त्रे विष्णुमायान्तकारिणे । त्र्यम्बकाय त्र्यक्षराय शिपिविष्टाय मीढुसे ॥ २० ॥ मृत्युञ्जयाय शान्ताय सर्वज्ञाय मखारये । महेश्वराय घोराय रौद्राय सौम्यरूपिणे ॥२१॥ वरदाय जगद्धात्रे सर्वकारणहेतवे । नमश्चन्द्राग्निसूर्याय मुक्तिवैचित्र्य हेतवे ॥२२॥ नमस्ते पञ्चवक्त्राय वृषवाहाय धूर्ज्जटे । कपालिने त्रिनेत्राय भस्माधाराय शाश्वते ॥ २३ ॥ अमोघाय करालाय जगन्नाथाय शम्भवे । भिपक्तमाय मुण्डाय दण्डिने योगरूपिणे ॥ २४ ॥ विश्वम्भराय नाथाय पार्वतीपतये नमः । अव्यक्ताय विशोकाय स्थिराय स्थिरधन्विने ॥२५॥ स्थाणवे कृत्तिवासाय पञ्चभूतात्मने नमः । गिरिशायैकपादाय नमश्चन्द्रार्द्धमौलिने॥२६॥ नमस्तेऽध्वरराजाय नमस्तेऽध्वररूपिणे। योगेश्वराय नित्याय सत्याय परमेष्ठिने॥२७॥अच्युताय महेशाय हराय परब्रह्मणे । सर्वात्मने नमस्तुभ्यं सर्वेश्वराय ते नमः ॥२८॥ एक-द्वि-त्रि-चतुः-पञ्च-

कृत्वस्तेऽस्तु नमो नमः । दशकृत्वस्तु साहस्रकृत्वस्ते च नमोनमः ॥२९॥ नमोऽपरिमितंकृत्वोऽनन्तकृत्वो नमो नमः । नमो नमो नमो भूयः पुनर्भूयो नमो-नमः ॥ ३० ॥ सूत उवाच । अष्टोत्तर शतेनैवं स्तुत्वाऽमृतमयेन तु । पुनस्तु प्रार्थयामास नृसिंहः शरभेश्वरम् ॥ ३१ ॥ यदा यदा ममाज्ञानमहंकारावलेपितं । तदा तदापनेतव्यं त्वयैव परमेश्वर ॥ ३२ ॥ तस्य निवेदितं श्रुत्वा उवाच शरभेश्वरः । नन्वशक्तो भवान् विष्णो जीवितान्तं पराजितः ॥३३॥ ततस्तु कृपया तेन नृसिंहस्य कृताञ्जलेः । शुक्तिशिल्पं कृतं चाङ्गं चर्म्त्रं छिन्नं तदा क्षणात् ॥ ३४ ॥ ऊचु ब्रह्मादयः सर्वे वीरभद्र त्वयाधुना । जीविताः स्मो वयं देवाः पर्ज्जन्येनेव पादपाः ॥ ३५ ॥ यस्य भीषा दहत्यग्निरुदेति च रविः स्वयम् । वातो वाति च सोऽसि त्वं मृत्युर्धावति पञ्चमः ॥ ३६ ॥ द्वे तनू तव रुद्रस्य वेदज्ञा ब्राह्मणा विदुः । घोरा चैका शिवाप्यन्या ते प्रत्येकमनेकधा ॥ ३७ ॥ ब्रह्म-विष्ण्वीन्द्र-मार्त्तण्ड शशाङ्कप्रमुखाः सुराः । असुराश्च सम्प्रसूतास्त्वत्तः सर्वे महेश्वर ॥ ३८ ॥ यतो विभर्षि सकलं विभज्य तनु-

मष्टधा। ततो पाहि सुरानस्मान् शिवदानैरभीप्सितैः ॥ ३९ ॥ वीरभद्र उवाच। यथा जले जलं क्षिप्तं क्षीरं क्षीरे घृतं घृते। शिवलीनस्तथा विष्णुरेक एव न चान्यथा ॥ ४० ॥ एष एव नृसिंहात्मा महादर्पो महाबलः। जगत्संहारकार्य्ये तु प्रवृत्तो नरकेशरी। याजनीयो नमस्तस्मै मद्भक्तिसिद्धिकाङ्क्षिभिः ॥४१॥ एतावदुक्त्वा भगवान् वीरभद्रो महाबलः। पश्यतां सर्वभूतानां तत्रैवान्तरधीयत ॥ ४२ ॥ नृसिंह-कृत्तिवसनस्तदा प्रभृति शङ्करः। वक्त्रं तन्मुण्डमालायां नायकत्वेन कल्पितम् ॥ ४३ ॥ सूत उवाच। इदंहि पुण्यमाख्यानं सर्वदुःखविनाशनं। धन्यं यशस्यमायुष्यम् आरोग्य-पुष्टिवर्द्धनम् ॥ ४४ ॥ अरिचक्रप्रशमनम् सर्वविघ्नविनाशनम्। आधिव्याधिकुलध्वंसि अपमृत्यु निवारणम् ॥ ४५ ॥ विषग्रहक्षयकरं पुत्र-पौत्रविवर्द्धनम् दुःस्वप्ननाशनं सद्यः सर्वभूतापसारणम् ॥ ४६ ॥ महाशान्तिकरं चैव वाञ्छितार्थैकसाधनम्। विष्णुमायानिरसनं शिव ज्ञान प्रकाशकम् ॥ ४७ ॥ शिवलोकस्य सोपानं सर्वथा परमार्थदम्। योगसिद्धिप्रदं सम्यक्

ऋद्धि प्रज्ञादि साधनम् ॥ ४८ ॥ पठितव्यं सदा भक्त्या परं स्वस्त्ययनं हि तत् ॥ ४९ ॥ इदन्तु शरभाकारं परं रूपं पिनाकिनः । प्रकाशितव्यं भक्तेषु स्थिरेपूत्साहितेषु च । तैरेव पठितव्यञ्च श्रोतव्यञ्च यतात्मभिः ॥ ५० ॥ शिवोत्सवेषु सर्वेषु चतुर्दश्यष्टमीषु च । पठेत् प्रतिष्ठाकालेषु शिवसन्निधि-कारणम् ॥ ५१ ॥ चोरव्याघ्राहिसिंहादि-भये राजभये तथा । विविधोत्पात-भूकम्प-दावाग्निपांशुवृष्टिषु ॥ ५२ ॥ उल्कापाते महावाते अनावृष्ट्यति-वृष्टिषु । सदैव हि पठेद्विद्वान् शिवभक्तो दृढव्रतः ॥ ५३ ॥ यः पठेच्छृणुयात् स्तोत्रम् अतुल्यं हरिणाकृतम् । रुद्रत्वं स समासाद्य रुद्रस्यानुचरो भवेत् ॥५४॥

इति श्रीभक्तिकौस्तुभे नृसिंहसंहारो नाम चतुःषष्टितमो आह्निकः ।

विश्वरूप उवाच । धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः । कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ १ ॥ नारायणमयं वर्म सन्नह्येद्भय आगते । पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ २ ॥ मुखे

शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् । ॐनमो नारायणायेति विपर्ययमथापि वा ॥३ ॥ करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया । प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥ ४ ॥ न्यसेद्धृदयमोङ्कारं विकारमनु मूर्धनि । षकारं तु भ्रुवोर्मध्ये णकारं शिखयो दिशेत् ॥५ ॥ वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु । मकारमस्त्रमुद्दिश्य मन्त्रमूर्त्तिर्भवेद्बुधः ॥ ६ ॥ सविसर्गं फडन्तं तत्सर्वदिक्षु विनिर्दिशेत् । ॐ विष्णवे नम इति ॥ ७ ॥ आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् । विद्या तेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥ ८ ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेन्द्रपृष्ठे । दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥ ९ ॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् । स्थलेषु मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥१०॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः । विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥११॥ रक्षत्वसौमाऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।

रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान् ॥१२॥ मामुग्रधर्मादखिलात् प्रमादान्नारायणः पातु नरश्च हासात्। दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥१३॥ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात्। देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात् ॥१४॥ धन्वन्तरिर्भगवान्पात्वपथ्याद् द्वन्द्वाद्भयादृषभो निर्जितात्मा। यज्ञश्च लोकादवताज्जनान्ताद् बलो गणात्क्रोधवशादहीन्द्रः ॥ १५ ॥ द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखण्डगणात्प्रमादात्। कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥ १६ ॥ मां केशवो गदया प्रातरव्याद् गोविन्द आसंगवमात्तवेणुः। नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररीन्द्रपाणिः ॥ १७ ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम्। दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ १८ ॥ श्रीवत्सधामा पररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः। दामोदरोऽव्यादनुसंध्यं प्रभाते विश्वेश्वरो

भगवान्कालमूर्तिः ॥१६॥ चक्रं युगान्तानलतिग्मनेमि भ्रमन्समन्ताद् भगव-
त्प्रयुक्तम् । दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः
॥ २० ॥ गदेऽशनिस्पर्शनविस्फुलिंगे निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि ।
कुष्माण्डवैनायकयक्षरक्षो भूतग्रहांश्चूर्णयचूर्णयारीन् ॥२१॥ त्वं यातुधान-
प्रमथ-प्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् । दरेन्द्र विद्रावय कृष्णपूरितो
भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥ २२ ॥ त्वं तिग्मधारासिवरारिसैन्यमीश-
प्रयुक्तो मम छिन्धि छिन्धि । चक्षूंषि चर्मन् शतचन्द्र छादय द्विषामघोनां
हरपापचक्षुपाम् ॥२३॥यन्नो भयं ग्रहेभ्योऽभून् केतुभ्यो नृभ्य एव च । सरी-
सृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽहोभ्य एव वा ॥२४॥ सर्वाण्येतानि भगवन्नाम-
रूपास्त्रकीर्तनात् । प्रयान्तु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः ॥२५॥ गरुड़ो
भगवान्स्तोत्रस्तोमश्छन्दोमयः प्रभुः । रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्व-
नामभिः ॥२६ ॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः । बुद्धीन्द्रियमनः
प्राणान्पान्तु पार्षदभूषणाः॥२७॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् ।

सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥२८॥ यथैकात्म्यानुभावानां विक-
ल्परहितः स्वयम्। भूषणायुधलिंगाख्या धत्ते शक्तीः स्वमायया ॥ २६ ॥
तेनैव सत्यमानेन सर्वज्ञो भगवान्हरिः। पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्व-
गः ॥३०॥ विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः। प्रहापयँ-
ल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३१ ॥ मघवन्निदमाख्यातं
वर्म नरायणात्मकम्। विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥३२॥
एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा। पदा वा संस्पृशेत्सद्यः साध्वसात्स
विमुच्यते ॥३३॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत्। राजदस्युग्र-
हादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥३४॥ इमां विद्यां पुरा कश्चित्कौशिको
धारयन्द्विजः। योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥३५॥ तस्योपरि
विमानेन गन्धर्वपतिरेकदा। ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः
॥३६॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः। स वालखिल्यवचनाद-
स्थीन्यादाय विस्मितः ॥३७॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्त्र-

गात् ॥३८॥ श्रीशुक उवाच । य इदं शृणुयात्काले यो धारयति चादृतः । तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥३९॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः । त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४०॥

इति श्रीभक्तिकौस्तुभे नारायणवर्म नाम पञ्चषष्टितम आह्निकः ।

हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे । इन्द्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम् ॥ १ ॥ अथान्वाहार्यपचनादुत्थितो घोरदर्शनः । कृतान्त इव लोकानां युगान्तसमये यथा ॥२॥ दग्धशैलप्रतीकाशं मध्याह्नार्काग्रलोचनम् । तप्तताम्रशिखाश्मश्रुं चालयन्तं पदा महीम् ॥ ३ ॥ दरीगम्भीरवक्त्रेण पिबता च नभस्तलम् । लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् । वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ ४ ॥ येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना । स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ ५ ॥ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः । स्वैः स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः ॥ ६ ॥ ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः प्रत्यञ्च-

मादिपुरुषमुपतस्थुः समाहिताः ॥७॥ श्रीभगवानुवाच । प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया । आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ८ ॥ किं दुरापं मयि प्रीते तथाऽपि विबुधर्षभाः । मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित् ॥ ९ ॥ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् । तस्य तानिच्छतो यच्छेद् यदि सोऽपि तथाविधः ॥ १० ॥ स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि । न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः ॥ ११ ॥ मघवन्यात भद्रं वो दध्यञ्चमृषिसत्तमम् । विद्याव्रततपःसारं गात्रं याचत मा चिरम् ॥ १२ ॥ ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः । येन वृत्रशिरो हर्ता मत्तेज उपबृंहितः ॥ १३ ॥ ततः सुराणामसुरै रणः परमदारुणः । त्रेतामुखे नर्मदायामभवत्प्रथमे युगे ॥ १४ ॥ वृत्र उवाच । दिष्ट्या भवान् मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च । दिष्ट्याऽनृणोऽद्याहमसत्तम त्वया मच्छूलनिर्भिन्नदृषद्धृदाऽचिरात् ॥ १५ ॥ यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य । विश्रभ्य खड्गेन

शिरांस्यवृश्चत् पशोरिवाऽकरुणः स्वर्गकामः ॥ १६ ॥ ह्रीश्रीदयाकीर्तिभिरु-
ज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम् । कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृ-
ष्टवह्निं समदन्ति गृध्राः ॥ १७ ॥ अन्येऽनु ये त्वेह नृशंसमज्ञा येह्युद्यतास्त्राः
प्रहरन्ति मह्यम् । तैर्भूतनाथान् सगणान् निशातत्रिशूलनिर्भिन्नगलैर्यजामि
॥ १८ ॥ अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्यैव शिरो यदीह । तत्रानृणो
भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये ॥१९॥ सुरेश कस्मान्न हिनोषि
वज्रं पुरः स्थिते वैरिणि मय्यमोघम् । मा संशयिष्ठा न गदेव वज्रं स्यान्नि-
ष्फलं कृपणार्थेव याच्ञा ॥२०॥ नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्त-
पसा स तेजितः । तेनैव शत्रुं जहि विष्णुयन्त्रितो यतो हरिर्विजयः श्रीर्गुणा-
स्ततः ॥ २१ ॥ अहं समाधाय मनो यथाह संकर्षणस्तच्चरणारविन्दे । त्व-
द्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः ॥ २२ ॥ पुंसां किलै-
कान्तधियां स्वकानां याः सम्पदो दिवि भूमौ रसायाम् । न राति यद्द्वेष
उद्वेग आधिर्मदः कलिर्व्यसनं संप्रयासः ॥ २३ ॥ त्रैवर्गिकायासविघा-

तमस्मत्पतिर्विधत्ते पुरुषस्य शक्र । ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिंचनगोचरोऽन्यैः ॥ २४ ॥ अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः । मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक् कर्म करोतु कायः ॥ २५ ॥ न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥२६॥ अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः । प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥ २७ ॥ ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः । त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ २८ ॥ ऋषिरुवाच । एवं जिहासुर्नृपदेहमाजौ मृत्युं वरं विजयान्मन्यमानः । शूलं प्रगृह्याभ्यपतत् सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु ॥ २९ ॥ ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसाऽसुरेन्द्रः । क्षिप्त्वा महेन्द्राय विनद्य वीरो हतोऽसि पापेति रुषा जगाद ॥ ३० ॥ ख आपतत्तद्विचलद्ग्रहोल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः ।

वज्रेण वज्री शतपर्वणाऽच्छिनद्भुजं च तस्योरगराजभोगम् ॥ ३१ ॥ छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम्। हनौ तताडेन्द्रमथामरेभं वज्रं च हस्तान्न्यपतन्मघोनः ॥ ३२ ॥ वृत्रस्य कर्मातिमहाद्भुतं तत् सुरासुराश्चारणसिद्धसंघाः। अपूजयंस्तत् पुरुहूतसंकटं निरीक्ष्य हा हेति विचुक्रुशुर्भृशम् ॥ ३३ ॥ इन्द्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः। तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ३४ ॥ युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनाम्। विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ३५ ॥ लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे। द्विजा इव शिचा बद्धाः स काल इह कारणम् ॥ ३६ ॥ ओजः सहो बलं प्राणममृतं मृत्युमेव च। तमज्ञाय जनो हेतुमात्मानं मन्यते जडम् ॥ ३७ ॥ यथा दारुमयी नारी यथा यन्त्रमयो मृगः। एवं भूतानि मघवन्नीशतन्त्राणि विद्धि भोः ॥ ३८ ॥ पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः। शक्नुवन्त्यस्य सर्गादौ न विना यदनु-

ग्रहात् ॥ ३९ ॥ अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् । भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयम् ॥ ४० ॥ आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः । भवन्त्येव हि तत्काले यथानिच्छोर्विपर्ययाः ॥ ४१ ॥ तस्मादकीर्तियशसोर्जयापजययोरपि । समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा ॥ ४२ ॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः । तत्र साक्षिणमात्मानं यो वेद न स बध्यते ॥४३॥ पश्य मां निर्जितं शक्र वृक्णायुधभुजं मृधे । घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥ ४४ ॥ प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः । अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः ॥४५॥ श्रीशुक उवाच । इन्द्रो वृत्रवचः श्रुत्वा गतालीकमपूजयत् । गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः ॥४६॥

इति श्रीभक्तिकौस्तुभे वृत्रासुरस्य ज्ञानोपदेशो नाम षट्षष्टितम आह्निकः ।

इन्द्र उवाच । अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी । भक्तः सर्वात्मनात्मानं सुहृदं जगदीश्वरम् ॥ १ ॥ भवानतार्षीन्मायां वै वैष्णवीं

जनमोहिनीम्। यद्विहायासुरं भावं महापुरुषतां गतः ॥ २ ॥ खल्विदं महदाश्चर्यं यद्रजःप्रकृतेस्तव। वासुदेवे भगवति सत्त्वात्मनि दृढा मतिः ॥ ३ ॥ यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे। विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥ ४ ॥ वत्रस्तु तत्कन्धरमाशुवेगः कृन्तन् समन्तात् परिवर्तमानः। न्यपातयत्तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये ॥ ५ ॥ परीक्षिदुवाच। रजस्तमःस्वभावस्य ब्रह्मन् वृत्रस्य पाप्मनः। नारायणे भगवति कथमासीद् दृढा मतिः ॥ ६ ॥ देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम्। भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥ ७ ॥ रजोभिः समसंख्याताः पार्थिवैरिह जन्तवः। तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥८॥ प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम। मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति ॥ ९ ॥ मुक्तानामपि सिद्धानां नारायणपरायणः। सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥ १० ॥ श्रीशुक उवाच। आसीद्राजा सार्वभौमः शूरसेनेषु वै नृप। चित्रकेतुरिति ख्यातो यस्यासीत् कामधुङ् मही

॥११॥ अथ काल उपावृत्ते कुमारः समजायत । जनयञ्छूरसेनानां शृण्वतां परमां मुदम् ॥१२॥ विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः । गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति ॥ १३॥ एवं कश्मलमापन्नं नष्टसंज्ञमनायकम् । ज्ञात्वांगिरा नाम मुनिराजगाम सनारदः ॥ १४ ॥ इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे । अतदर्हमनुस्मृत्य महापुरुषगोचरम् ॥ १५ ॥ अनुग्रहाय भवतः प्रासावावामिह प्रभो । ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हति ॥१६॥ नारद उवाच । एतां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम । यां धारयन्सप्तरात्राद्द्रष्टा संकर्षणं प्रभुम् ॥१७॥ ततश्च सप्तरात्रान्ते विद्यया धार्यमाणया । विद्याधराधिपत्यं स लभेऽप्रतिहतं नृप ॥ १८ ॥ एकदा स विमानेन विष्णुदत्तेन भास्वता । गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः ॥१९॥ आलिंग्यांकीकृतां देवीं बाहुना मुनिसंसदि । उवाच देव्याः शृण्वन्त्या जहासोच्चैस्तदन्तिके ॥२०॥ चित्रकेतुरुवाच । एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम् । आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया ॥२१॥ जटा-

धरस्तीव्रतपा ब्रह्मवादी सभापतिः । अंकीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा ॥२२॥ भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप । तूष्णींबभूव सदसि सभ्याश्च तदनुव्रताः ॥ २३ ॥ पार्वत्युवाच । अयं किमधुना लोके शास्ता दण्डधरः प्रभुः । अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत् ॥ २४ ॥ नायमर्हति वैकुण्ठपादमूलोपसर्पणम् । संभावितमतिः स्तब्धः साधुभिः पर्युपासितम् ॥ २५ ॥ अतः पापीयसीं योनिमासुरीं याहि दुर्मते । यथेह भूयो महतां न कर्ता पुत्र किल्बिषम् ॥ २६ ॥ चित्रकेतुरुवाच । प्रतिगृह्णामि ते शापमात्मनोऽञ्जलिनाऽम्बिके । देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥२७॥ नैवात्मा न परश्चापि कर्ता स्यात्सुखःदुःखयोः । कर्तारं मन्यते प्राज्ञ आत्मानं परमेव च ॥२८॥ गुणप्रवाह एतस्मिन् कः शापः कोऽन्वनुग्रहः । कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा ॥ २९ ॥ एकः सृजति भूतानि भगवानात्ममायया । एषां बन्धं च मोक्षं च सुखं दुःखं च निष्कलः ॥३०॥ न तस्य कश्चिद्दयितः प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः । समस्य

सर्वत्र निरञ्जनस्य सुखेन रागः कुत एव रोषः ॥३१॥ अथ प्रसादये न त्वां शापमोक्षाय भामिनि । यन्मन्यसे असाधूक्तं मम तत्क्षम्यतां सति ॥३२॥ ततस्तु भगवान् रुद्रो रुद्राणीमिदमब्रवीत् । देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥३३॥ दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः । माहात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम् ॥ ३४ ॥ नारायणपराः सर्वे न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥३५॥ देहिनां देहसंयोगाद्द्वन्द्वानीश्वरलीलया । सुखं दुःखं मृतिर्जन्म शापोऽनुग्रह एव च ॥ ३६ ॥ अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि । गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः ॥३७॥ वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् । ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ॥ ३८ ॥ नाहं विरिञ्चो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः । विदाम यस्येहितमंशकांशका न तत् स्वरूपं पृथगीशमानिनः ॥३९॥ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा । आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः ॥४०॥ तस्य चायं महाभागश्चि-

त्रकेतुः प्रियोऽनुगः । सर्वत्र समदृक् शान्तो ह्यहं चैवाच्युतप्रियः ॥४१॥
तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु । महापुरुषभक्तेषु शान्तेषु सम-
दर्शिषु ॥ ४२ ॥ इति भागवतो देव्याः प्रतिशप्तुमलंतमः । मूर्ध्ना संजगृहे
शापमेतावत्साधुलक्षणम् ॥ ४३ ॥ जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमा-
श्रितः । वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ४४ ॥ इतिहासमिमं
पुण्यं चित्रकेतोर्महात्मनः । माहात्म्यं विष्णुभक्तानां श्रुत्वा बन्धाद्विमुच्यते
॥४५॥ य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् । इतिहासं हरिं स्मृत्वा स
याति परमां गतिं ॥४६॥

इति श्रीभक्तिकौस्तुभे वृत्रासुरवृत्तान्तो नाम सप्तषष्टितम आह्निकः ।

एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा । हृते त्रिविष्टपे दैत्यैः पर्यतप्य-
दनाथवत् ॥ १ ॥ एकदा कश्यपस्तस्या आश्रमं भगवानगात् । निरुत्सवं
निरानन्दं समाधेर्विरतश्चिरात् ॥ २ ॥ अदितिरुवाच । पर्यैर्विवासिता साऽहं
मग्ना व्यसनसागरे । ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ ३ ॥ यथा

तानि पुनः साधो प्रपद्येरन्ममात्मजाः । तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥४॥ श्रीशुक उवाच । एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव । अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् ॥ ५ ॥ क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः । कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥ ६ ॥ उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् । सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥ ७ ॥ स विधास्यति ते कामान् हरिर्दीनानुकम्पनः । अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम ॥ ८ ॥ एतत् पयोव्रतं नाम पुरुषाराधनं परम् । पितामहेनाभिहितं मया ते समुदाहृतम् ॥ ९ ॥ तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धयाचर । भगवान्परितुष्टस्ते वरानाशु विधास्यति ॥१०॥ श्रीशुक उवाच । इत्युक्ता साऽदिती राजन्स्वभर्त्रा कश्यपेन वै । अन्वतिष्ठद्व्रतमिदं द्वादशाहमतन्द्रिता ॥११॥ तस्याः प्रादुरभूत्तात भगवानादिपूरुषः । पीतवासाश्चतुर्बाहुः शंखचक्रगदाधरः ॥१२॥ सोत्थाय बद्धाञ्जलिरीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा । उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं

यज्ञपतिं जगत्पतिम् ॥१३॥ अदितिरुवाच । यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गलनामधेय । आपन्नलोकवृजिनोपशमोदयाऽद्य शं नः कृधीश भगवन्नसि दीननाथः ॥१४॥ आयुः परं वपुरभीष्टमतुल्य लक्ष्मीर्द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः । ज्ञानं च केवलमनन्त भवन्ति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥१५॥ श्रीभगवानुवाच । देवमातर्भवत्या मे विज्ञातं चिर कांक्षितम् ॥ १६ ॥ प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः । यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥१७॥ अथाप्युपायो मम देवि चिन्त्यः संतोषितस्य व्रतचर्यया ते । ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥ १८ ॥ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः । स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्ताऽस्मि मारीचतपस्यधिष्ठितः ॥ १९ ॥ नैतत्परस्मा आख्येयं पृष्टयापि कथंचन । सर्वं संपद्यते देवि देवगुह्यं सुसंवृतम् ॥२०॥ श्रीशुक उवाच । अदितेर्धिष्ठितं गर्भं भगवन्तं सनातनम् । हिरण्यगर्भो विज्ञाय

समीडे गुह्यनामभिः ॥२१॥ ब्रह्मोवाच । जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते । नमो ब्रह्मण्यदेवाय त्रिगुणाय नमो नमः ॥२२॥ नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे । त्रिनाभाय ,त्रिपृष्ठाय शिपिविष्टाय विष्णवे ॥२३॥ त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः । कालो भवानाक्षिपतीश विश्वं स्रोतो यथाऽन्तः पतितं गभभीरम् ॥२४॥ त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि संभविष्णुः । दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥२५॥ श्रीशुक उवाच । इत्थं विरिञ्चस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् । चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः । ॥२४॥ श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् । श्रीवत्सवक्षा वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः ॥२७॥ मधुव्रतव्रातविघुष्टया स्वया विराजितः श्रीवनमालया हरिः । प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन्कण्ठनिविष्टकौस्तुभः ॥२८॥ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः । द्यौरन्तरिक्षं

क्षितिरग्निजिह्वा गावो द्विजाः संजहृषुर्नगाश्च ॥२९॥ श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः । सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥३०॥ द्वादश्यां सविताऽतिष्ठन्मध्यंदिनगतो नृप । विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥३१॥ शङ्खदुन्दुभयो नेदुर्मृदङ्गपणवानकाः । चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥३२॥ प्रीताश्चाप्सरसोऽनृत्यन्गन्धर्वप्रवरा जगुः । तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥३३॥ सिद्धविद्याधरगणाः सकिंपुरुषकिन्नराः । चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ॥३४॥ गायन्तोऽतिप्रशंसन्तो नृत्यन्तो विबुधानुगाः । अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥३५॥ दृष्ट्वाऽदितिस्तं निजगर्भसंभवं परं पुमांसं मुदमाप विस्मिता । गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥३६॥ यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः । बभूव तेनैव स वामनो बटुः संपश्यतोर्दिव्यगतिर्यथा नटः ॥३७॥ तं बटुं वामनं दृष्ट्वा मोदमाना महर्षयः । कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥३८॥ श्रुत्वाश्वमेधै-

यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः जगाम तत्राखिलसारसंभृतो भारेण गां सन्नमयन्पदेपदे ॥३९॥ तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञके। प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षतारादुदितं तथा रविम् ॥४०॥ बलिरुवाच। स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम ते। ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वार्यवपुर्धरम् ॥४१॥ अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम्। अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान् ॥४२॥ यद्यद्वटो वाञ्छसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ॥४३॥ श्रीभगवानुवाच। नह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान्। प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ॥४४॥ न सन्ति तीर्थे युधि चार्थिनार्थिताः पराङ्मुखा ये त्वमनस्विनो नृपाः। युष्मत्कुले यद्यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥४५॥ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम्। प्रतिवीरं दिग्विजये नाविन्दत गदायुधः ॥४६॥ यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम्। नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥४७॥ निशम्य तद्वधं भ्राता

हिरण्यकशिपुः पुरा। हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥४८॥ तमायान्तं समालोक्य शूलपाणिं कृतान्तवत्। चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥४९॥ यतोयतोऽहं तत्रासौ मृत्युः प्राणभृतामिव। अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥५०॥ स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद। क्ष्मां द्यां दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन्न ददर्श वीरः ॥५१॥ अपश्यन्निति होवाच मयान्विष्टमिदं जगत्। भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् ॥५२॥ पिता प्रह्लादपुत्रस्ते तद्विद्वान्द्विजवत्सलः। स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात्स याचितः ॥५३॥ तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात्। पदानि त्रीणि दैत्येन्द्र संमितानि पदा मम ॥५४॥

इति श्रीभक्तिकौस्तुभे बलेरुपाख्याने वामनयाच्ञा नाम अष्टषष्टितम आह्निकः।

बलिरुवाच। अहो ब्राह्मणदायाद वाचस्ते वृद्धसंमताः। त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ॥ १ ॥ मां वचोभिः समाराध्य लोका-

नामेकमीश्वरम्। पदत्रयं वृणीते योऽबुद्धिमान्द्वीपदाशुपम् ॥ २ ॥ न पुमान्मामुपव्रज्य भूयो याचितुमर्हति। तस्माद्वृत्तिकरीं भूमिं बटो कामं प्रतीच्छ मे ॥ ३ ॥ श्रीभगवानुवाच। पुंसोऽयं संसृतेर्हेतुरसंतोषोऽर्थकामयोः। यदृच्छयोपपन्नेन संतोषो मुक्तये स्मृतः ॥ ४ ॥ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते। तत्प्रशाम्यत्यसंतोषादम्भसेवाशुशुक्षणिः ॥५॥ तस्मात्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात्। एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ ६ ॥ श्रीशुक उवाच। इत्युक्तः स हसन्नाह वाञ्छातः प्रतिगृह्यताम्। वामनाय महीं दातुं जग्राह जलभाजनम् ॥ ७ ॥ शुक्राचार्य उवाच। एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः। कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ८ ॥ त्रिभिःक्रमैरिमांल्लोकान्विश्वकायः क्रमिष्यति। सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम् ॥ ९ ॥ निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम्। प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥१०॥ न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते। दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥११॥ धर्माय

यशसेऽर्थाय कामाय स्वजनाय च। पञ्चधा विभजन्वित्तमिहामुत्र च मोदते ॥१२॥ सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते। वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः ॥१३॥ तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात्। एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥१४॥ अथैतत्पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः। सर्वं नेत्यनृतं ब्रूयात्स दुष्कीर्तिः श्वसन्मृतः ॥१५॥ स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसंकटे। गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥१६॥ बलिरुवाच। सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम्। अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् ॥१७॥ स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम्। प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥१८॥ नह्यसत्यात्परोऽधर्म इति होवाच भूरियम्। सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥१९॥ नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात्। न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलम्भनात् ॥२०॥ श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः। दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ २१ ॥ सुलभा युधि

विप्रर्षे ह्यनिवृत्तास्तनुत्यजः । न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः
॥२२॥ मनस्विनः कारुणिकस्य शोभनं यदर्थिकामोऽपनयेन दुर्गतिः । कुतः
पुनर्ब्रह्मविदां भवादृशां ततो वटोरस्य ददामि वाञ्छितम् ॥२३॥ यजन्ति
यज्ञक्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः । स एव विष्णुर्वरदो-
ऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने ॥ २४ ॥ यद्यप्यसावधर्मेण
मां बध्नीयादनागसम् । तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥२५॥
एवमश्रद्धितं शिष्यमनादेशकरं गुरुः । शशाप दैवप्रहितः सत्यसंधं मनस्विनम्
॥२६॥ दृढं पण्डितमान्यज्ञः स्तब्धोऽस्य-स्मदुपेक्षया । मच्छासनातिगो यस्त्व
मचिराद्भ्रश्यसे श्रियः ॥२७॥ विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी ।
आनिन्ये कलशं हैममवनेजन्यपांभृतम् ॥२८॥ यजमानः स्वयं तस्य श्रीम-
त्पादयुगं मुदा । अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥२९॥ तद्वामनं
रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम् । काये बलिस्तस्य महाभिभूतेः
ददर्श विश्वं त्रिगुणं गुणात्मके ॥३०॥ रसामचष्टांघ्रितलेऽथ पादयोर्महीं

महीध्रान्पुरुषस्य जङ्घयोः । पतत्त्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मारुतमिन्द्र-
सेनः ॥३१॥ संध्यां विभोर्वाससि गुह्य ऐक्षत्प्रजापतीञ्जघने आत्ममुख्यान् ।
नाभ्यां नभः कुक्षिषु सप्तसिन्धूनुरुक्रमस्योरसि चर्क्षमालाम् ॥३२॥ हृद्यङ्ग
धर्मं स्तनयोर्मुरारेर्ऋतं च सत्यं च मनस्यथेन्दुम् । श्रियं च वक्षस्यरविन्द-
हस्तां कण्ठे च सामानि समस्तरेफान् ॥ ३३ ॥ इन्द्रप्रधानानमरान्भुजेषु
तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि । केशेषु मेघान् श्वसनं नासिकायामक्ष्णोश्च
सूर्यं वदने च वह्निम् ॥३४॥ वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च
विधिं च पक्ष्मसु । अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम्
॥३५॥ स्पर्शे च कामं नृप रेतसोऽम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् । छायासु
मृत्युं हसिते च मायां तनूरुहेष्वोषधिजातयश्च ॥३६॥ नदीश्च नाडीषु
शिला नखेषु बुद्धावजं देवगणानृषींश्च । प्राणेषुगात्रे स्थिरजङ्गमानि सर्वाणि
भूतानि ददर्श वीरः ॥ ३७ ॥ सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्म-
लमापुरङ्ग । सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३८ ॥

पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदिकी विष्णुगदा तरस्विनी । विद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ॥ ३९ ॥ सुनन्दमुख्या उपतस्थुरीशं पार्षद मुख्याः सह्लोकपालाः । स्फुरत्किरीटाङ्गदमीनकुण्डलश्रीवत्सरत्नोत्तममेखलाम्बरैः ॥४०॥ मधुव्रतस्रग्वनमालया वृतो रराज राजन्भगवानुरुक्रमः । क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ॥४१॥ पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि । उरुक्रमस्याङ्घ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः ॥४२॥

इति श्रीभक्तिकौस्तुभे बलेरुपाख्याने त्रिविक्रमरूपदर्शनं नाम एकोनसप्ततितम आह्निकः ।

मही सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाच्ञया । ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिणः ॥ १ ॥ न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः । द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ २ ॥ ते सर्वे वामनं हन्तुं शूलपट्टिशपाणयः । अनिच्छतो बले राजन्प्राद्रवञ्जातमन्यवः ॥ ३ ॥ हन्यमानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः । वारयामास संरब्धान्काव्यशापमनुस्मरन् ॥ ४ ॥

य: प्रभु: सर्वभूतानां सुखदु:खोपपत्तये । तं नातिवर्तितुं दैत्या: पौरुषैरीश्वर:
पुमान् ॥ ५ ॥ यो नो भवाय प्रागासीदभवाय दिवौकसाम् । स एव भग-
वानद्य वर्तते तद्विपर्ययम् ॥ ६॥ बलेन सचिवैर्बुद्ध्या दुर्गैर्मन्त्रौषधादिभि: ।
सामादिभिरुपायैश्च कालं नात्येति वै जन: ॥ ७ ॥ भवद्भिर्निर्जिता ह्येते
बहुशोऽनुचरा हरे: । दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदन्ति न: ॥ ८ ॥
एतान्वयं विजेष्यामो यदि दैवं प्रसीदति । तस्मात्कालं प्रतीक्षध्वं यो
नोऽर्थत्वाय कल्पते ॥९॥ अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितम् ।
बबन्ध वारुणै: पाशैर्बलिं सौत्येऽहनि क्रतौ ॥ १० ॥ हाहाकारो महानासी-
द्रोदस्यो: सर्वतो दिशम् । गृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ ११ ॥
तं बद्धं वारुणै: पाशैर्भगवानाह वामन: । नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप
॥ १२ ॥ पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर । द्वाभ्यां क्रान्ता मही
सर्वा तृतीयमुपकल्पय ॥१३॥ प्रतिश्रुतमदातुस्ते निरये वास इष्यते । विश
त्वं निरयं तस्माद्गुरुणा चानुमोदित: ॥१४॥ एवं विप्रकृतो राजन्बलिर्भग-

वताऽसुरः । विद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥ १५ ॥ बलिरुवाच । यद्युत्तमश्लोक भवान्ममेरितं वचो व्यलीकं सुरवर्य मन्यते । करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥ १६ ॥ बिभेमि नाहं निरयात्पदच्युतो न पाशबन्धाद्व्यसनाद्दुरत्ययात् । नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवादाद्भृशमुद्विजे यथा ॥ १७ ॥ पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् । यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥ १८ ॥ त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः । यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत् ॥ १९ ॥ तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा । बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे ॥ २० ॥ पितामहो मे भवदीयसंमतः प्रह्राद आविष्कृतसाधुवादः । भवद्विपक्षेण विचित्रवैशसं संप्रापितस्त्वत्परमः स्वपित्रा ॥ २१ ॥ किमात्मनाऽनेन जहाति योऽन्ततः किं रिक्थहारैः स्वजनाख्यदस्युभिः । किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥ २२ ॥ इत्थं स निश्चित्य पितामहो महानगाधबोधो

भवतः पादपद्मम् । ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपत्नृत्पणस्य सत्तमः ॥ २३ ॥ तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः । आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ २४ ॥ प्रह्लाद उवाच । त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम् । मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ २५ ॥ यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा । तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिललोकसाक्षिणे ॥ २६ ॥ ब्रह्मोवाच । भूतभावन भूतेश देवदेव जगन्मय । मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २७ ॥ श्रीभगवानुवाच । ब्रह्मन्यमनुगृह्णामि तद्विशो विधुनोम्यहम् । यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ २८ ॥ यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः । नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥२९॥ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः । यद्यस्य न भवेत्स्तम्भस्तत्रायं मदनुग्रहः ॥३०॥ मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः । सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः ॥३१॥

एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः । अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ ३२ ॥ क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः । ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ ३३ ॥ गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः । छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ३४ ॥ इन्द्रसेन महाराज याहि भो भद्रमस्तु ते । सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३५ ॥ रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् । सदासन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ॥ ३६ ॥ तत्र दानवदैत्यानां संगात्ते भाव आसुरः । दृष्ट्वा मदनुभावं वै सद्यःकुण्ठो विनङ्क्ष्यति ॥ ३७ ॥ बलिरुवाच । अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः । यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ ३८ ॥ प्रह्लाद उवाच । नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुतापरे ते । यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरपि वन्दिताङ्घ्रिः ॥ ३९ ॥ चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य । सर्वात्मनः समदृशो

विषमः स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ४० ॥ श्रीभगवानुवाच । वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलालयम् । मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ४१ ॥ नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् । मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ ४२ ॥ परिक्रम्यादिपुरुषं प्रह्लादो बलिना सह । प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ ४३ ॥ य इदं देवदेवस्य हरेरद्भुतकर्मणः । अवतारानुचरितं शृण्वन् याति परां गतिम् ॥४४॥ क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे । यत्र यत्रानुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ४५ ॥

इति श्रीभक्तिकौस्तुभे बलेरुपाख्याने बलेद्वारपत्वम् नाम सप्ततितम आह्निकः ।

आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः । समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥ १ ॥ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली । मुखतो निःसृतान्वेदान्हयग्रीवोऽन्तिकेऽहरत् ॥ २ ॥ ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् । दधार शफरीरूपं भगवान्हरिरीश्वरः ॥ ३ ॥ तत्र

राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान्। नारायणपरोऽतप्यत्तपः स सलि-
लाशनः ॥ ४ ॥ एकदा कृतमालायां कुर्वतो जलतर्पणम्। तस्याञ्जल्युदके
काचिच्छफर्येकाऽभ्यपद्यत ॥ ५ ॥ सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत।
उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥६॥ तमाह साऽतिकरुणं महाकारु-
णिकं नृपम्। यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल। कथं विसृज-
से राजन्भीतामस्मिन्सरिज्जले ॥ ७ ॥ तस्या दीनतरं वाक्यमाश्रुत्य
समहीपतिः। कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ ८ ॥
सा तु तत्रैकरात्रेण वर्धमाना कमण्डलौ। अलब्ध्वात्मावकाशं
वा इदमाह महीपतिम् ॥ ९ ॥ नाहं कमण्डलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे।
कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥ १० ॥ स एनां तत आदाय
न्यधादौदञ्चनोदके। तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ ११ ॥ न म
एतदलं राजन्सुखं वस्तुमुदञ्चनम्। पृथु देहि पदं मह्यं यत्त्वाऽहं शरणं
गता ॥१२॥ तत आदाय सा राज्ञा क्षिप्ता राजन्सरोवरे। तदावृत्यात्मना

नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः ।
तोऽयं महामीनोऽन्ववर्धत ॥१३॥ नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः । निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥१४॥ इत्युक्तः सोऽनयन्मत्स्यं तत्र क्षिप्य-
तत्राविदासिनि । जलाशयेऽसंमितं तं समुद्रे प्राक्षिपज्झषम् ॥१५॥ क्षिप्य-
माणस्तमाहेदमिह मां मकरादयः । अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्ह-
सि ॥१६॥ एवं विमोहितस्तेन वदता वल्गुभारतीम् । तमाह को भवान-
स्मान्मत्स्यरूपेण मोहयन् ॥१७॥ नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि
च । यो भवान्योजनशतमह्नाऽभिव्यानशे सरः ॥१८॥ नूनं त्वं भगवान्साक्षा-
द्धरिर्नारायणोऽव्ययः । अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥१९॥
नमस्ते पुरुष श्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर । भक्तानां नः प्रपन्नानां मुख्यो
ह्यात्मगतिर्विभो ॥२०॥ सर्वे लीलाऽवतारास्ते भूतानां भूतिहेतवः । ज्ञातु-
मिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥२१॥ श्रीभगवानुवाच । सप्तमेऽद्य-
तनादूर्ध्वमहन्येतदरिंदम । निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादि-
कम् ॥२२॥ त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा । उपस्था-

स्यति नौः काचिद्विशाला त्वां मयेरिता ॥२३॥ त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च। सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥२४॥ आरुह्य महतीं नावं विचरिष्यस्यविक्लवः। एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥२५॥ दोधूयमानां तां नावं समीरेण बलीयसा। उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥२६॥ अहं त्वामृषिभिः साकं सहनावमुदन्वति। विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो ॥२७॥ मदीयं महिमानं च परं ब्रह्मेति शब्दितम्। वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥२८॥ इत्थमादिश्य राजानं हरिरन्तरधीयत। सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ २९ ॥ आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः। निषसाद हरेः पादौ चिन्तयन्मत्स्यरूपिणः ॥ ३० ॥ ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीम्। वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ३१ ॥ ध्यायन्भगवदादेशं ददृशे नावमागताम्। तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ३२ ॥ तमूचुर्मुनयः प्रीता राजन्ध्या-

यस्य केशवम् । स वै नः संकटादस्मादविता शं विधास्यति ॥ ३३ ॥ सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे । एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ३४ ॥ निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा । वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ३५ ॥ राजोवाच ॥ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः । यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ३६ ॥ जनोऽबुधोऽयं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम् । यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्याद्धृदयं स नो गुरुः ॥३७ ॥ यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः । भजेत वर्णं निजमेष सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरः ॥ ३८ ॥ न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् । कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥ ३९ ॥ अचक्षुरन्धस्य यथाऽग्रणीः कृतस्तथा जनस्याविदुषोऽबुधो गुरुः । त्वमर्कदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम् ॥ ४० ॥ जनो जनस्यादिशतेऽसतीं मतिं यया प्रपद्येत

त्वक्ष्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम्
दुरत्ययं तमः। त्वं त्वक्ष्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम्
॥ ४१ ॥ त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः।
तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ ४२ ॥ तं
त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय। छिन्ध्यर्थदीपैर्भगवन्वचो-
भिर्ग्रन्थीन्हृदय्यान्विवृणु स्वमोकः ॥ ४३ ॥ श्रीशुक उवाच। इत्युक्तवन्तं
नृपतिं भगवानादिपूरुषः। मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत् ॥४४॥
पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम्। सत्यव्रतस्य राजर्षेरात्मगुह्य-
मशेषतः ॥ ४५ ॥ अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयम्। नाव्यासीनो
भगवता प्रोक्तं ब्रह्मसनातनत् ॥ ४६ ॥ अतीतप्रलयापाय उत्थिताय
स वेधसे। हत्वासुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः ॥ ४७ ॥ स तु सत्यव्रतो
राजा ज्ञानविज्ञानसंयुतः। विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः
॥ ४८ ॥ सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः। संवादं महदाख्यानं
श्रुत्वा मुच्येत किल्बिषात् ॥ ४९ ॥ अवतारो हरेर्योऽयं कीर्तयेदन्वहं नरः।

संकल्पास्तस्य सिध्यन्ति स याति परमां गतिम् ॥ ५० ॥ प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा । दितिजमकथयद्यो ब्रह्म सत्यव्रतानां तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ५१ ॥

इति श्रीभक्तिकौस्तुभे मत्स्यावतारचरितं नाम एकसप्ततिम आह्निकः ।

श्रीशुक उवाच । नाभागो नभगापत्यं यततं भ्रातरः कविम् । यविष्ठं व्यभजन्दायं ब्रह्मचारिणमागतम् ॥ १ ॥ भ्रातरोऽभाक्त किं मह्यं भजाम पितरं तव । त्वां ममार्यास्तताभाङ्क्षुर्मा पुत्रक तदादृथाः ॥ २ ॥ इमे अङ्गिरसः सत्रमासतेऽद्य सुमेधसः । षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३॥ तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः । ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥ दास्यन्त्यथ ततो गच्छ तथा स कृतवान्यथा । तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषितम् ॥ ५ ॥ तं कश्चित्स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः । उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं वसु ॥ ६ ॥ ममेदमृषिभिर्दत्तमिति तर्हि स्म मानवः । स्यान्नौ ते पितरि प्रश्नः पृष्टवान्पितरं

तथा ॥ ७ ॥ यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् । चक्रुर्विभागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥ नाभागस्तं प्रणम्याह तवेश किल वास्तुकम् । इत्याह मे पिता ब्रह्मन् शिरसा त्वां प्रसादये ॥ ९ ॥ यत्ते पितावदद्धर्मं त्वं तु सत्यं प्रभाषसे । ददामि ते मन्त्रदृशो ज्ञानं ब्रह्म सनातनम् ॥१०॥ गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् । इत्युक्त्वाऽन्तर्हितो रुद्रो भगवान्सत्यवत्सलः ॥११॥ य एतत्संस्मरेत्प्रातः सायं च सुसमाहितः । कविर्भवति मन्त्रज्ञो गतिं चैव तथात्मनः ॥ १२ ॥ नाभागादम्बरीषोऽभून्महाभागवतः कृती । यो भक्त्या निरयाश्चक्रे अचिरिश्चान्मनोरथान् ॥१३॥ अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् । अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥१४॥ मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम् । विद्वान् विभवनिर्वाणं तमो विशति यत्पुमान् ॥१५॥ वासुदेवे भगवति तद्भक्तेषु च साधुषु । प्राप्तो भावं परं विश्वं येनेदं लोष्ट्रवत्स्मृतम् ॥ १६ ॥ स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं

चकाराच्युतसत्कथोदये ॥१७॥ मुकुन्दलिंगालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसंगमम् । घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥१८॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरोहृषीकेशपदाभिवन्दने कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥१९॥ तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् । एकान्तभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥२०॥ आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया । युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥२१॥ लब्धकामैरनुज्ञातः पारणायोपचक्रमे । तस्य तर्ह्यतिथिः साक्षाद् दुर्वासा भगवानभूत् ॥२२॥ दुर्वासा यमुनाकूलात्कृतावश्यक आगतः । राज्ञाऽभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥२३॥ मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः । बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥२४॥ अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत । धर्मव्यतिक्रमं विष्णोरभक्तस्येश मानिनः ॥२५॥ यो मामतिथिमायातमातिथ्येन निमन्त्र्य च । अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ २६ ॥ एवं ब्रुवाण उत्कृत्य जटां रोष-

विदीपितः। तथा स निममे तस्मै कृत्यां कालानलोपमाम् ॥२७॥ तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम्। वेपयन्तीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ २८ ॥ प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना। ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥२९॥ तमन्वधावद्भगवद्रथांगं दावाग्निरुद्धूतशिखो यथाऽहिम्। तथानुपक्तं स निरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥३०॥ अलब्धनाथः स यदा कुतश्चित्संत्रस्तचित्तोऽरणमेषमाणः। देवं विरिञ्चं समगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसो माम् ॥३१॥ प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः। दुर्वासाः शरणं यातः शर्वं कैलासवासिनाम् ॥३२॥ ततो निराशो दुर्वासाः पदं भगवतो ययौ। वैकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥३३॥ स दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः। आहाच्युतानन्त सदीप्सित प्रभो कृतागसं माऽव हि विश्वभावन ॥३४॥ अजानता ते परमानुभावं कृतं मयाघं भवतः प्रियाणाम्। विधेहि तस्यापचितिं विधात मुच्येत यन्नाम्न्युदिते नारकोऽपि

॥ ३५ ॥ श्रीभगवानुवाच । अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥३६॥ नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना । श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥ ३७ ॥ ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् । हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ३८ ॥ मयि निर्बद्धहृदयाः साधवः समदर्शनाः । वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ३९ ॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥४०॥ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् । मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥४१॥ उपायं कथयिष्यामि तव विप्र शृणुष्व तत् । अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ॥४२॥ साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम् । तपो विद्या च विप्राणां निःश्रेयसकरे उभे । ते एव दुर्विनीतस्य कल्पेते कर्तुमन्यथा ॥४३॥ ब्रह्मंस्तद्गच्छ भद्रं ते नाभागतनयं नृपम् । क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥४४॥

श्रीशुक उवाच। एवं भगवतादिष्टो दुर्वासाश्चक्रतापितः। अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥४५॥ तस्य सोद्यमानं वीक्ष्य पादस्पर्शविलज्जितः। अस्तावीत्तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ ४६ ॥ अम्बरीष उवाच। सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय। सर्वास्त्रघातिन् विप्राय स्वस्ति भूया इडस्पते ॥४७॥ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक्। त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥४८॥ नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे। त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥४९॥ स त्वं जगत्त्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता। विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥५०॥ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः। कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥५१॥ यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः। सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥५२॥ श्रीशुक उवाच। इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम्। अशाम्यत् सर्वतो

विप्रं प्रदहद्राजयाच्ञया ॥५३॥ स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः। प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥५४॥ दुर्वासा उवाच। अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे। कृतागसोऽपि यद्राजन्मंगलानि समीहसे ॥ ५५ ॥ दुष्करः को नु साधूनां दुरत्यजो वा महात्मनाम्। यैः संगृहीतो भगवान् सात्वतामृषभो हरिः ॥ ५६ ॥ यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः। तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ ५७ ॥ राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना। मदघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ ५८ ॥ राजा तमकृताहारः प्रत्यागमनकांक्षया। चरणावुपसंगृह्य प्रसाद्य समभोजयत् ॥ ५९ ॥ सोऽशित्वाऽऽदृतमानीतमातिथ्यं सार्वकामिकम्। तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥६०॥ प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै। दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ ६१ ॥ कर्मावदातमेतत्ते गायन्ति स्वः स्त्रियो मुहुः। कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ ६२ ॥ श्रीशुक उवाच। एवं संकी-

त्यं राजानं दुर्वासाः परितोषितः। ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहै-तुकम् ॥ ६३ ॥ संवत्सरोऽत्यगात्तावद्यावता नागतो गतः। मुनिस्तद्दर्शना-कांक्षी राजाऽब्भक्षो बभूव ह ॥६४॥ गते च दुर्वाससि सोऽम्बरीषो द्विजो-पयोगातिपवित्रमाहरत्। ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा मेने स्ववीर्यं च परानुभावम् ॥ ६५ ॥

इति श्रीभक्तिकौस्तुभे अम्बरीषमाहात्म्य नाम द्विसप्ततितम आह्निकः।

भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः। आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ १ ॥ ब्रह्मा तदुपधार्याथ सह देवैस्तया सह। पुरुषं पुरुषसूक्तेन उप-तस्थे समाहिताः ॥ २ ॥ गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिद-शानुवाच ह। पुरैव पुंसावधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ॥ ३ ॥ वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः। जनिष्यते तत्प्रियार्थं संभवन्तु सुर-स्त्रियः ॥ ४ ॥ वासुदेव कलानन्तः सहस्रवदनः स्वराट्। अग्रतो भविता देवो हरेः प्रियचिकीर्षया ॥ ५ ॥ विष्णोर्माया भगवती यया संमोहितं जगत्।

आदिष्टा प्रभुणांऽशेन कार्यार्थे संभविष्यति ॥ ६ ॥ शूरसेनो यदुपतिर्मथुरा-
मावसन्पुरीम्। माथुरान् शूरसेनांश्च विषयान्बुभुजे पुरा। मथुरा भग-
वान्यत्र नित्यं संनिहितो हरिः ॥ ७ ॥ तस्यां तु कर्हिचिच्छौरिर्वसुदेवः
कृतोद्वहः। देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥८॥ पथिप्रग्रहिणं कंसमा
भाष्याऽऽहाऽशरीरवाक्। अस्यास्त्वामष्टमो गर्भो हन्ता यां वहसेऽबुध ॥९॥
इत्युक्तः स खलः पापो भोजानां कुलपांसनः। भगिनीं हन्तुमारब्धः खड्गपाणिः
कचेऽग्रहीत् ॥ १० ॥ वसुदेव उवाच। मृत्युर्जन्मवतां वीर देहेन सह जायते।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ११ ॥ देहे पञ्चत्वमापन्ने
देही कर्मानुगोऽवशः। देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ १२ ॥
व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति। यथा तृणजलूकैवं देही कर्मगतिं गतः
॥ १३ ॥ स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः। दृष्ट-
श्रुताभ्यां मनसानुचिन्तयन्प्रपद्यते तत्किमपि ह्यपस्मृतिः ॥ १४ ॥ यतो
यतो धावति दैवचोदितं मनो विकारात्मकमाप पञ्चसु। गुणेषु मायारचितेषु

देह्यसौ प्रपद्यमानः सह तेन जायते ॥ १५ ॥ ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते । एवं स्वमायारचितेष्वसौ पुमान्गुणेषु रागानुगतो विमुह्यति ॥ १६ ॥ तस्मान्न कस्यचिद्द्रोहमाचरेत्स तथाविधः । आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भयम् ॥ १७ ॥ एषा तवानुजा बाला कृपणा पुत्रिकोपमा । हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सलः ॥ १८ ॥ निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः । प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत ॥ १९ ॥ मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् । यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ २० ॥ प्रदाय मृत्यवे पुत्रान्मोचये कृपणामिमाम् । विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया । उपस्थितोनिवर्तेत निवृत्तः पुनरापतेत् ॥ २१ ॥ नह्यस्यास्ते भयं सौम्य यद्वै साहाशरीरवाक् । पुत्रान्समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ २२ ॥ श्रीशुक उवाच । स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् । वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद्गृहम् ॥२३॥ अथ काल

उपावृत्ते देवकी सर्वदेवता । पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥२४॥
कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः । अर्पयामास कृच्छ्रेण सोऽनृताद्-
तिविह्वलः ॥२५॥ किं दुःसहं नु साधूनां विदुषां किमपेक्षितम् । किमकार्यं
कदर्याणां दुस्त्यजं किं धृतात्मनाम् ॥२६॥ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव
व्यवस्थितम् । कंसस्तुष्टमना राजन्प्रहसन्निदमब्रवीत् । प्रतियातु कुमारोऽयं
न ह्यस्मादस्ति मे भयम् ॥२७॥ नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥२८॥ सर्वे वै देवताप्राया उभयो-
रपि भारत । एतत्कंसाय भगवान् शशंसाभ्येत्य नारदः ॥२९॥ ऋषेर्विनिर्गमे
कंसो यदून्मत्वा सुरानिति । देवक्या गर्भसंभूतं विष्णुं च स्ववधं प्रति
॥३०॥ देवकीं वसुदेवं च निगृह्य निगडैर्गृहे । जातं जातमहन्पुत्रं तयोरजन-
शङ्कया ॥३१॥ उग्रसेनं च पितरं यदुभोजान्धकाधिपम् । स्वयं निगृह्य
बुभुजे शूरसेनान्महाबलः । यदूनां कदनं चक्रे बली मागधसंश्रयः ॥३२॥
हतेषु षट्सु बालेषु देवक्या औग्रसेनिना सप्तमो वैष्णवं धाम यमनन्तं

प्रवर्त्तते। गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥३३॥ भगवानपि विश्वात्मा योगमायां समादिशत्। देवक्या जठरे गर्भं शेषाख्यं धाम मामकम्। तत्संनिकृष्य रोहिण्या उदरे संनिवेशय ॥ ३४ ॥ अथाहमंशभागेन देवक्याः पुत्रतां शुभे। प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ॥ ३५ ॥ अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम्। धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥ ३६ ॥ सा देवकी सर्वजगन्निवासनिवासभूता नितरां न रेजे। भोजेन्द्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती ॥ ३७ ॥ सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये। सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ ३८ ॥ एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा। सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥ ३९ ॥ त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च। त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥ ४० ॥ बिभर्षि

रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य । सत्त्वोपपन्नानि सुखाव-
हानि सतामभद्राणि मुहुः खलानाम् ॥४१॥ त्वय्यम्बुजाक्षाखिलसत्त्वधाम्नि
समाधिनावेशितचेतसैके । त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं
भवाब्धिम् ॥ ४२ ॥ स्वयं समुत्तीर्य सुदुस्तरं द्युमन्भवार्णवं भीममदभ्रसौ-
हृदाः । भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥४३॥
येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य
कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ४४ ॥ तथा न ते
माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः । त्वयाभिगुप्ता
विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ॥ ४५ ॥ सत्त्वं विशुद्धं
श्रयते भवान्स्थितौ शरीरिणां श्रेयउपायनं वपुः ॥ वेदक्रियायोगतपःसमा-
धिभिस्तवार्हणं येन जनः समीहते ॥ ४६ ॥ सत्त्वं न चेद्धातरिदं निजं
भवेद्विज्ञानभिदापमार्जनम् । गुणप्रकाशैरनुमीयते भवान्प्रकाशते यस्य च
येन वा गुणः ॥ ४७ ॥ न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य

साक्षिणः । मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ॥ ४८ ॥ शृण्वन्गृणन्संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते । क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते ॥ ४९ ॥

इति श्री भक्तिकौस्तुभे श्री कृष्णजन्म पूर्वार्द्धो नाम त्रिसप्ततितम आह्निकः ।

श्रीशुक उवाच । अथ सर्वगुणोपेतः कालः परमशोभनः । यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥ १ ॥ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् । मही मङ्गलभूयिष्ठपुरग्रामव्रजाकराः ॥ २ ॥ नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः । द्विजालिकुलसंनादस्तवका वनराजयः ॥ ३ ॥ ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः । अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ४ ॥ मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहाम् । जायमानेऽजने तस्मिन्नेदुर्दुन्दुभयो दिवि ॥ ५ ॥ जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः । विद्याधर्यश्च ननृतुरप्सरोभिः समं तदा ॥ ६ ॥ मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः । मन्दं मन्दं जलधरा जगर्जुरनुसागरम् ॥ ७ ॥

निशीथे तमउद्भूते जायमाने जनार्दने । देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥ ८ ॥ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदायुदायुधम् । श्रीवत्स-लक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥ ९ ॥ महार्हवैदूर्य-किरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् । उद्दामकाञ्च्यङ्गदकङ्कणादि-भिर्विरोचमानं वसुदेव ऐक्षत ॥ १० ॥ स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा । कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदा द्विजे-भ्योऽयुतमाप्लुतो गवाम् ॥ ११ ॥ वसुदेव उवाच । विदितोऽसि भवान्साक्षा-त्पुरुषः प्रकृतेः परः । केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥ १२ ॥ स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् । तदनु त्वं ह्यप्रविष्ट इव भाव्यसे ॥१३॥ त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो वदन्त्यनीहादगुणादविक्रियात् । त्वयी-श्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥ १४ ॥ स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः । सर्गाय रक्तं

रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये ॥ १६ ॥ त्वमस्य लोकस्य
विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर । राजन्यसंज्ञासुरकोटियूथ-
पैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥ १६ ॥ अयं त्वसभ्यस्तव जन्म नौ गृहे
श्रुत्वाग्रजांस्ते न्यवधीत्सुरेश्वर । स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाधुनै-
वाभिसरत्युदायुधः ॥ १७ ॥ देवक्युवाच । रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म
ज्योतिर्निर्गुणं निर्विकारम् । सत्तामात्रं निर्विशेषं निरीहं सत्वं साक्षाद्विष्णु-
रध्यात्मदीपः ॥ १८ ॥ मर्त्यो मृत्युव्यालभीतः पलायन्लोकान्सर्वान्निर्भयं
नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति
॥ १६ ॥ स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान्भृत्यवित्रासहासि । रूपं
चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥२०॥ जन्म ते
मय्यसौ पापो मा विद्यान्मधुसूदन । समुद्विजे भवद्धेतोः कंसादहमधीरधीः
॥२१॥ उपसंहर विश्वात्मन्नदो रूपमलौकिकम् । शङ्खचक्रगदापद्मश्रिया जुष्टं
चतुर्भुजम् ॥२२॥ विश्वं यदेतत्स्वतनौ निशान्ते यथावकाशं पुरुषः परो

भवान् । बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं हि तत् ॥२३॥ श्रीभगवानुवाच । त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति । तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥२४॥ युवां वै ब्रह्मणादिष्टौ प्रजासर्गे यदा ततः । संनियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥२५॥ तपसा श्रद्धया नित्यं तदाहं भक्ति भावितः । प्रादुरासं वरदराड् युवयोः कामदित्सया ॥२६॥ व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः । न वव्राथेऽपवर्गं मे मोहितौ देवमायया ॥२७॥ अदृष्ट्वान्यतमं लोके शीलौदार्यगुणैः समम् । अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥२८॥ तयोर्वां पुनरेवाहमदित्यामास कश्यपात् । उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥२९॥ एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे । नान्यथा मद्भवं ज्ञानं मर्त्यलिंगेन जायते ॥३०॥ यदि कंसाद्बिभेपि त्वं तर्हि मां गोकुलं नय । मन्मायामानयाशु त्वं यशोदागर्भसंभवाम् ॥३१॥ इत्युक्त्वाऽसीद्धरिस्तूष्णीं भगवानात्ममायया । पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥३२॥ ततश्च शौरिर्भगवत्प्र-

चोदितः सुतं समदाय स सूतिकागृहात् । यदा बहिर्गन्तुमियेष तर्ह्यजा या
योगमायाऽजनि नन्दजायया ॥३३॥ तथा हृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु
पौरेष्वपि शायितेष्वथ । द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायसकी-
लश्रृङ्खलैः ॥३४॥ ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्तन्त यथा तमो
रवेः । ववर्ष पर्जन्य उपांशुगर्जितः शेषोऽन्वगाद्वारि निवारयन्फणैः ॥३५॥
मघोनि वर्षत्यसकृद्यमानुजा गम्भीरतोयौघजवोर्मिफेनिला । भयानकावर्त-
शताकुला नदी मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥३६॥ नन्दव्रजं शौरिरुपेत्य
तत्र तान् गोपान्प्रसुप्तानुपलभ्य निद्रया । सुतं यशोदाशयने निधाय तत्सुता-
मुपादाय पुनर्गृहानगात् ॥३७॥ देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ।
प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥३८॥ यशोदा नन्दपत्नी च जातं परम-
बुध्यत । न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः ॥३९॥ यदा यदेह धर्मस्य क्षयो
वृद्धिश्च पाप्मनः । तदा तु भगवानीश आत्मानं सृजते हरिः ॥४०॥ न ह्यस्य
जन्मनो हेतुः कर्मणो वा महीपते । आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः

॥४१॥तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः । पूतनासुपयः पानं शकटो-च्चाटनं शिशोः ॥४२॥ तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः । धेनुकस्य सहभ्रातुः प्रलम्बस्य च संक्षयः ॥ ४३ ॥ अघासुरस्य संहारः कस्य मायाप्रपं-चनम् गोपानां च परित्राणं दावाग्नेः परिसर्पतः । दमनं कालियस्याहेर्महाहे-र्नन्दमोक्षणम् ॥४४॥ व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः । प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥४५॥ गोवर्धनोद्धारणं च शक्रस्य सुरभे-रथ । यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥४६॥ शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः । अक्रूरागमनं पश्चात्प्रस्थानं रामकृष्णयोः ॥४७॥ व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः । गजमुष्टिकचाणूरकंसादीनां विहिंस-नम् ॥४८॥ मृतस्यानयनं सूनोः मुनेः सांदीपनेर्गुरोः । मथुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥ ४९ ॥ कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः । जरासन्धसमानीतसैन्यस्य बहुशो वधः । घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ॥५०॥ आदानं पारिजातस्य सुधर्मायाः सुरालयात् । रुक्मिण्या

हरणं युद्धे प्रमथ्य द्विपतो हरेः ॥५१॥ हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम् । प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं तथा ॥५२॥ चैद्यपौण्ड्रकशाल्वानां दन्तवक्रस्य दुर्मतेः । शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः । माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम् ॥ ५३ ॥ कर्माण्यपरिमेयानि मनसापि सुरेश्वरैः । सह संकर्षणश्चक्रे भगवान्मधुसूदनः ॥५४॥ यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् । नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ५५ ॥ जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून्सुतशतानि कृतोरुदारः । उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयञ्जनेषु॥५६॥ पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणामन्तः समुत्थकलिना युधि भूपचम्वः । दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम ॥५७॥ कलौ जनिष्यमाणानां दुःखशोक तमोनुदम् । अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद् यशः ॥ ५८॥ यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ।

श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥५६॥

इति श्रीभक्तिकौस्तुभे श्रीकृष्णजन्म उत्तरार्द्धे नाम चतुःसप्ततितम आह्निकः ।

गोपा ऊचुः । राम राम महावीर्य कृष्ण दुष्टनिवर्हण । एषा वै बाधते क्षुन्नस्तच्छान्तिं कर्तुमर्हथः ॥ १ ॥ श्रीशुक उवाच । इति विज्ञापितो गोपैर्भगवान् देवकीसुतः । भक्ताया विप्रभार्यायाः प्रसीदन्निदमब्रवीत् ॥ २ ॥ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः । सत्रमाङ्गिरसं नाम ह्यासते स्वर्गकाम्यया ॥ ३ ॥ तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः । कीर्तयन्तो भगवत आर्यस्य मम चाभिधाम् ॥ ४ ॥ इत्यादिष्टा भगवता गत्वाऽयाचन्त ते तथा । कृताञ्जलिपुटा विप्रान् दण्डवत् पतिता भुवि ॥ ५ ॥ इति ते भगवद्याच्ञां शृण्वन्तोऽपि न शुश्रुवुः । क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः ॥ ६ ॥ देशः कालः पृथग्द्रव्यं मन्त्रतन्त्रर्त्विजोऽग्नयः । देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ॥७॥ तं ब्रह्म परमं साक्षात् भगवन्तमधोक्षजम् । मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे ॥ ८ ॥ तदुपाकर्ण्य

भगवान् प्रहस्य जगदीश्वरः । व्याजहार पुनर्गोपान् दर्शयन् लौकिकीं गतिम् ॥ ६ ॥ मां ज्ञापयत पत्नीभ्यः ससंकर्षणमागतम् । दास्यन्ति काममन्नं वः स्निग्धा मय्युषिता धिया ॥ १० ॥ गत्वाऽथ पत्नीशालायां दृष्ट्वाऽऽसीनाः स्वलंकृताः । नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥ ११ ॥ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः । इतोऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥ १२ ॥ गाश्चारयन् स गोपालैः सरामो दूरमागतः । बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥१३॥ श्रुत्वाऽच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः । तत्कथाक्षिप्तमनसो बभूवुर्जातसंभ्रमाः ॥ १४ ॥ चतुर्विधं बहुगुणमन्नमादाय भाजनैः । अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥ १५ ॥ निषिध्यमानाः पतिभिर्भ्रातृभिर्बन्धुभिः सुतैः । भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः ॥ १६ ॥ तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया । विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः ॥ १७ ॥ स्वागतं वो महाभागा आस्यतां करवाम किम् । यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं

हि वः ॥ १८ ॥ नन्वद्धा मयि कुर्वन्ति कुशलाः स्वार्थदर्शनाः । अहैतुक्य-
व्यवहितां भक्तिमात्मप्रिये यथा ॥ १९ ॥ प्राणबुद्धिमनःस्वात्मदारापत्य-
धनादयः । यत्संपर्कात् प्रिया आसंस्ततः कोन्वपरः प्रियः ॥ २० ॥ तद्यात
देवयजनं पतयो वो द्विजातयः । स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमे-
धिनः ॥ २१ ॥ पत्न्य ऊचुः । मैवं विभोऽर्हति भवान् गदितुं नृशंसं सत्यं
कुरुष्व निगमं तव पादमूलम् । प्राप्ता वयं तुलसिदाम पदावसृष्टं केशै-
र्निवोढुमतिलंघ्य समस्तबन्धून् ॥ २२ ॥ गृह्णन्ति नो न पतयः पितरौ सुता
वा न भ्रातृबन्धुसुहृदः कुत एव चान्ये । तस्माद्भवत्प्रपदयोः पतितात्मनां नो
नान्या भवेद्गतिररिन्दम तद्विधेहि ॥२३॥ श्रीभगवानुवाच । पतयो नाभ्य-
सूयेरन् पितृभ्रातृसुतादयः । लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ॥२४॥
न प्रीतयेऽनुरागाय ह्यंगसंगो नृणामिह । तन्मनो मयि युञ्जाना अचिरान्मा-
मवाप्स्यथ ॥ २५ ॥ श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात् । न तथा
सन्निकर्षेण प्रतियात ततो गृहान् ॥ २६ ॥ श्रीशुक उवाच । इत्युक्ता मुनि-

पत्न्यस्ता यज्ञवाटं पुनर्गताः। ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन् ॥२७॥ अथानुस्मृत्य विप्रास्ते अन्वतप्यन् कृतागसः। यद्विश्वेश्वरयोर्याच्ञामहन्म नृविडम्बयोः ॥२८॥ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम्। आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥ २९ ॥ धिग्जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञताम्। धिक् कुलं धिक् क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥ ३० ॥ नूनं भगवतो माया योगिनामपि मोहिनी। यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥३१॥ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ। दुरन्तभावं योऽविध्यन्मृत्युपाशान् गृहाभिधान् ॥ ३२ ॥ नासां द्विजातिसंस्कारो न निवासो गुरावपि। न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥ ३३ ॥ अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे। भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥ ३४ ॥ ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया। अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ॥ ३५ ॥ स एष भगवान् साक्षाद्विष्णुर्योगेश्वरेश्वरः। जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे

॥ ३६ ॥ अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः । भक्त्या यासां मतिर्जाता ह्यस्माकं निश्चला हरौ ॥ ३७ ॥ स वै न आद्यः पुरुषः स्वमायामोहितात्मनाम् । अविज्ञातानुभावानां क्षन्तुमर्हत्यतिक्रमम् ॥ ३८ ॥ इति स्वाघमनुस्मृत्य कृष्णे ते कृतहेलनाः । दिदृक्षवोऽप्यच्युतयोः कंसाद्भीता न चाऽचलन् ॥ ३९ ॥

इति श्रीभक्तिकौस्तुभे पञ्चसप्ततितम आह्निके यज्ञपत्नीप्रसाद नाम प्रथमः परिच्छेदः

प्रह्लादो भगवद्भक्तः सदैत्यः सहदानवः । नैमिषारण्यमासाद्य स्नानं चक्रे मुदान्वितः ॥१ ॥ सरस्वतीं महापुण्यां दृष्ट्वैव विमलोदकां । कृतस्तीर्थविधिस्तत्र प्रह्लादेन महात्मना ॥ २ ॥ न्यग्रोधं सुमहच्छायमपश्यत् पुरतः स्थितम् । शार्ङ्गमाजगवञ्चैव तथाक्षय्यौ महेषुधी ॥ ३ ॥ समुन्नतजटाभारौ स्थितौ धर्मसुतौ पुरः । ध्यानस्थौ च महाभागौ नरनारायणावृषी ॥ ४ ॥ दैत्यानां पालकः प्राह क्रोधरक्तेक्षणस्ततः । किं भवद्भ्यां समारब्धो दम्भो धर्मविनाशनः । न श्रुतो नैव दृष्टश्च संसारेस्मिन् कदाचन ॥ ५ ॥ क

जटाधारणं देहे कौपुधिश्च विडम्बनं । धर्मस्य लङ्घनं गर्ह्यं युवयोर्दिव्यभावयोः ॥ ६ ॥ इति गर्ववचः श्रुत्वा कुपितः प्राह वै नरः । का चिन्ता तव दैत्येन्द्र वृथा तपसि चावयोः ॥ ७ ॥ सामर्थ्ये सति यत् कुर्यात् तत् सम्पद्येत तस्य हि । युद्धे तपसि सामर्थ्यं आवयोः खलु विद्यते । गच्छ मार्गं यथाकामं कस्मान्मन्द विकत्थसे ॥ ८ ॥ ब्राह्मं तेजो दुराधर्षं न त्वं वेद विमोहितः । विप्रचर्चा न कर्त्तव्या प्राणिभिः सुखमीप्सुभिः ॥ ६ ॥ प्रह्लाद उवाच । मयि तिष्ठति दैत्येन्द्रे धर्मसेतुप्रवर्त्तके । वर्जनीयं सदा तीर्थे अधर्माचरणं किल ॥१०॥ युवां मन्दमती चोभौ मृषा गर्वविमोहितौ । शक्तिश्चेत्तव युद्धेऽस्ति दर्शयाद्य स्वपौरुषम् ॥११॥ तदाकर्ण्य वचस्तस्य नरस्तं प्रत्युवाच ह । युध्यस्व त्वं मया सार्द्धं यदि ते मतिरीदृशी ॥१२॥ निशम्यैतद् यतेर्वाक्यं दैत्येन्द्रः कुपितो भृशम् । प्रह्लादो बलसंयुक्तः प्रतिज्ञामकरोद्दृढम् ॥१३॥ येन केनाप्युपायेन जेष्यामि तावुभावपि । नरनारायणौ दान्तौ सशास्त्रौ च तपस्विनौ ॥१४॥ दिव्यवर्षसहस्रन्तु अभूद युद्धं भयङ्करम् । ऊचुः परस्परं

देवा दैत्याश्चातीव विस्मिताः। अदृष्टपूर्वं युद्धं वै वर्त्ततेऽद्य सुदारुणम् ॥१५॥ नारदः पर्वतं प्राह नेदृशं चाभवत् पुरा। तारकासुरयुद्धञ्च तथा वृत्रासुरस्य च। मधुकैटभयोर्युद्धं हरिणा नेदृशं कृतम् ॥१६॥ आजगाम तदा तूर्णं पीतवासाश्चतुर्भुजः। प्रह्लादस्याश्रमं शङ्ख-चक्रपद्मगदाधरः ॥१७॥ दृष्ट्वा तमागतं विष्णुं हिरण्यकशिपोः सुतः। प्रणम्य परया भक्त्या प्राञ्जलिस्तमभाषत ॥१८॥ देवदेव जगन्नाथ श्रीपते भक्तवत्सल। कथं न जितवान् आजौ अहमेतौ तपस्विनौ ॥१९॥ विष्णुरुवाच। तापसौ तु जितात्मानौ सिद्धौ चाथ मदंशकौ। नरनारायणावेतौ विस्मयः कोऽत्र मारिष ॥२०॥ गच्छ त्वं वितलं राजन् कुरु भक्तिं ममाचलाम्। नाभ्यां कुरु विरोधं त्वं तापसाभ्यां महामते ॥२१॥ दैत्यराज स्तदाज्ञसो निर्ययौ असुरैः सह। नरनारायणौ भूयस्तपो युक्तौ बभूवतुः ॥२२॥

इति श्रीभक्तिकौस्तुभे पंचसप्ततितम आह्निके प्रह्लादेन सह नरनारायणयोर्युद्धम् नाम द्वितीयः परिच्छेदः।

श्रीशुक उवाच । कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः । विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥१॥ यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी । तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा ॥ २ ॥ पतिव्रता पतिं प्राह म्लायता वदनेन सा । दरिद्रा सीदमाना सा वेपमानाभिगम्य च ॥ ३ ॥ ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः । ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः ॥ ४ ॥ तमुपेहि महाभाग साधूनां च परायणम् । दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने । स्मरतः पादकमलमात्मानमपि यच्छति ॥ ५ ॥ स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु । अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥ ६ ॥ इति संचिन्त्य मनसा गमनाय मतिं दधे । अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ॥ ७ ॥ याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतण्डुलान् । चैलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ ८ ॥ स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल । कृष्णसंदर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥ ९ ॥ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च

स द्विजः। विप्रोऽगम्यान्धवृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥ १० ॥ गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः। विवेशैकतमं श्रीमद्ब्रह्मानन्दं गतो यथा ॥ ११ ॥ तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः। सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १२ ॥ सख्युः प्रियस्य विप्रर्षेरंगसंगातिनिर्वृतः। प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः ॥१३॥ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः। अग्रहीच्छिरसा राजन्भगवांल्लोकपावनः ॥१४॥ धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा। अर्चित्वावेद्य ताम्बूलं गां च स्वागतमब्रवीत् ॥१५॥ कुचैलं मलिनं क्षामं द्विजं धमनिसंततम्। देवी पर्यचरच्छैब्या चामरव्यजनेन वै ॥१६॥ श्रीभगवानुवाच। अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात्। समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥१७॥ प्रायो गृहेषु ते चित्तमकामविहितं तथा। नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे ॥१८॥ नाहमिज्याप्रजातिभ्यां तपसोपशमेन च तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ १९ ॥ अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ। गुरुदारैश्चो-

दितानामिन्धनानयने क्वचित् ॥ २० ॥ प्रविष्टानां महारण्यमपतौ सुमहद्-
द्विज । वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥ २१ ॥ सूर्यश्चास्तं गतस्ता-
वत्तमसा चावृता दिशः । निम्नं कूलं जलमयं न प्राज्ञायत किंचन ॥ २२ ॥
वयं भृशं तत्र महानिलाम्बुभिर्निहन्यमाना मुहुरम्बुसंप्लवे । दिशोऽविदन्तो-
ऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः ॥२३॥ एतद्विदित्वा उदिते रवौ
सांदीपनिर्गुरुः।अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान्॥२४॥अहो हे पुत्र-
का यूयमस्मदर्थेऽतिदुःखिताः ।आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः॥२५॥
एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् । यद्वै विशुद्धभावेन सर्वार्था-
त्मार्पणं गुरौ ॥२६॥ तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः । छन्दां-
स्ययातयामानि भवन्त्विह परत्र च ॥२७॥ ब्राह्मण उवाच । किमस्माभिरनि
र्वृत्तं देवदेव जगद्गुरो । भवता सत्यकामेन येषां वासो गुरावभूत् ॥२८॥
यस्य च्छन्दोमयं ब्रह्म देह आवपनं विभो । श्रेयसां तस्य गुरुषु वासोऽत्यन्त-
विडम्बनम् ॥२९॥ श्रीभगवानुवाच । किमुपायनमानीतं ब्रह्मन्मे भवता गृहात्

अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्यैव मे भवेत्। भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥३०॥ इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः। पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः। स्वयं जहार किमिदमिति पृथुकतण्डुलान् ॥३१॥ नन्वेतदुपनीतं मे परमप्रीणनं सखे। तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः ॥३२॥ इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे। तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥३३॥ एतावताऽलं विश्वात्मन्सर्वसंपत्समृद्धये। अस्मिँल्लोके तथाऽमुष्मिन् पुंसस्त्वत्तोषकारणम् ॥३४॥ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम्। स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥३५॥ अहो ब्रह्मण्य देवस्य दृष्टा ब्रह्मण्यता मया। यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥३६॥ क्वाहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः। ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ ३७ ॥ निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा। महिष्या वीजितः श्रान्तो बालव्यजनहस्तया ॥ ३८ ॥ शुश्रूषया परमया पादसंवाहनादिभिः। पूजितो देवदेवेन

विप्रदेवेन देववत् ॥३९॥ अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् । इति कारुणिको नूनं धनं मे भूरि नाददात् ।४०॥ पतिमागतमाकर्ण्य पत्न्युद्धर्षाऽतिसंभ्रमा । निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥४१॥ पत्नीं वीक्ष्य विस्फुरन्तीं देवीं वैमानिकीमिव । दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः ।४२॥ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् । मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा । पयः फेननिभाः शय्या दान्ता रुक्मपरिच्छदाः । पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥४४॥ आसनानि च हैमानि मृदूपस्तरणानि च । मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥४५॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च । रत्नदीपान्भ्राजमानांल्ललना रत्नसंयुतान् ॥४६॥ विलोक्य ब्राह्मणस्तत्र समृद्धिं सर्वसंपदाम् । तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥४७॥ नूनं वतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः । महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥ ४८ ॥ किंचित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी । मयोपनीतां

पृथुकैकमुष्टि प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ४९ ॥ तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् । महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ५० ॥ भक्ताय चित्रा भगवान्हि संपदो राज्यं विभूतीर्न समर्थयत्यजः । अदीर्घ बोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां महोद्भवम् ॥ ५१ ॥ इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने । विषयान् जायया त्यक्ष्यन्बुभुजे नातिलम्पटः ॥ ५२ ॥ एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् । तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥ ५३ ॥ एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः । लब्धभावो भगवति कर्मबन्धाद्विमुच्यते ॥ ५४ ॥

इति श्रीभक्तिकौस्तुभे श्रीदामाप्रसादो नाम षट्सप्तति आह्निकः ।

श्रीशुक उवाच । एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः । जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥ १ ॥ विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः । इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥ २ ॥ ब्रह्मद्विषः शठ-

धियो लुब्धस्य विषयात्मनः । क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः
॥ ३ ॥ हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम् । प्रजा भजन्त्यः सीदन्ति
दरिद्रा नित्यदुःखिताः ॥ ४ ॥ एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च ।
विसृज्य स नृपद्वारि तां गाथां समगायत ॥ ५ ॥ तामर्जुन उपश्रुत्य कर्हि-
चित्केशवान्तिके । परेतेऽनवमे बाले ब्राह्मणं समभाषत ॥ ६ ॥ किंस्विद्
ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः । राजन्यबन्धुरेते वै ब्राह्मणाः सत्रमास-
ते ॥ ७ ॥ धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः । ते वै राजन्यवेषेण
नटा जीवन्त्यसुंभराः ॥ ८ ॥ अहं प्रजां वां भगवन् रक्षिष्ये दीनयोरिह ।
अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥ ९ ॥ ब्राह्मण उवाच । संकर्ष-
णो वासुदेवः प्रद्युम्नो धन्विनां वरः । अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नु-
वन्ति यत् ॥ १० ॥ तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः । चिकीर्षसि
त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥ ११ ॥ अर्जुन उवाच । नाहं संकर्षणो
ब्रह्मन्न कृष्णः कार्ष्णिरेव च । अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः

॥ १२ ॥ माऽवमंस्था मम ब्रह्मन्वीर्यं त्र्यम्बकतोषणम् । मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ॥ १३ ॥ एवं विश्रम्भितो विप्रः फाल्गुनेन परंतप । जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ १४ ॥ प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः । पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ १५ ॥ स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् । दिव्यान्यस्त्राणि संस्मृत्य सज्जं गाण्डीवमाददे ॥ १६ ॥ न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः । तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ १७ ॥ ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः । सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ १८ ॥ तदाह विप्रो विजयं विनिन्दन्कृष्णसंनिधौ । मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥१९॥ न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः । यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥ २० ॥ धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः । दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः ॥ २१ ॥ एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः । ययौ संयमनीमाशु यत्रास्ते भगवान्यमः ॥२२॥

विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात्पुरीम् । आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां
वारुणीमथ । रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ २३ ॥ ततोऽल-
ब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषे-
धता ॥२४॥ दर्शये द्विजसूनूंस्ते मावज्ञात्मानमात्मना। ये ते नः कीर्तिं विमलां
मनुष्याः स्थापयिष्यन्ति नः ॥२५॥ इति संभाष्य भगवानर्जुनेन सहेश्वरः ।
दिव्यं स्वरथमास्थाय प्रतीचीं दिसमाविशत् ॥ २६ ॥ सप्तद्वीपान्सप्तसिन्धू-
न्सप्तसप्त गिरीनथ। लोकालोकं तथातीत्य विवेश सुमहत्तमः ॥ २७ ॥
तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः । तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ
॥ २८ ॥ तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः सहस्रादित्यसंकाशं
स्वचक्रं प्राहिणोत्पुरः ॥ २९ ॥ तमः सुघोरं गहनं कृतं महद्विदारयद्भूरितरेण
रोचिषा । मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥३०॥
द्वारेणचक्रानुपथेन तत्तमः परं परंज्योतिरनन्तपारम्। समश्नुवानं प्रस-
मीक्ष्य फाल्गुनः प्रताडिताक्षो पिदधेऽक्षिणी उभे ॥ ३२ ॥ ततः प्रविष्टः

सलिलं नभस्वता बलीयसैजदृबृहदूर्मिभूषणम्। तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥३२॥ तस्मिन्महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः। विभ्राजमानं द्विगुणोल्बणेक्षणं सिताचलाभं शितिकण्ठजिह्वम् ॥३३॥ ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम्। सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥ ३४ ॥ महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्तलम्। प्रलम्बचार्वष्टभुजं सुकौस्तुभं श्रीवत्सलक्ष्म्या वनमालया वृतम् ॥३५॥ सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः। पुष्ट्या श्रिया कीर्त्यजयाखिलर्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ३६ ॥ ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः। तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा ॥३७॥ द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये। कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरयेतमन्ति मे ॥३८॥ पूर्णकामावपि युवां नरनारायणावृषी। धर्ममाचरतां स्थित्यै ऋषभौ

लोकसंग्रहम् ॥३९॥ इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना। ओमित्यानम्य भूमालमादाय द्विजदारकान् ॥ ४० ॥ न्यवर्ततां स्वकं धाम संप्रहृष्टौ यथागतम्। विप्राय ददतुः पुत्रान्यथारूपं यथावयः ॥ ४१ ॥ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः। यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥ ४२ ॥

इति श्रीभक्तिकौस्तुभे पार्थव्यामोह निरसनं नाम सप्तसप्ततितम आह्निकः।

·श्रीगणेशायनमः। नमश्चण्डिकायै। नमस्तेस्तु महारौद्रे महाघोरपराक्रमे। महाबले महोत्साहे महाभयविनाशिनि। त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्द्धिनि। अस्य श्रीदेवी कवचस्य ब्रह्माऋषिः अनुष्टुप्छन्दः चामुण्डा देवता अंगन्यासोक्तमातरोबीजं दिग्बन्ध देवतास्तत्त्वं श्रीजगदम्बासुप्रीतये सप्तशतीपाठांगजपे विनियोगः। नमश्चण्डिकायै। मार्कण्डेय उवाच। यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम्। यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥ ब्रह्मोवाच। अस्ति गुह्यतमं विप्र सर्वभूतोप-

कारकम् । देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥ प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥ पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च । सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥ ४ ॥ नवमं सिद्धिदात्री च नव दुर्गाः प्रकीर्तिताः । उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५ ॥ अग्निना दह्यमानास्तु शत्रुमध्ये गता रणे । विषमे दुर्गमे चैव भयार्त्ताः शरणं गताः ॥ ६ ॥ न तेषां जायते किञ्चिदशुभं रणसंकटे । नापदं तस्य पश्यामि शोकदुःखभयं न हि ॥ ७ ॥ यैस्तु भक्त्या स्मृता नूनं तेषामृद्धिः प्रजायते । प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥ ८ ॥ ऐन्द्री गजसमारूढा वैष्णवी गरुडासना । माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥ ९ ॥ ब्राह्मी हंससमारूढा सर्वाभरणभूषिता । नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥१०॥ दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः । शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥११॥ खेटकं तोमरं चैव परशुं पाशमेव

च कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ॥ १२ ॥ दैत्यानां देहनाशाय भक्तानामभयाय च । धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥१३॥ नमस्तेऽस्तु महारौद्रे महाघोरपराक्रमे । महाबले महोत्साहे महाभयविनाशिनि । त्राहि मां देवि दुष्प्रेक्ष्ये शत्रुणां भयवर्द्धिनी ॥१४॥ प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता । दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ॥ १५ ॥ प्रचीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी । उदीच्यां पातु कौवेरी ईशान्यां शूलधारिणी ॥ १६ ॥ ऊर्ध्वं ब्रह्माणि मे रक्षेदधस्ताद्वैष्णवी तथा । एवं दशदिशो रक्षेच्चामुण्डा शववाहना ॥ १७ ॥ जया मे चाग्रतः स्थातु विजया स्थातु पृष्ठतः । अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥१८॥ शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता । मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥१९॥ त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके । शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥२०॥ कपोलौ कालिका रक्षेत्कर्णमूले तु शांकरी । नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ २१ ॥

अधरे चामृतकला जिह्वायां च सरस्वती । दन्तानन्नतु कौमारी कण्ठमध्ये तु चण्डिका ॥२२॥ घण्टिकां चित्रघण्टा च महामाया च तालुके । कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला ॥२३॥ ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी । नीलग्रीवा वहिःकण्ठे नलिकां नलकूवरी ॥ २४ ॥ खड्गधारिण्युभौ स्कंधौ बाहू मे वज्रधारिणी । हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च ॥२५॥ नखाञ्छूलेश्वरी रक्षेत्कुक्षौ रक्षेन्नलेश्वरी । स्तनौ रक्षेन्महादेवी मनःशोकविनाशिनी ॥ २६ ॥ हृदये ललिता देवी उदरे शूलधारिणी । नाभौ च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा ॥२७॥ भूतनाथा च मेढ्रं मे गुदे महिषवाहिनी । कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी ॥२८॥ जङ्घे महाबला रक्षेत्सर्वकामप्रदायिनी । गुल्फयोर्नारसिंही च पादपृष्ठेऽमितौजसी ॥ २९ ॥ पादाङ्गुलीषु श्री रक्षेत्पादाधस्तलवासिनी । नखान्दंष्ट्राकराली च केशाँश्चैवोर्ध्वकेशिनी ॥ ३० ॥ रोमकूपेषु कौबेरी त्वचं वागीश्वरी तथा । रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥ ३१ ॥ अन्त्राणि कालरात्रिश्च पित्तं च

मुकुटेश्वरी । पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥ ३२ ॥ ज्वालामुखी नखज्वालामभेद्या सर्वसन्धिषु । शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा । अहङ्कारं मनो बुद्धिं रक्षेन्मे धर्मचारिणी ॥ ३३ ॥ प्राणापानौ तथा व्यान-मुदानञ्च समानकम् । वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना ॥ ३४ ॥ आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी । यशः कीर्तिं च लक्ष्मीं च धनं विद्यां च चक्रिणी ॥ ३५ ॥ गोत्रमिन्द्राणि मे रक्षेत्पशुन्मे रक्ष चण्डिके । पुत्रान् रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी ॥३६ ॥ पन्थानं सुपथा रक्षेन्मार्गं क्षेमंकरी तथा । राजद्वारे महालक्ष्मीर्विजया सर्वतः स्थिता ॥ ३७ ॥ रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु । तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥३८॥ पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः । कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ॥३९॥ तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः । यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥ ४० ॥ परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् । निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः । त्रैलोक्ये तु भवेत्पूज्यः

कवचेनावृतः पुमान् ॥ ४१ ॥ इदं तु देव्याः कवचं देवानामपि दुर्लभम् । यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः ॥ ४२ ॥ दैवीकला भवेत्तस्य त्रैलोक्येष्वपराजितः । जीवेद्वर्षशतं साग्रमपमृत्यु विवर्जितः ॥ ४३ ॥ नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः । स्थावरं जङ्गमं चैव कृत्रिमं चापि यद्विषम् ॥ ४४ ॥ अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले । भूचराः खेचराश्चैव कुलजाश्चौपदेशिकाः ॥ ४५ ॥ सहजाः कुलजा माला शाकिनी डाकिनी तथा । अन्तरीक्षचरा घोरा डाकिन्यश्च महाबलाः ॥ ४६ ॥ ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः । ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः । नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥ ४७ ॥ मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धि करं परम् । यशसा वर्द्धते सोऽपि कीर्तिमण्डित भूतले ॥ ४८ ॥ जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा । यावद्भूमण्डलं धत्ते सशैलवनकाननम् ॥ ४९ ॥ तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी । देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् । प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः

॥ ५० ॥ श्री वाराहपुराणे हरिहरब्रह्मविरचितं देव्याः कवचं समासम् । श्रीजगदंबार्पणमस्तु ॥

इति श्री भक्तिकौस्तुभे अष्टसप्ततितम आह्निके देवी कवचं नाम प्रथमः परिच्छेदः ।

अस्य श्री अर्गलास्तोत्रमन्त्रस्य विष्णुऋषिः अनुष्टुप्छन्दः श्रीमहालक्ष्मीर्देवता श्रीजगदम्बासुप्रीतये सप्तशतीपाठांगजपे विनियोगः । नमश्चण्डिकायै । मार्कण्डेय उवाच । जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते ॥ १ ॥ मधुकैटभविद्रावि विधातृवरदे नमः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २ ॥ महिषासुरनिर्णाशिविधात्रि वरदेनमः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥ रक्तबीजवधे देवि चण्डमुण्डविनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥ शुम्भस्यैव निशुम्भस्य धूम्राक्षस्य च मर्दिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५ ॥ वन्दिताङ्-घ्रियुगेदेवि सर्वसौभाग्यदायिनि । रूपं देहि जयं देहि यशो देहि द्विषो

जहि ॥ ६ ॥ अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥ नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥ स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ९ ॥ चण्डिके सततं ये त्वामर्चयन्तीह भक्तितः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१०॥ देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥११॥ विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१२॥ विधेहि देवि कल्याणं विधेहि परमां श्रियम् । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१३॥ विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१४॥ प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१५॥ चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१६॥ कृष्णेन संस्तुते देवि

शश्वद्भक्त्या त्वमम्बिके। रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१७॥ हिमाचलसुतानाथसंस्तुते परमेश्वरि। रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १८ ॥ सुरासुरशिरोरत्न-निघृष्टचरणेऽम्बिके रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १९ ॥ इन्द्राणीपतिसद्भावपूजिते परमेश्वरि। रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २० ॥ देवि प्रचण्डदोर्दण्डदैत्यदर्प-विनाशिनि। रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१ ॥ पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे। रूपं देहि जय देहि यशो देहि द्विषो जहि ॥२२॥ देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके। रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥२३॥ पत्नीं मनोरमां देहि मनो वृत्तानुसारिणीम्। तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २४ ॥ इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः। स तु सप्तशतीसंख्यावरमाप्नोति सम्पदाम् ॥ २५ ॥ श्रीमार्कण्डेयपुराणे अर्गलास्तोत्रं समाप्तम्।

इति श्रीभक्तिकौस्तुभे अष्टसप्ततितम आह्निके अर्गलास्तोत्रं नाम द्वितीय परिच्छेदः।

नमश्चण्डिकायै । ऐं विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् । निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभु ॥ १ ॥ ब्रह्मोवाच । त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका । सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ॥ २ ॥ अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः । त्वमेव संन्ध्या सावित्री त्वं देवि जननी परा ॥ ३ ॥ त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् । त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥ ४ ॥ विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने । तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥ ५ ॥ महाविद्या महामाया महामेधा महास्मृतिः । महामोहा च भवती महादेवी महासुरी ॥ ६ ॥ प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी । कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ७ ॥ त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा । लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥ ८ ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा । शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥९॥ सौम्यासौम्यतराशेषसौम्येभ्यस्त्वति-

सुन्दरी। परापराणां परमा त्वमेव परमेश्वरी ॥ १० ॥ यच्च किंचित् क्वचिद्वस्तु सदसद्वाखिलात्मिके। तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥ ११ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत्। सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२ ॥ विष्णुः शरीरग्रहणमहमीशान एव च। कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥ १३ ॥ सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता। मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १४ ॥ प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु। बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ १५ ॥

इति श्रीभक्तिकौस्तुभे एकोनाशीतितम आह्निके रात्रिसूक्तं नाम प्रथम परिच्छेदः।

ह्रीं ऋषिरुवाच ॥१॥ शक्रादयः सुरगणा निहतेऽतिवीर्ये तस्मिन्दुरात्मनि सुरारिबले च देव्या। तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ २ ॥ देव्या यया ततमिदं जगदात्मशक्त्या निश्शेषदेवगणशक्तिसमूहमूर्त्या। तामम्बिकामखिलदेवमहर्षिपूज्यां भक्त्या नताःस्म

विदधातु शुभानि सा नः ॥ ३ ॥ यस्याः प्रभावमतुलं भगवाननन्तो ब्रह्मा हरश्च नहि वक्तुमलं बलं च। सा चण्डिकाखिलजगत्परिपालनाय नाशाय चाशुभभयस्य मतिं करोतु ॥ ४ ॥ या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः। श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ ५ ॥ किं वर्णयाम तव रूपमचिन्त्यमेतत्किञ्चातिवीर्यमसुरक्षयकारि भूरि। किं चाहवेषु चरितानि तवातियानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥ ६ ॥ हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा। सर्वाश्रयाखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ७ ॥ यस्याः समस्तसुरता समुदीरणेन तृप्तिं प्रयाति सकलेषु मखेषु देवि। स्वाहासि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च ॥८॥ या मुक्तिहेतुरविचिन्त्य महाव्रता त्वम् अभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः। मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्यासि सा भगवती परमा हि देवि ॥ ९ ॥

शब्दात्मिका सुविमलर्ग्यजुषां निधानमुद्गीथरम्यपदपाठवतां च साम्नाम् । देवी त्रयी भगवती भगभावनाय वार्त्ता च सर्वजगतां परमार्त्तिहन्त्री ॥ १० ॥ मेधासि देवि विदिताखिलशास्त्रसारा दुर्गासि दुर्गभवसागरनौर-सङ्गा । श्रीः कैटभारिहृदयैककृताधिवासा गौरी त्वमेव शशिमौलिकृतप्र-तिष्ठा ॥ ११ ॥ ईषत्सहासममलं परिपूर्णचन्द्र-बिम्बानुकारि कनकोत्तमका-न्तिकान्तम् । अत्यद्भुतं प्रहृतमात्तरुषा तथापि वक्त्रं विलोक्य सहसा महि-षासुरेण ॥१२॥ दृष्ट्वा तु देवि कुपितं भ्रुकुटीकराल-मुद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः । प्राणान्मुमोच महिष-स्तदतीव चित्रं कैर्जीव्यते हि कुपितान्तक-दर्शनेन ॥ १३ ॥ देवि प्रसीद परमा भवती भवाय सद्यो विनाशयसि कोपवती कुलानि । विज्ञातमेतदधुनैव यदस्तमेतन्नीतं बलं सुविपुलं महिषा-सुरस्य ॥ १४ ॥ ते संमता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति धर्मवर्गः । धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना ॥ १५ ॥ धर्म्याणि देवि सकलानि सदैव कर्माण्यत्यादृतः

प्रतिदिनं सुकृती करोति । स्वर्गं प्रयाति च ततो भवतीप्रसादा-ल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥ १६ ॥ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि । दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १७ ॥ एभिर्हतैर्जगदुपैति सुखं तथैते कुर्वन्तु नाम नरकाय चिराय पापम् । संग्राममृत्युमधिगम्य दिवं प्रयान्तु मत्वेति नूनमहितान्विनिहंसि देवि ॥ १८ ॥ दृष्ट्वैव किं न भवती प्रकरोति भस्म सर्वासुरानरिपु यत्प्रहिणोषि शस्त्रम् । लोकान्प्रयान्तु रिपवोऽपिहि शस्त्रपूता इत्थं मतिर्भवति तेष्वहितेषुसाध्वी ॥१९॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः शूलाग्रकान्तिनिवहेन दृशोऽसुराणाम् । यन्नागता विलयमंशुमदिन्दुखण्ड-योग्याननं तव विलोकयतां तदेतत् ॥ २० ॥ दुर्वृत्तवृत्तशमनं तव देवि शीलं रूपं तथैतदविचिन्त्यमतुल्यमन्यैः । वीर्यं च हन्तृहृतदेवपराक्रमाणां वैरिष्वपि प्रकटितैव दया त्वयेत्थम् ॥ २१ ॥ केनोपमा भवतु तेऽस्य पराक्रमस्य रूपं च शत्रुभयकार्यतिहारि कुत्र । चित्ते कृपा समरनिष्ठु-

रता च दृष्टा त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥ २२ ॥ त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्धनि तेऽपि हत्वा । नीता दिवंरिपुगणा भयमप्यपास्त-मस्माकमुन्मदसुरारिभवं नमस्ते ॥ २३ ॥ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके । घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ २४ ॥ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे । भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ २५ ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते । यानि चात्यंतघोराणि तैरक्षास्मांस्तथा भुवम् ॥ २६ ॥ खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके । करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ॥ २७ ॥ ऋषिरुवाच ॥ २८ ॥ एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नन्दनोद्भवैः । अर्चिता जगतां धात्री तथा गन्धानुलेपनैः ॥ २९ ॥ भक्त्या समस्तैस्त्रिदशै-र्दिव्यैर्धूपैः सुधूपिता । प्राह प्रसादसुमुखी समस्तान्प्रणतान् सुरान् ॥ ३० ॥ देव्युवाच ॥ ३१ ॥ व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवाञ्छितम् ॥ ३२ ॥ देवा ऊचुः ॥३३॥ भगवत्या कृतं सर्वं न किञ्चिदवशिष्यते ॥३४॥

यदयं निहतः शत्रुरस्माकं महिषासुरः। यदि चापि वरो देयस्त्वयास्माकं महेश्वरि॥ ३५॥ संस्मृता संस्मृता त्वन्नो हिंसेथाः परमापदः। यश्च मर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने॥ ३६॥ तस्य वित्तर्द्धिविभवै-र्धनदारादि-सम्पदाम्। वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके॥ ३७॥ ऋषिरुवाच॥ ३८॥ इति प्रसादिता देवैर्जगतोऽर्थे तथात्मनः। तथेत्युक्त्वा भद्रकाली बभूवान्तर्हिता नृप॥ ३९॥

इति श्रीभक्तिकौस्तुभे एकोनशीतितम आह्निके शक्रादिस्तुतिर्नाम द्वितीयः परिच्छेदः।

क्लीं ऋषिरुवाच॥ १॥ देव्या हते तत्र महासुरेन्द्रे सेन्द्राः सुरा वह्नि-पुरोगमास्ताम्। कात्यायनीं तुष्टुवुरिष्टलाभाद् विकासिवक्त्राब्जविकासिताशाः॥ २॥ देवि प्रपन्नार्त्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य। प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य॥ ३॥ आधार-भूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि। अपां स्वरूपस्थितया त्वयैतद् आप्यायते कृत्स्नमलङ्घ्यवीर्ये॥ ४॥ त्वं वैष्णवीशक्तिरनन्त-

योर्या विश्वस्य बीजं परमासि माया। संमोहितं देवि समस्तमेतत् त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥ ५ ॥ विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु। त्वयैकया पूरितमम्बयैतत् का ते स्तुतिस्तव्य-परापरोक्तिः ॥ ६ ॥ सर्वभूता यदा देवी भुक्तिमुक्तिप्रदायिनी। त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः ॥ ७ ॥ सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते। स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ॥ ८ ॥ कलाकाष्ठादि-रूपेण परिणामप्रदायिनि। विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते ॥ ९ ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ १० ॥ सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि। गुणाश्रये गुणमये नारायणि नमोऽस्तुते ॥ ११ ॥ शरणागतदीनार्त-परित्राण-परायणे। सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ १२ ॥ हंसयुक्त-विमानस्थे ब्रह्माणीरूपधारिणि। कौशाम्भःक्षरिके देवि नारायणि नमोऽस्तु ते ॥ १३ ॥ त्रिशूलचन्द्राहिधरे महावृषभवाहिनि। माहेश्वरीस्वरूपेण

नारायणि नमोऽस्तु ते ॥ १४ ॥ मयूरकुक्कुटवृते महाशक्तिधरेऽनघे । कौमारीरूपसंस्थाने नारायणि नमोऽस्तु ते ॥ १५ ॥ शङ्खचक्रगदाशार्ङ्ग-गृहीत-परमायुधे । प्रसीद वैष्णवी रूपे नारायणि नमोऽस्तु ते ॥ १६ ॥ गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुन्धरे वराहरूपिणि शिवे नारायणि नमोऽस्तु ते ॥ १७ ॥ नृसिंहरूपेणोग्रेण हन्तुं दैत्यान् कृतोद्यमे । त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तुते ॥ १८ ॥ किरीटिनि महावज्रे सहस्रनयनोज्ज्वले । वृत्रप्राणहरे चैन्द्रि नारायणि नमोऽस्तु ते ॥ १९ ॥ शिवदूतीस्वरूपेण हतदैत्यमहाबले । घोररूपे महारावे नारायणि नमोऽस्तु ते ॥ २० ॥ दंष्ट्राकरालवदने शिरोमालाविभूषणे । चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते ॥ २१ ॥ लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टिस्वधे ध्रुवे । महारात्रि महाविद्ये नारायणि नमोऽस्तु ते ॥ २२ ॥ मेधे सरस्वतिवरे भूति बाभ्रवितामसि । नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते ॥ २३ ॥ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते । भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ २४ ॥ ए

तत्ते वदनं सौम्यं लोचनत्रयभूषितम्। पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते ॥ २५ ॥ ज्वालाकरालमत्युग्रमशेषासुरसूदनम्। त्रिशूलं पातु नो भीते र्भद्रकालि नमोऽस्तु ते ॥ २६ ॥ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत्। सा घण्टा पातु नो देवि पापेभ्योऽनस्सुतानिव ॥ २७ ॥ असुरासृग्वसापङ्क-चर्चितस्ते करोज्ज्वलः। शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥ २८ ॥ रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टान्। त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ २९ ॥ एतत्कृतं यत्कदनं त्वयाद्य धर्मद्विषां देवि महासुराणाम्। रूपैरनेकैर्बहुधात्ममूर्तिं कृत्वाम्बिके तत्प्रकरोति कान्या ॥ ३० ॥ विद्यासु शास्त्रेषु विवेकदीपे-ष्वाद्येषु वाक्येषु च का त्वदन्या। ममत्वगर्तेऽतिमहान्धकारे विभ्रामयत्येतदतीव विश्वम् ॥ ३१ ॥ रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबलानि यत्र। दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम् ॥ ३२ ॥ विश्वेश्वरी त्वं परिपासि विश्वं विश्वात्मिका

धारयसीति विश्वम् । विश्वेशवन्द्या भवती भवन्ति विश्वाश्रया ये त्वयि भक्तिनम्राः ॥ ३३ ॥ देवि प्रसीद परिपालय नोऽरिभीते र्नित्यं यथासुरवधादधुनैव सद्यः । पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्च महोपसर्गान् ॥ ३४ ॥ प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि । त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥ ३५ ॥ देव्युवाच ॥ ३६ ॥ वरदाहं सुरगणा वरं यं मनसेच्छथ । तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥ ३७ ॥ देवा ऊचुः ॥ ३८ ॥ सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि । एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥३९॥ देव्युवाच ॥ इत्थं यदा यदा बाधा दानवोत्था भविष्यति । तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥ ४० ॥ क्लीं ॥

इति श्रीभक्तिकौस्तुभे नारायणीस्तुति र्नाम अशीतितम् आह्निकः ।

क्लीं देव्युवाच ॥१॥ एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः । तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥ २ ॥ मधुकैटभनाशं च

महिषासुरघातनम् । कीर्तयिष्यन्ति ये तद्वधं शुम्भनिशुम्भयोः ॥ ३ ॥ अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः । श्रोष्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम् ॥ ४ ॥ न तेषां दुष्कृतं किञ्चित् दुष्कृतोत्था न चापदः । भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ॥ ५ ॥ शत्रुतो न भयं तस्य दस्युतो वा न राजतः । न शस्त्रानलतोयौघात् कदाचित्सम्भविष्यति ॥६॥ तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः । श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं हि तत् ॥ ७ ॥ उपसर्गानशेषांस्तु महामारीसमुद्भवान् । तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥ ८ ॥ यत्रैतत्पठ्यते सम्यङ्नित्यमायतने मम । सदा न तद्विमोक्ष्यामि सान्निध्यं तत्र मे स्थितम् ॥ ९ ॥ बलिप्रदाने पूजायामग्निकार्ये महोत्सवे । सर्वं ममैतच्चरितम् उच्चार्यं श्राव्यमेव च ॥ १० ॥ जानताऽजानता वापि बलिपूजां तथा कृताम् । प्रतीक्षिष्याम्यहं प्रीत्या वह्निहोमं यथा कृतम् ॥ ११ ॥ शरत्काले महापूजा क्रियते या च वार्षिकी । तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ॥ १२ ॥ सर्वा-

बाधाविनिर्मुक्तो धनधान्यसुतान्वितः। मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥ १३ ॥ श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः। पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ॥ १४ ॥ रिपवःसंक्षयं यान्ति कल्याणं चोपपद्यते। नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम् ॥१५॥ शान्तिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने। ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥ १६ ॥ उपसर्गाः शमं यान्ति ग्रहपीडाश्च दारुणाः। दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ॥ १७ ॥ बालग्रहाभिभूतानां बालानां शान्तिकारकम्। संघातभेदे च नृणां मैत्रीकरणमुत्तमम् ॥१८॥ दुर्वृत्तानामशेषाणां बलहानिकरं परम्। सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ॥ १९ ॥ श्रुतं हरति पापानि तथारोग्यं प्रयच्छति। रक्षां करोति भूतेभ्यो जन्मनां कीर्त्तनं मम ॥ २० ॥ अरण्ये प्रान्तरे वापि दावाग्निपरिवारितः। दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः ॥ २१ ॥ राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोऽपि वा पततसु चापि शस्त्रेषु संग्रामे भृशदारुणे ॥ २२ ॥ सर्वाबा-

धासु घोरासु वेदनाभ्यर्दितोपि वा । स्मरन् ममैतच्चरितं नरो मुच्येत सङ्कटात् ॥ २३ ॥ ऋषिरुवाच । एवं भगवती देवी सा नित्यापि पुनः पुनः । सम्भूय कुरुते भूप जगतः परिपालनम् ॥ २४ ॥ तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते । सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ॥ २५ ॥ व्याप्तं तयैतत्सकलं ब्रह्माण्डं मनुजेश्वर । महाकाल्या महाकाले महामारी स्वरूपया ॥ २६ ॥ सैवकाले महामारी सैव सृष्टिर्भवत्यजा । स्थितिं करोति भूतानां सैव काले सनातनी ॥ २७ ॥ भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा गृहे । सैवाभावे तथा लक्ष्मीर्विनाशायोपजायते ॥ २८ ॥ स्तुता संपूजिता पुष्पैर्धूपगन्धादिभिस्तथा । ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥ २९ ॥ क्लीं ।

इति श्रीभक्तिकौस्तुभे एकाशीतितम आह्निके देव्याश्चरित माहात्म्यं नाम प्रथमः परिच्छेदः ।

श्रीगणेशायनमः । श्रीशिव उवाच । देवि त्वं भक्तिसुलभे सर्वकार्यविधायिनि । कलौ हि कार्यसिद्ध्यर्थम् उपायं ब्रूहि यत्नतः ॥१॥ देव्युवाच ।

शृणु देव प्रवक्ष्यामि कलौ सर्वेष्टसाधनम्। स्नेहात्तव मया दुर्गा-सप्तश्लोकी प्रकाश्यते ॥ २ ॥ अस्य श्रीदुर्गासप्तश्लोकीस्तोत्रमन्त्रस्य नारायण-ऋषिः। अनुष्टुप्छन्दः। श्रीमहाकाली-महालक्ष्मी-महासरस्वत्यो देवताः। श्रीदुर्गा-सप्तश्लोकीपाठे विनियोगः ॥ ३ ॥ ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ ४ ॥ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि। दारिद्र्यदुःख-भयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ ५ ॥ सर्वमङ्गल-माङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ६ ॥ शरणागतदीनार्त्तपरित्राणपरायणे सर्वस्यार्त्तिहरे देवि नारायणि नमोऽस्तुते ॥ ७ ॥ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते। भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तुते ॥ ८ ॥ रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान्। त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ ९ ॥ सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि। एवमेव त्वया



कार्यमस्मद्वैरी विनाशनम् ॥१०॥ य एतत् परमं गुह्यं सर्वरक्षाविशारदम् । देव्या सम्भाषितं स्तोत्रं सदा साम्राज्यदायकम् ॥११॥ शृणुयाद्वा पठेद्वापि पाठयेद्वापि यत्नतः । परिवारयुतो भूत्वा त्रैलोक्यविजयी भवेत् ॥१२॥ श्रीदुर्गासप्तश्लोकी समाप्ता । शुभमस्तु ।

इति श्रीभक्तिकौस्तुभे एकाशीतितम आह्निके श्रीदुर्गासप्तश्लोकीनाम द्वितीयः परिच्छेदः ।

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोयमिति मां मत्वा क्षमस्व परमेश्वरि ॥ १ ॥ आवाहनं न जानामि न जानामि विसर्जनम् । पूजां चैव न जानामि क्षम्यतां परमेश्वरि ॥ २ ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वरि । यत् पूजितं मयादेवि परिपूर्णं तदस्तु मे ॥ ३ ॥ अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतं । तत् सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ ४ ॥ दुर्गे स्मृता हरसि भीतिमशेष जन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि । दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥५॥ त्वदधीनोस्म्यहं मात स्तत्कृपा मयि तिष्ठतु ।



यथा सम्पूर्णकामः स्याम् तद्विधेहि दयां कुरु ॥ ६ ॥ चणमात्रं न शक्नोमि जीवितुं त्वत्कृपां विना । न जीवन्ति- यथा मात जलं त्यक्त्वा जलेचराः ॥ ७ ॥ यदि स्यां तव पुत्रोऽहं माता त्वमम्ब मामकी । दयापयोधरस्तन्य-सुधाभि रेधयस्व माम् ॥ ८ ॥ पापिनामहमेवाग्र्यो दयालूनां त्वमग्रणीः । दयनीयो मदन्योस्ति तव कोऽत्र जगत्त्रये ॥ ९ ॥ विधिनाहं न सृष्टश्चेन्न स्यात्तव दयालुता । आमयो हि न सृष्टश्चेत् औषधस्य वृथोदयः ॥१०॥ आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणापरे शिवे । नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्त्ता जननीं स्मरामि ॥११॥ मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि । एवं ज्ञात्वा जगन्मातः यथायुक्तं तथाकुरु ॥१२॥ कामेश्वरि महादेवि सच्चिदानन्दविग्रहे । गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥१३॥ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥१४॥ यदक्षरं परिभ्रष्टं मात्राहीनं च यद्भवेत् । पूर्णं भवतु तत् सर्वं त्वत्प्रसादान्महेश्वरि ॥१५॥ यदसाङ्गं कृतं

कर्म्म जानता वाप्यजानता । म्माङ्गं भवतु तत् सर्वं श्रीहरेर्नामकीर्त्तनात् ॥१६॥ श्रीहरिः ॥ श्रीहरिः ॥ श्रीहरिः ॥ श्रीजगदम्बार्पणमस्तु । श्रीजगदम्बा सुप्रसन्ना भवतु ।

इति श्रीभक्तिकौस्तुभे एकाशीतितम आह्निके अपराधक्षमापणं नाम तृतीयः परिच्छेदः ।

पितरि निहते दैत्ये राजासनसुसंस्थितः । प्रह्लादः पीडयामास देवान् शत्रुविकर्षणः ॥ १ ॥ देवैर्युद्धं कृतं चोग्रं प्रह्लादस्तु पराजितः । जगाम स तपस्तप्तुं पर्वते गन्धमादने । प्रतिष्ठाप्य वलिं राज्ये विरोचनसुतं तदा ॥२॥ प्राप्य राज्यं वलिः श्रीमान् सुरैर्व्वैरं चकार ह । पराजिता स्ततो दैत्याः काव्यस्य शरणं गताः ॥ ३ ॥ काव्य उवाच। अद्यैवाहं महादेवं मन्त्रार्थं प्रव्रजामि वै । यूयं कालं प्रतीक्षध्वं कियन्तं दानवोत्तमाः ॥४॥ अथो देवाः परिज्ञाय काव्यं व्रतरतं तदा । ययु धृतायुधास्तत्र यत्र ते दानवाः श्रिताः ॥ ५ ॥ सुभीता दानवा जग्मुः शरणं काव्यमातरम् । दृष्ट्वा सा त्राससन्तप्तान् अभयं च ददौ किल ॥ ६ ॥ काव्यमातोवाच । न भेतव्यं न भेतव्यं भयं

नापि कदाचन। मत्समीपं स्थितानां च नूनं नास्ति कुतो भयम् ॥ ७ ॥ तत्रागताः सुराः सर्वे दैत्यान् हन्तुं समुद्यताः। वारिताः काव्यमात्रापि जघ्नुस्तानाश्रमस्थितान् ॥८॥ दैत्यानां निधनं दृष्ट्वा काव्यमातातिकोपिता। तपसा नोदयत् निद्रां देवा निद्रावशं गताः ॥ ९ ॥ इन्द्रं निद्राजितं दीनं दृष्ट्वा विष्णुरभाषत। मद्देहं प्रविशेन्द्र त्वं नये त्वाञ्च सुरोत्तम ॥१०॥ एवमुक्तस्ततोहीन्द्रः प्रविवेश जगन्मयम्। निर्भयो गतनिद्रश्च बभूव हरिरक्षितः ॥ ११ ॥ रक्षितं हरिणा दृष्ट्वा शक्रं चापि गतव्यथम्। काव्यमाता भृशं क्रुद्धा वचनञ्चेदमब्रवीत् ॥ १२ ॥ मघवन् नाशयाम्यद्य त्वामहं सह विष्णुना। पश्यतां सर्वदेवानाम् ईदृशं मे तपोबलम् ॥ १३ ॥ तदा सा स्तम्भयामास हरीन्द्रौ योगमायया। देवाः किलकिलाशब्दं चक्रुर्वै दीनमानसाः ॥ १४ ॥ क्रोशमानान् सुरान् दृष्ट्वा विष्णुं प्राह शचीपतिः। जह्येनां तरसा विष्णो यावन्नावाम् दहेत् रुषा ॥१५॥ ततश्च भगवान् विष्णुः सस्मार ह सुदर्शनम्। चक्रेण काव्यमातुश्च शिरश्छिच्छेद रंहसा ॥ १६ ॥ सुघोरं स्त्रीवधं दृष्ट्वा

चुक्रोध भगवान् भृगुः । वेपमानोऽतिदुःखार्त्तः प्रोवाच मधुसूदनम् ॥ १७ ॥ अश्रुतं वै कृतं पापं ज्ञात्वा विष्णो सुदुर्म्मते । मनसापि क्षमः कर्त्तुं न कोपि ब्राह्मणीवधम् ॥ १८ ॥ अनागाः स्त्रीः सदाऽवध्या सापि विष्णो त्वया हता । शपेऽहं त्वां दुराचारं अयथा चेशमानिनम् ॥ १९ ॥ सदाच्छलपरोऽसि त्वं कीटयोने दुराशय । ये च त्वां सात्विकं प्राहुः मुर्खास्ते मुनयः किल॥२० ॥ अवतारा ह्यसंख्याता स्तव सन्तु महीतले । शापात् गर्भभवं दुःखं प्रायो भुङ्क्ष्व सुराधम ॥ २१ ॥ इति शप्त्वा हरिं रोषात् आदाय स्खलितं शिरः । काये संयोज्य तरसा भृगुः प्रोवाच धर्मवित् ॥ २२ ॥ परिज्ञातो मया कृत्स्नो धर्मश्चाचरितो यदि । सत्येन तेन जीवेत सत्यात् परतरं न हि ॥ २३ ॥ अद्भिः सम्प्रोक्षिता देवी सद्यः सञ्जीविता पुनः । उत्थिता परमप्रीता भृगोर्भार्य्या शुचिस्मिता ॥ २४ ॥

इति श्रीभक्तिकौस्तुभे द्व्यशीतितम आह्निके विष्णुं प्रति भृगोः शापदानं नाम प्रथमः परिच्छेदः ।

कदाचिदभवत् काले दुर्भिक्षं क्षयकारकम् । गृहे गृहे शवानां च संख्या

नैवाभवत्तदा ॥ १ ॥ पुरुषोत्ति निजां नारीम् जननी च निजं शिशुम् । सुभिक्षं श्रुयतेऽथापि गौतमस्याश्रमेऽधुना ॥ २ ॥ एवं विमृश्य विप्राश्च कुटुम्बै र्गोधनैः सह । गौतमस्याश्रमं पूर्णं नानादिग्भ्यः समाययुः । अन्ये च प्राणिन स्तत्र बहवोपि समागताः ॥ ३ ॥ दत्वाभयं हि तान् सर्वान् ब्राह्मणान् प्राह गौतमः । भवतामाश्रमं ह्येतत् भवद्दासोस्मि सर्वदा ॥ ४ ॥ येषां दर्शनमात्रेण दुष्कृतं सुकृतायते । सर्वे ते पादरजसा प्रपुनन्त्याश्रमं मम ॥५॥ मदन्यो वापि को धन्यो भवतां समनुग्रहात् । का चिन्ता भवतां विप्रा मयि दासे विराजिते ॥ ६ ॥ समाश्रितान् समाश्वास्य गौतमो मुनिराट् ततः । गायत्रीं प्रार्थयामास भक्तिसन्नतकन्धरः ॥ ७ ॥ भक्त्या प्रीता जगन्माता प्रत्यक्षं दर्शनं ददौ । दत्त्वा पात्रं सदा पूर्णं गायत्री चाह गौतमम् । यं यं कामयसे पुत्र प्राप्स्यसि तत्क्षणात् तदा ॥ ८ ॥ न रोगादिभयं किञ्चित् नाभावो विद्यते क्वचित् । गौतमस्याश्रमे पूर्णे वेदमातृप्रसादतः ॥ ९ ॥ धनधान्यान्यलंकारान् पशूंश्चैव ददौ मुदा । पुत्रवत् द्वादशाब्दानि

चुक्रोध भगवान् भृगुः । वेपमानोऽतिदुःखार्त्तः प्रोवाच मधुसूदनम् ॥ १७ ॥ अश्रुतं वै कृतं पापं ज्ञात्वा विष्णो सुदुर्म्मते । मनसापि क्षमः कर्त्तुं न कोपि ब्राह्मणीवधम् ॥ १८ ॥ अनागाः स्त्रीः सदाऽवध्या सापि विष्णो त्वया हता । शपेऽहं त्वां दुराचारं अयथा चेशमानिनम् ॥ १९ ॥ सदाच्छलपरोऽसि त्वं कीटयोने दुराशय । ये च त्वां सात्विकं प्राहुः मुर्खास्ते मुनयः किल ॥ २० ॥ अवतारा ह्यसंख्याता स्तव सन्तु महीतले । शापात् गर्भभवं दुःखं प्रायो भुङ्क्ष्व सुराधम ॥ २१ ॥ इति शप्त्वा हरिं रोषात् आदाय स्खलितं शिरः । काये संयोज्य तरसा भृगुः प्रोवाच धर्मवित् ॥ २२ ॥ परिज्ञातो मया कृत्स्नो धर्मश्चाचरितो यदि । सत्येन तेन जीवेत सत्यात् परतरं न हि ॥ २३ ॥ अद्भिः सम्प्रोक्षिता देवी सद्यः सञ्जीविता पुनः । उत्थिता परमप्रीता भृगोर्भार्य्या शुचिस्मिता ॥ २४ ॥

इति श्रीभक्तिकौस्तुभे द्व्यशीतितम आह्निके विष्णुं प्रति भृगोः शापदानं नाम प्रथमः परिच्छेदः ।

कदाचिदभवत् काले दुर्भिक्षं क्षयकारकम् । गृहे गृहे शवानां च संख्या

नैवाभवत्तदा ॥ १ ॥ पुरुषोक्ति निजां नारीम् जननी च निजं शिशुम् । सुभिक्षं श्रुयतेऽथापि गौतमस्याश्रमेऽधुना ॥ २ ॥ एवं विमृश्य विप्राश्च कुटुम्बै गोधनैः सह । गौतमस्याश्रमं पूर्णं नानादिग्भ्यः समाययुः । अन्ये च प्राणिन स्तत्र वहवोपि समागताः ॥ ३ ॥ दत्वाभयं हि तान् सर्वान् ब्राह्मणान् प्राह गौतमः । भवतामाश्रमं ह्येतत् भवद्दासोस्मि सर्वदा ॥ ४ ॥ येषां दर्शनमात्रेण दुष्कृतं सुकृतायते । सर्वे ते पादरजसा प्रपुनन्त्याश्रमं मम ॥५॥ मदन्यो वापि को धन्यो भवतां समनुग्रहात् । का चिन्ता भवतां विप्रा मयि दासे विराजिते ॥ ६ ॥ समाश्रितान् समाश्वास्य गौतमो मुनिराट् ततः । गायत्रीं प्रार्थयामास भक्तिसन्नतकन्धरः ॥ ७ ॥ भक्त्या प्रीता जगन्माता प्रत्यक्षं दर्शनं ददौ । दत्त्वा पात्रं सदा पूर्णं गायत्री चाह गौतमम् । यं यं कामयसे पुत्र प्राप्स्यसि तत्क्षणात् तदा ॥ ८ ॥ न रोगादिभयं किञ्चिन् नाभावो विद्यते क्वचित् । गौतमस्याश्रमे पूर्णे वेदमातृप्रसादतः ॥ ९ ॥ धनधान्यान्यलंकारान् पशूंश्चैव ददौ मुदा । पुत्रवत् द्वादशाब्दानि

पुपोष मुनिपुङ्गवान् । अन्यानपि तथा जीवान् गर्वगन्धविवर्जितः ॥ १० ॥ ततो देवसभा पूर्णा यशसा गौतमस्य च । गत्वा तस्याश्रमं प्राह नारदश्च कृपानिधिः ॥११॥ धन्योऽसि त्वं मुनिश्रेष्ठ जगदम्बाप्रसादतः । मघोना गीयतेऽभीक्ष्णं त्वैतद्विरजो यशः । त्रिदिवाच्च मयायातं तवसन्दर्शनेप्सुना ॥१२॥ ततश्च नारदो हृष्टो गायत्रीमन्दिरं ययौ । ददर्श जगदम्बां च प्रेमोत्फुल्लविलोचनः ॥१३॥ तुष्टाव विधिवद्देवीं प्रेमप्रसरनिर्भरः । प्रययौ नारदो नाकं प्रशस्य च पुनः पुनः ॥१४॥ श्रुत्वा देवसभागीतं गौतमस्यामलं यशः । ब्राह्मणा मुनिसंपुष्टा बभूवुः क्लिन्नमानसाः ॥१५॥ सर्वथैव प्रकर्त्तव्यं यशो येन विहीयते । विचिन्त्य पालयामासुरन्तरं चैव दुर्धियः ॥१६॥ सुभिक्षं ह्यभवत् काले सर्वदेशेषु वै यदा । नष्टधीब्राह्मणास्तेऽपि पालकं शसुमुद्यताः ॥१७॥ मायया निर्मिता ह्येका मुमुर्षुर्ज्जरती च गौः । प्रेपिता चैव शालायां होमकाले मुनेस्ततः ॥१८॥ वारिता हुङ्कृतैः सापि प्राणांस्त-त्याज तत्क्षणात् । गौर्हतानेन दुष्टेन इत्येवं ते विचुक्रुशुः ॥१९॥ गौतमो

विस्मितोऽत्यर्थं होमं परिसमाप्य ह । समाधिना ततो ज्ञात्वा प्रकोपेनाभि
विज्वलन् । शशाप च ऋषीन् ईर्ष्या-संविपन्नधियश्च तान् ॥२०॥ वेदमातरि
गायत्र्यां तस्या ध्याने जपे मनोः । भवेत विमुखा यूयं विमूढा ब्राह्मणाधमाः
॥२१॥ वेदवेदोक्तकार्य्येषु ज्ञानमार्गे सदैव च । श्रौतस्मार्त्तसदाचारे
शिवशास्त्रे शिवेपि च ॥२२॥ रुद्राक्षे विल्वपत्रे च विशुद्धे चैव भस्मनि ।
देवीमन्त्रे तथा ध्याने पुनर्देव्याः कथासु च ॥२३॥ स्थाने देव्या अनुष्ठाने
तथा देव्याश्च कर्मणि । भवेत विमुखाः कामं सर्वदा ब्राह्मणाधमाः ॥२४॥
शिवदेवीतराणां च देवानां पर्य्युपासकाः । भवेत चाधमा मूढाः शङ्ख-
चक्रांकनान्विताः ॥२५॥ पितृमातृसुतभ्रातृ-कन्याविक्रयिणस्तथा । भार्य्या-
विक्रयिणस्तद्वद् वेदविक्रयिणः पुनः । धर्मविक्रयिणश्चापि भवेत ब्राह्मणा-
धमाः ॥२६॥ लज्जानतमुखा विप्रा अनुतापयुता स्ततः । दण्डवत् पतिताः
पादे ययाचुश्च पुनः पुनः । प्रसीदेति प्रसीदेति प्रसीदेति दयानिधे ॥२७॥
तानुवाच तदा विप्रान् गोतमोथ दयार्द्रधीः । कृष्णावतारपर्य्यन्तं कुम्भीपाके

भवेत् स्थितिः ॥२८॥ कुम्भीपाकादिनिर्गम्य प्रवृत्ते च कलौ युगे। ब्राह्मणा वै भविष्यन्ति गायत्रीभक्तिवर्जिताः। वेदधर्मविहीनाश्च परदाराभिलम्पटः ॥२९॥

इति श्रीभक्तिकौस्तुभे द्व्यशीतितम आह्निके गौतमोपाख्यानं नाम द्वितीयः परिच्छेदः।

अगस्त्य उवाच। राम राम महाबाहो शृणु गुह्यं सनातनम्। येन सर्वानरीन्वत्स समरे विजयिष्यसि ॥ १ ॥ आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम्। जयावहं जपेन्नित्यमक्षय्यं परमं शिवम् ॥ २ ॥ सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम्। चिन्ताशोकप्रशमनम् आयुर्वर्धनमुत्तमम् ॥ ३ ॥ रश्मिन्तं समुद्यन्तं देवासुरनमस्कृतम्। पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ४ ॥ सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः। एष देवासुरगणाँल्लोकान् पाति गभस्तिभिः ॥ ५ ॥ एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः। महेन्द्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥ ६ ॥ पितरो वसवः साध्या अश्विनौ मरुतो मनुः। वायुर्वह्निः प्रजाप्राण

ऋतुकर्त्ता प्रभाकरः ॥ ७ ॥ आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णसदृशो भानु-र्हिरण्यरेता दिवाकरः ॥ ८ ॥ हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् । तिमिरोन्मथनः शंभुस्त्वष्टा मार्तण्डकोंऽशुमान् ॥ ९॥ हिरण्यगर्भः शिशिर स्तपनोभास्करो रविः । अग्निगर्भो दितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १० ॥ व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः । घनवृष्टिरपांमित्रो विन्ध्यवीथी प्लवंगमः ॥ ११ ॥ आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः । कवि र्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥ १२ ॥ नक्षत्रग्रहताराणामधिपो विश्वभावनः । तेजसामपि तेजस्वी द्वादशात्मन् नमोऽस्तु ते ॥ १३ ॥ नमः पूर्वाय गिरये पश्चिमायाद्रये नमः । ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १४ ॥ जयाय जयभद्राय हर्यश्वाय नमो नमः । नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १५ ॥ नम उग्राय वीराय सारङ्गाय नमो नमः । नमः पद्मप्रबोधाय प्रचण्डाय नमोऽस्तु ते ॥१६॥ ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे

नमः ॥ १७ ॥ तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने । कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ १८ ॥ तप्तचामीकराभाय वह्नये विश्वकर्मणे । नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ १६ ॥ नाशयत्येष वै भूतं तदेव सृजति प्रभुः । पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥२०॥ एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः । एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥२१॥ वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च । यानि कृत्यानि लोकेषु तेष्वेव परमप्रभुः ॥२२॥ एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च । कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥२३॥ पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् । एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यपि ॥ २४ ॥ अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि । एवमुक्त्वा ततोऽगस्त्यो जगाम स यथागतम् । श्रीरामश्च महातेजा नष्टशोकोऽभवत् तदा ॥ २५ ॥ धारयामास सुप्रीतो राघवः प्रयतात्मवान् । आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवासवान् ॥ २६ ॥

इति श्रीभक्तिकौस्तुभे त्र्यशीतितम आह्निके आदित्यहृदयो नाम प्रथमः परिच्छेदः ।

नमः कारणमत्स्याय प्रलयाब्धिचराय च । हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १ ॥ अकूपाराय बृहते नमो मन्दरधारिणे । क्षित्युद्धारविहाराय नमः सूकरमूर्त्तये ॥ २ ॥ नमस्तेऽद्भुतसिंहाय साधुलोकभयापह । वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥ ३ ॥ नमो भृगूनां पतये दृप्तक्षत्रवनच्छिदे । नमस्ते रघुवर्याय रावणान्तकराय च ॥ ४ ॥ नमस्ते वासुदेवाय नमः सङ्कर्षणाय च । प्रद्युम्नायाऽनिरुद्धाय सात्त्वतां पतये नमः ॥ ५ ॥ नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने । म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥ ६ ॥ भगवञ्जीवलोकोऽयं मोहितस्तव मायया । अहंममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥ ७॥ यथाऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः । अभ्येति मृगतृष्णां वै तद्वत्त्वाहं पराङ्मुखः ॥ ८ ॥ नमस्ते वासुदेवाय सर्वभूतक्षयाय च । हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥ ९ ॥ कृष्ण कृष्णाप्रमेयात्मन् प्रपन्नभयभञ्जन । वयं त्वां शरणं यामो भवभीताः पृथग्धियः ॥ १० ॥ कृष्ण कृष्ण महावीर्य हे रामामितविक्रम । दावाग्निना

दह्यमानान् प्रपन्नांस्त्रातुमर्हथः । नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुम् । वयं हि सर्वधर्म्मज्ञ त्वन्नाथास्त्वत्परायणाः ॥ ११ ॥ कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन । प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥ १२ ॥ शान्तात्तव पदाम्भोजात् करुणा-दापवर्गिकात् । पश्यामि शरणं नान्यं विभ्यतां मृत्युसंसृतेः ॥ १३ ॥ न्याय्यो हि दण्डः कृतकिल्विषेऽस्मिन् तवावतारः खलनिग्रहाय । रिपोः सुतानामपि तुल्यदृष्टेः धत्से दमं पाकमुतानुशंसन् ॥ १४ ॥ अनुग्रहोऽयं भवता कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः । यद्दन्दशूकत्व-ममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव सम्मतः ॥१५॥ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन । धर्मोऽथ वा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ॥ १६ ॥ कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः । यद्वाञ्छया श्रीर्ललनाचरत् तपो विहाय कामान् सुचिरं धृतव्रता ॥ १७ ॥

इति श्रीभक्तिकौस्तुभे त्र्यशीतितम आह्निके अवतारस्तोत्रं नाम द्वितीयः परिच्छेदः ।

वासुदेवतरुच्छाया नातिशीतातितापदा । नरकद्वारशमनी सा किमर्थं न सेव्यते ॥ १ ॥ आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति ॥ २ ॥ यः कश्चिद्वैष्णवो लोके मिथ्याचारोऽप्यनाश्रमी । पुणाति सकलान् लोकान् सहस्रांशुरिवोदितः ॥ ३ ॥ ये नृशंसा दुरात्मानः पापाचाररतास्तथा । तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥ ४ ॥ भक्तप्रियो भक्तभर्त्ता भक्तिदो भक्तभक्तिमान् । भक्तस्तुतो भक्तपरो भक्तकीर्तिविवर्धनः ॥ ५ ॥ भावो भाव्यो भवकरो भावनो भवनाशनः । गोविन्दो गोपतिर्गोपः गोपीजनसुखप्रदः ॥ ६ ॥ भ्राम्यतामत्र संसारे नराणां कर्मदुर्गमे । हस्तावलम्बनं ह्येकं येन तुष्येज्जनार्दनः ॥ ७ ॥ सा हानिस्तन्महच्छिद्रं सा चान्धजडमूकता । यन्मुहूर्त्तं क्षणं वापि वासुदेवो न चिन्त्यते ॥ ८ ॥ कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे । हृदये यस्य गोविन्दो यस्य चेतसि नाच्युतः ॥ ९ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः

॥१०॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥११॥ जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम्। संसारसागरं तीर्त्वा स गच्छेद्वैष्णवं पदम् ॥१२॥ तज्ज्ञानं यत्र गोविन्दः सा कथा यत्र केशवः। तत्कर्म यत्तदर्थाय किमन्यैर्बहुभाषितैः ॥ १३ ॥ अन्तर्गतोऽपि वेदानां सर्वशास्त्रार्थपारगः। यो न सर्वेश्वरे भक्तस्तं विद्यात् पुरुषाधमम् ॥१४॥ शक्तौ नापि नमस्कारः प्रयुक्तश्चक्रपाणये। संसारतृणवर्गाणामुद्वेजनकरो हि सः ॥१५॥ न शृणोति गुणान् दिव्यान् देवदेवस्य चक्रिणः। स नरो बधिरो ज्ञेयो सर्वधर्मबहिस्कृतः ॥ १६ ॥ नाम्नि संकीर्तिते विष्णोर्यस्य न पुलकोद्गमः। कायो नरपशोस्तस्य विज्ञेयः कुणपोपमः ॥ १७ ॥ आलोड्य सर्वशास्त्राणि विचार्य्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥१८॥ किं तस्य दानैः कि तीर्थैः किं तपोभिः किमध्वरैः। यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ १९॥ गंगास्नानसहस्रेषु पुष्करस्नानकोटिषु। यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥ २० ॥ प्राणायामसहस्रैस्तु यत्पापं

नश्यति ध्रुवम् । क्षणमात्रेण तत्पापं हरेर्ध्यानात् प्रणश्यति ॥ २० ॥ क्षयो भवेद्यथा गाढतमसो भास्करोदये । तथैव कलुषौघस्य नामसंकीर्तनाद्धरेः ॥२२॥ आसीनो वा शयानो वा तिष्ठन् वा यत्र तत्र वा । नमो नारायणायेति मन्त्रैकशरणो भवेत् ॥ २३ ॥ संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे । कदाचित् केशवे भक्तिस्तद्भक्तैर्वा समागमः ॥ २४ ॥

इति श्रीभक्तिकौस्तुभे चतुरशीतितम आह्निके श्रीमद्भगवत्कैङ्कर्यमाहात्म्यं नाम प्रथमः परिच्छेदः ।

पूर्वयोनिसहस्राणि दृष्टान्येव ततो मया । आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥ १ ॥ जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः । यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ॥ २ ॥ एकाकी तेन दग्धोऽहं गतास्ते फलभोगिनः । अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् । यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम् ॥ ३ ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये नारायणम् ॥ ४ ॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्सांख्यं

योगमभ्यसे ॥ ५ ॥ अशुभत्तयकर्तारं फलमुक्तिप्रदायकम्। यदि योन्याः प्रमुच्येलं ध्याये ब्रह्म सनातनम् ॥ ६ ॥ श्रीरामरामरामेति ये जपन्ति च सर्वदा। तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः ॥ ७ ॥ मानसं वाचिकं पापं कर्मणा समुपार्जितम्। श्रीरामस्मरणेनैव तत्त्तणान्नश्यति ध्रुवम् ॥ ८ ॥ भजे भजे न्यारणपादपंकजं भगस्य कृत्स्नस्य परं परायणम्। भक्तेष्वलं भावितभूतभावनं भवापहं त्वा भवभावमीश्वरम् ॥९॥ भवाब्धि-पोतं भरताग्रजं तं भक्तप्रियं भानुकुलप्रदीपम्। भूतार्तिनाशं भुवना-धिपं तं भजामि रामं भवरोगवैद्यम् ॥ १० ॥ लोकाभिरामं रणरंगधीरं नित्यं चिदानन्दमयस्वरूपम्। सत्यं शिवं शान्तिमयं शरण्यं सनातनं राम-महं भजामि ॥ ११ ॥ वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्य-माद्यम्। अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात् ॥ १२ ॥ अशेषवेदात्मकमादिनाथमजं हरिं विष्णुमनन्तरूपम्। अपारसंवित्सुख-मेकरूपं परात्परं राममहं भजामि ॥ १३ ॥ तत्त्वस्वरूपं पुरुषं पुराणं स्व-

तेजसा पूरितविश्वमेकम् । राजाधिराजं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि ॥ १४ ॥ योगीन्द्रसंघैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवम् । नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात् ॥ १५ ॥ मुनीन्द्रगुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुम् । परात्परं यत्परमं पवित्रं नमामि रामं महतो महान्तम् ॥ १६ ॥ वरं न याचे रघुनाथयुग्मत्पादाब्जभक्तिः सततं ममास्तु । इदं प्रियं नाथ वरं प्रयाचे पुनः पुनस्त्वामिदमेव याचे ॥ १७ ॥ रघुवर तव मूर्तिर्मामके मानसाब्जे नरकगतिहरं ते नामधेयं मुखे मे । अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे भवजलनिधिमग्नं रक्ष मामार्तबन्धो ॥ १८ ॥ जयगोपवपुः कृष्ण जय गोपीजनप्रिय । जय गोवर्द्धनोद्धर्ता जय गोकुलवर्द्धन ॥ १९ ॥ जय रावणवीरघ्न जय चाणूरनाशन । जय वृष्णिकुलोद्द्योत जय कालीयमर्दन ॥ २०॥ जय सर्वजगत्साक्षिन् जय सर्वार्थसाधक । जय वेदान्तविद्वेद्य जय गोविन्द माधव ॥ २१ ॥ जय सर्वाश्रयाव्यक्त जय गोपाल चाच्युत । जय सूक्ष्म

चिदानन्द जय नित्यनिरञ्जन ॥ २२ ॥ जयाव्यय निरालम्ब जय राम सनातन । जयनाथ जगत्पूज्य जय विष्णो नमोऽस्तु ते ॥ २३ ॥ जयस्व गोविन्द महानुभाव जयस्व विष्णो जय पद्मनाभ । जयस्व सर्वज्ञ जयाप्रमेय जयस्व विश्वेश्वरविश्वमूर्ते ॥२४॥ जयति जयति देवो देवकीनन्दनोऽयं जयति जयति कृष्णो वृष्णिवंशप्रदीपः । जयति जयति मेघश्यामलः कोमलांगो जयति जयति पृथ्वीभारनाशो मुकुन्दः ॥२५॥

इति श्रीभक्तिकौस्तुभे चतुरशीतितम आह्निके श्रीमद्भगवद्विजयगीतिर्नाम द्वितीयः परिच्छेदः ।

तवैतत् सुतुष्टेरनन्यन्निमित्तं तवेच्छाप्रतीत्ता मनोधीशरीरा ।
तदेवैव धर्मं तदा वै हि वोधः तदेवैव भक्तिः तदा वै हि दास्यम् ॥ १ ॥
अहंकारनिष्ठो विमोघो हि वोधो भवेत्सर्वधर्मो विमोघो विमोघः ।
अहंकारनिष्ठा विमोघा हि भक्तिः अहंकारमुक्तो जनोवन्धमुक्तः ॥ २ ॥

